श्री काशी संस्कृत ग्रन्थमाला १०१

श्रीजगदीशतर्कालङ्कारकृतं

# सिद्धान्तलक्षणम्



अतसीपुष्पसङ्काशो न्यायो ज्ञेयो विपश्चिता ।
सिंहास्यो दक्षिणे सूत्रं ध्वजं वामकरे दधन् ॥

चौखम्भा संस्कृत संस्थान
पोस्ट बाक्स नं० १३९, वाराणसी

॥ श्रीः ॥

# काशी संस्कृत ग्रन्थमाला

१०३



श्रीजगदीशतर्कालङ्कारकृतं

# सिद्धान्तलक्षणम्

काशीस्थराजकीयसंस्कृतपाठशालीयन्यायशास्त्रप्रधानाध्यापक न्यायाचार्य पण्डित

श्रीशिवदत्तमिश्रगौडेन विरचितया समूलजागदीशीव्याख्यानसनाथ-

क्रोडपत्ररूपया गङ्गाख्यव्याख्यया बृहत्क्रोडपत्रसङ्ग्रहापराभिधया

विषमस्थलटिप्पण्या च संवलितम् ।

काशीस्थ नित्यानन्दवेदविद्यालये प्रधानाध्यापकेन

न्यायाचार्य काव्यतीर्थ पण्डित ढुण्ढिराजशास्त्रिणा संशोधितम्



चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० १३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : द्वितीय, वि० संवत् २०४०
मूल्य : रु० ४५-००



अन्य प्राप्तिस्थान
चौखम्भा विश्वभारती
पोस्ट बाक्स नं० ८४
चौक, ( चित्रा सिनेमा के सामने )
वाराणसी-२२१००१ ( भारत )
फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
101
*****

# SIDDHĀNTA LAKṢAṆAM

By
JAGADĪŚA TARKĀLAṂKĀRA
With Gaṅgā Commentary of Śivadatta Miśra
Cauḍa on entire Jāgadīśī having annotation
on difficult portions

Revised by
PT. ḌUṆḌHIRĀJA ŚĀSTRĪ

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publisher and Seller of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI (INDIA)

॥ श्रीः ॥

श्रीसद्गुरुः शरणम् ।

अथेदं प्रकाश्यते मुद्रापयित्वा सदीधितेर्गङ्गेशोपाध्यायकृततत्त्वचिन्तामणिग्रन्थस्थव्याप्तिसिद्धान्तलक्षणप्रकरणस्य व्याख्यानरूपं जगदीशतर्कालङ्कारकृतं सिद्धान्तलक्षणप्रकरणम् । अनुमानखण्डे व्युत्पत्तिमुपलिप्सूनां छात्राणां सौकर्याय श्रीमद्गुरुवर म० म० पं० श्रीवामाचरणभट्टाचार्यपादानामनुग्रहतोऽधिगतानां दुरवगाहानां विषयाणां सङ्कलनं कृत्वा बृहत्क्रोडपत्रसंग्रहापराभिधया विषमस्थलटिप्पण्या समलङ्कृत्य समूलजागदीशिव्याख्यानसनाथक्रोडपत्ररूपा गङ्गानाम्नी टीका श्रीजयकृष्णदासगुप्तमहोदयस्याऽनुरोधेन व्यरचि । गूढार्थतयाऽस्याः क्वचिज्जाताः प्रमादेनाऽशुद्धीः स्वयं संशोध्य पाठयिष्यन्ति विद्वांस इति प्रार्थयते—

सर्वाधिकारान् प्रकाशकाधीनान् विदधत्

विद्याभवनतः
आषाढ शुक्लाष्टम्यां
शनौ १९९०

विदुषामनुभावः--
श्रीशिवदत्तमिश्रः ।

# समर्पणम्

या याते जनके दिवं, कृतवती निःशोकमेनं जनम्

सा नान्हीति सुविश्रुता सुचरिता माताऽपि मे स्वर्गता।

को मे भूवलयेऽश्रुमार्जनविधौ दक्षो भवेत्साम्प्रतम्

इत्येवं बहुचिन्तितोऽपि सुधिया भ्रात्रा कृतार्थोऽस्म्यहम्॥१॥

विद्यानुरागिणे तस्मै श्रीविद्याधरशर्मणे॥

नम्रः समर्पयामीमां गङ्गाव्याख्यां सुनिर्मलाम्॥ २॥



# सिद्धान्तलक्षणचिन्तामणिः ।

**अत्रोच्यते प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति(१) तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।**

---

## सिद्धान्तलक्षणदीधितिः ।

प्रतियोग्यसमानाधिकरणेति । प्रतियोग्यसमानाधिकरणयद्रूपाविशिष्टस-

---

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥
नत्वा गुरुपदद्वन्द्वं ममाऽज्ञानतमोभिदम् ।
जगदीशवचोव्याख्यां व्याप्तिसिद्धांन्त आरभे ॥ २ ॥

नन्वित्यादिशङ्कायां सिद्धान्तमाह **अत्रोच्यते इति** । मयेत्यध्याहार्यम् , अस्मत्पदार्थो मणिकारः, तस्य समवेतत्वसम्बन्धेन तृतीयार्थकृतौ अन्वयः, तस्याश्च जन्यतासम्बन्धेन धात्वर्थव्यापारेऽन्वयः, धात्वर्थश्च ज्ञानानुकूलो व्यापारः, तस्य निरूपितत्वसम्बन्धेन कर्माख्यातार्थविषयतायामन्वयः, तस्याः स्वरूपसम्बन्धेन प्रथमान्तपदार्थव्याप्तौ अन्वयः, तथाच मणिकारसमवेतकृतिजन्यज्ञानानुकूलव्यापारनिरूपितविषयतावती जिज्ञासाविषयीभूता प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्याऽभिन्ना व्याप्तिरिति चिन्तामणिवाक्यार्थबोधः ।

**प्रतियोग्यसमानाधिकरणेति** । स्वप्रतियोग्यसमानाधिकरणेत्यर्थः, इदं चात्यन्ताभावविशेषणम् । यत्पदं हेतुपरम् । द्वितीययत्पदं साध्यपरम् । प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतीत्यत्र यत्पदोत्तरनञः प्रतियोगितावच्छेदकावच्छिन्नपदोत्तरं योजना । तत्पदं साध्यपरम् । द्वितीयं तत्पदं हेतुपरम् । तथाच प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं

---

(१) अथ भवतीतिपदमनर्थकम्, प्रतियोगितावच्छेदकावच्छिन्नं यन्नेत्युक्तावेव सामञ्जस्यात् । न च 'क्रियारहितं वाक्यं नास्ती'ति नियमाद् भवतिपदाध्याहार आवश्यक इति वाच्यम् । तादृशनियमस्य नैयायिकैरनभ्युपगमात्, अत एव शब्दशक्तिप्रकाशिकायां 'क्रियारहितं वाक्यं नास्तीति प्रवादो निर्युक्तिकत्वादश्रद्धेय' इत्युक्तं जगदीशेन । अत्र केचित् । अव्याप्यवृत्तिमद्भेदस्याव्याप्यवृत्तित्वोपगमे कपिसंयोगवतस्तादात्म्येन साध्यतायां द्रव्यत्वहेतौ हेतुमन्निष्ठभेदप्रतियोगितावच्छेदककपिसंयोगावच्छिन्नप्रतियोगिताकभेदस्य मूलावच्छेदेन वृक्षे सत्त्वात् अव्याप्तिरतस्तत्पदम् । भवतिपदोपादाने तु भूधात्वर्थस्याऽसाधारणधर्मरूपत्वेन निरुक्तप्रतियोगितावच्छेदकावच्छिन्नवृत्त्यसाधारणधर्माभावस्य वाक्यार्थतया वृक्षत्वादेरपि तादृशधर्मत्वेन तदभावस्याऽसत्त्वान्नाव्याप्तिरिति ।

पर्यवसितम् । वह्निमान् धूमादित्यादौ प्रतियोगिव्यधिकरणो धूमसमानाधिकरणश्च योऽत्यन्ताभावः घटो नास्तीति प्रतीतिसाक्षिकोऽभावः तादृशाभावस्य प्रतियोगितावच्छेदकावच्छिन्नो घटस्तद्भिन्नं साध्यं वह्निस्तत्सामानाधिकरण्यं धूमे इति लक्षणसमन्वयः । धूमवान् वह्नेरित्यत्र धूमाधिकरणाऽयोगोलकवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नएव धूम इति नातिप्रसङ्गः ।

[१]ननु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताशून्यसाध्यसामानाधिकरण्यम् अथवा तादृशाभावप्रतियोगिताश्रयं यन्न भवतीत्येवोच्यतां किमवच्छेदकावच्छिन्नत्वनिवेशेनेति चेन्न । 'तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं तेन सम्बन्धेन वृत्तिमत्येव प्रतियोगिनि स्वीक्रियते' इति नियमात् समवायेन प्रमेयस्य साध्यतायां भावत्वहेतावतिव्याप्तिः, प्रतियोग्यसमानाधिकरणो भावत्वसमानाधिकरणो यः समवायेन प्रमेयाभावस्तदीयसमवायसम्बन्धावच्छिन्नप्रतियोगिताश्रयसमवेतप्रमेयभिन्नत्वस्य गगनसाध्ये असमवेतप्रमेये सत्त्वात् (१) ।

---

(१) न च साध्यतावच्छेदकसम्बन्धेन साध्यसामानाधिकरण्यस्य हेतौ विरहान्नातिव्याप्तिरिति वाच्यम् । सम्बन्धसामान्येनैव साध्यसामानाधिकरण्यस्य यदिचेत्यादिनाऽग्रे जगदीशेन प्रतिपादयिष्यमाणत्वात् । किञ्चोक्तस्थले हेतुव्यापकत्वापत्तेस्तथाप्यनुद्धारात्, तथाविधव्याप्तिग्रहात्तन्नानुमित्यापत्तिरूपातिव्याप्तिपदार्थस्याऽवारणाच्च । नचैतन्मतस्वीकारे समवायसम्बन्धावच्छिन्नप्रतियोगित्वातिप्रसक्ततया प्रमेयत्वमवच्छेदकमिति प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानेऽपि अतिव्याप्तितादवस्थ्यमिति वाच्यम् । तत्सम्बन्धावच्छिन्नप्रतियोगित्वाभाववान् यस्तत्सम्बन्धेन वृत्तिमत्पदार्थस्तद्वृत्तिधर्म एवाऽतिप्रसक्तपदार्थः, तथाविधातिप्रसक्तत्वस्य प्रमेयत्वे विरहेणाऽतिव्याप्तिविरहादिति । किंवा वह्निमान् धूमादित्यादौ वह्निघटोभयाभावमादायाऽव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेश इति ध्येयम् ।

अथवा हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नं साध्यमिति व्यभिचारज्ञानदशायां तादृशप्रतियोगिताशून्यसाध्यसामानाधिकरण्यमित्याकारकव्याप्तिज्ञानसम्भवादनुमित्यापत्तिरित्यपि कश्चित् । वस्तुतस्तु तत्तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्त्याऽवच्छेदकत्वानुसरणस्यावश्यकतया चिन्तामणेस्तादृशबोधो न स्यात् । अस्माकन्तु निरूढलक्षणायाः शक्तितुल्यत्वेन वक्ष्यमाणरीत्या तस्यैवार्थतो लाभात्, भवन्मते स्वारसिकलक्षणादरे महागौरवं स्यादिति ।

अपरे तु अवच्छेदकावच्छिन्नत्वानुपादाने समवायेन द्रव्यसाध्यकव्यभिचारिण्यतिव्याप्तिः, तादृशाभावप्रतियोगित्वं समवेतद्रव्यस्यैवेति स्वीकारात् तच्छून्यत्वस्य गगनादौ सत्त्वादिति । न च सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य साध्यतावच्छेदके निवेशादेव द्रव्याभावमादाय तत्र नातिव्याप्तिरिति वाच्यम् । गगनवान् तज्ज्ञानत्वादित्यादावव्याप्तेः, गगनव्यक्त्यभावप्रतियोगित्वाभाववत्त्वस्य साध्यतावच्छेदके विरहात् । यद्यपि सिद्धान्तेऽपि प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वस्य साध्ये विरहेण तत्राव्याप्तितादवस्थ्यम्, तथापि अनुपदमेव प्रतियोगिवैयधिकरण्यपरिष्कारेणाव्याप्तिवारणसम्भवात् । अस्मन्मतेऽपि तनैव वारणं सम्भवतीति तु न, प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तेः, तादृशसम्बन्धेन स्वाभाववत्त्वस्य साध्यतावच्छेदके विरहात् । न च स्वावच्छेदकत्वमपि निवेशनीयम्, तावतैव तत्राव्याप्तिवारणसम्भवादिति वाच्यम् । गौरवेणेत्थं शङ्कितुमशक्यत्वादित्याहुः । तच्चिन्त्यम् । सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावमादायाव्याप्तिः स्यात् । तस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वाभावाद्वारणेऽपि वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ वह्न्यभावमादायाव्याप्तिः । न च प्रतियोगिताश्रयाधिकरणत्वसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वोभयाभाववत्त्वस्यैव प्रतियोगिवैयधिकरण्यपदार्थतया न वह्न्यभावमादायाऽव्याप्तिरिति वाच्यम् । तथासति प्रकृतेऽपि गगनवान् तज्ज्ञानत्वादित्यादावव्याप्त्यभावापत्तेः, तत्राप्युक्तरीत्या प्रतियोगिवैयधिकरण्याभावादिति ।

[२]अथाग्र 'यद्धर्मावच्छिन्नवाचकपदोत्तरं नञादिपदं श्रूयते तेन तद्धर्मावच्छिन्नप्रतियोगिताकभेदावगाहनं क्रियते' इति नियमात्(१) साध्यभेद एव प्रतियोगितावच्छेदकावच्छिन्ने विधेयः। न च मूलकारस्य तादृशनियमविपरीतार्थे कथं तात्पर्यं ज्ञायते इति वाच्यम्। 'वह्नित्वावच्छिन्नस्य सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नत्वादि'ति जगदीशग्रन्थस्वारस्येन यत्पदार्थे एव प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वस्य विधेयत्वावगमादिति चेन्न। तादृशनियमानुरोधे सति तादृशप्रतियोगितावच्छेदकावच्छिन्नं यद्भिन्नं भवति तत्सामानाधिकरण्यमित्येव लक्षणशरीरं स्यात्तथाच धूमवान् वह्नेरित्यादावतिव्याप्तिः तादृशप्रतियोगितावच्छेदकावच्छिन्ने घटे धूमभेदसत्त्वात्, अतः प्रतियोगितावच्छेदकावच्छिन्नत्वावच्छेदेन साध्यभेदो निवेशनीयः, तदर्थञ्च तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापको योभेदस्तत्सामानाधिकरण्यमिति, एवं च धूमवान् वह्नेरित्यत्र तादृशप्रतियोगितावच्छेदकावच्छिन्ने धूमे साध्यभेदविरहान्नातिव्याप्तिः। नच व्यापकत्वनिवेशे गौरवमिति वाच्यम्। भवन्मतेऽपि प्रतियोगितावच्छेदकावच्छिन्नघटभेदसत्त्वादतिव्याप्तिवारणाय व्यापकत्वार्थकवीप्सा(२)दरात्। न

---

(१) न च तादृशनियमे मानाभाव इति वाच्यम्। पटभेदतात्पर्येण प्रयुक्ताद् घटः पटो नेति वाक्याद् घटभेदबोधस्यापि प्रमात्वापत्तेः। न च शाब्दबोधं प्रति तात्पर्यज्ञानस्यापि कारणतया कथं घटभेदबोधस्य प्रमात्वापत्तिरिति वाच्यम्। तादृशनियमास्वीकारे द्रव्यं न घट इति वाक्यस्य प्रमात्मकबोधजनकत्वात्मकप्रामाण्यापत्तेः। न च प्रतियोग्यवृत्तिधर्मस्यैव भेदानुयोगितावच्छेदकत्वनियमात् असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयनियमाच्च न तादृशवाक्यप्रामाण्यापत्तिरिति वाच्यम्। उभयभेदस्य केवलान्वयितया घटपटोभयं प्रमेयन्नेति वाक्यस्य प्रामाण्यापत्त्या तादृशनियमस्वीकारादिति नव्याः।

न च नियमो व्याप्तिः, तस्याः पक्षसाध्यादिसापेक्षतया प्रकृते तद्विरहेण कथं नियमत्वमिति वाच्यम्। 'यन्नञादिपदं यद्धर्मावच्छिन्नवाचकपदोत्तरत्ववद्भवति तत् तद्धर्मावच्छिन्नप्रतियोगिताकभेदबोधकत्ववद् भवतीति' नियमात्। किं वा एतेनाऽऽकाङ्क्षाज्ञानस्य कारणत्वं सूचितम्। तथा च प्रातियोगित्वसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपितनञर्थभेदनिष्ठविशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति तत्पदपस्वरूपाऽऽकाङ्क्षाज्ञानस्य कारणत्वम्। तत्पदवत्ता च स्वाव्यवहितोत्तरत्वसम्बन्धेन। न च घटानधिकरणं भूतलमित्यादिप्रयोगे घटाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवद्भूतलमिति बोधस्यानुभविकत्वेन नियमस्य तथाविधाऽऽकाङ्क्षाया वाऽप्रयोजकत्वमिति वाच्यम्। समासातिरिक्तस्थले एव तादृशनियमात्। अत्र केचित्। 'यद्धर्मावच्छिन्नवाचकपदोत्तरत्वेनाऽनुसन्धीयमानं यन्नञिति तत् तद्धर्मावच्छिन्नप्रतियोगिताकभेदप्रयोजकत्ववद् भवतीत्येव नियमः, अन्यथा घटत्वावच्छिन्नप्रतियोगिताकभेदतात्पर्येण घटः पटो नेति वाक्यात्तादृशशाब्दबोधो न स्यात्। एवं लक्षणवाक्येऽपि योजनया न नियमविरोध इति प्राहुः।

अथवा यत्तत्पदऽघटितस्थले एव एतादृशनियमः, अन्यथा यो यो न वन्हिमान् स स न धूमवानिति व्यतिरेक्युदाहरणवाक्याद् नायं तदण्डवानिति वाक्याच्च वन्हिमद्भेदव्यापकधूमवद्भेदवान् तदण्डवद्भेदवानिति शाब्दबोधानुपपत्तेः, तथाच प्रकृतेऽपि यत्तद्पदघटितत्वान्नैतादृशनियमावसरः।

यद्वा नीलो भवति घट इति वाक्ये भूधात्वर्थस्तादात्म्यम्, तिबर्थ आश्रयत्वं, तथाच नीलतादात्म्याश्रयो घट इति बोधः, नञ्समभिव्याहारस्थले नीलो न भवति घट इत्यादावपि नीलतादात्म्याभाववान् घट इत्यन्वयबोधस्याऽनुभवसिद्धत्वात्, न तु घटतादात्म्याभावस्य नीले बोधः, तथाच नञ्रहितस्थले परस्परान्वयबोधे मुख्यविशेष्यत्वं यस्य नञ्समभिव्याहारस्थलेऽपि मुख्यविशेष्यत्वं तस्यैवेति व्युत्पत्तिः क्रियासमभिव्याहारस्थले नैतादृशनियम इति अत्रापि यदर्थस्यैव विशेष्यत्वादिति ध्येयम्।

(२) एव च हेतुसमानाधिकरणो यो योऽभावस्तत्प्रतियोगितावच्छेदकत्व वाच्यम् अनुगमस्तु

च विलक्षणप्रतियोगितासम्बन्धेन तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदनिवेशो नतु सामान्याभावनिवेश इति वाच्यम्। 'अन्यूनवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वमि'ति नियमेन प्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नानुयोगिताकसाध्यभेदस्यैव निवेशात्। न चोभयपदस्य केवलान्वयितया साध्यघटोभयभेदस्य प्रतियोगितावच्छेदकावच्छिन्ने सत्वादतिव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्यैव निवेश्यत्वात्। एवं च प्रमेयवान् वाच्यत्वादित्यत्र प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्ध्याऽव्याप्तिः स्यादिति। न च यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्य तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकत्वं तद्धर्मावच्छिन्नसामानाधिकरण्यं विवक्षणीयम्, एवञ्च प्रमेयत्वसमानाधिकरणवाच्यत्वत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रसिद्धत्वान्नाव्याप्तिरिति वाच्यम्। तादृशलक्षणस्योदक्षरत्वात्(१) क्लिष्टकल्पनापत्तेश्चातो नञ्व्यत्यासः कृत इति ध्येयम्।

[ ३ ] ननु नञ्व्यत्यासेऽपि तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदनिवेश आवश्यकः, अन्यथोभयभेदमादाय व्यभिचारिमात्रेऽतिव्याप्तिः स्यात्, तथाच समवायेन प्रमेयसाध्यकभावत्वहेतुकव्यभिचारिणि प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्ध्याऽन्याभावमादायातिव्याप्तेरपि संभवे तद्व्यक्तिर्नास्तीतिप्रतीतिसिद्धाभावमादायाऽव्याप्तिमात्रदानं सन्दर्भविरुद्धमिति चेन्न। तादृशप्रतियोगितावच्छेदकावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्साध्यसामानाधिकरण्येत्यर्थकरणान्न दोषः। तादृशकूटवत्ता च स्ववृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वसम्बन्धेन, तथाच तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्य साध्ये विरहात् नातिव्याप्तिः।

केचित्तु तादृशप्रतियोगितावच्छेदकताव्यापककूटत्वावच्छिन्नवत्साध्यसामानाधिकरण्येत्याद्यर्थकरणान्नातिव्याप्तिः। कूटत्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिरूपम्। तत्र तादृशावच्छेदकताव्यापकत्वं च स्वाश्रयनिरूपितप्रतियोगितावच्छेदकत्वसंबन्धेन। स्वं कूटत्वम्। तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य प्रमेयत्वे सत्वेन तादृशकूटवत्त्व-

---

हेत्वधिकरणवृत्त्यभावविशिष्टान्यत्वं साध्यतावच्छेदके विवक्षणीयम्, वै० स्वप्रतियोगितावच्छेदकत्वसम्बन्धेन, हेत्वधिकरणवृत्तित्वञ्चाऽभावे स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वसम्बन्धेनेति।

(१) एतेन यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटनिवेशोऽपि निरस्तः। नञ्समभिव्याहारस्थले येन रूपेण यस्योपस्थितिस्तद्रूपावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तस्यान्वयः नतु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेनेति नियमविरोधात्, तादात्म्येन प्रमेयसाध्यकसद्धेतौ अव्याप्तेश्च तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्य प्रतियोगितावच्छेदकावच्छिन्नत्वाव्यापकत्वात्।

एतेन तथापि समवायेन प्रमेयसाध्यकभावत्वहेतुकव्यभिचारिणि यत्पदार्थे तादृशप्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या घटाभावीयप्रतियोगितावच्छेदकावच्छिन्नभेदस्यैव लक्षणघटकत्वेनाऽतिव्याप्तिवारणार्थं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकसाध्यसामानाधिकरण्यमित्येवं विवक्षणीयम्, व्यापकतावच्छेदकसम्बन्धश्च स्ववृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदवत्त्वस्वरूपः, स्वं साध्यम्, एवं च प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिवारणसम्भवे नञ्व्यत्यासोऽनुचित इति परास्तम्।

मानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यम्,

---

## सिद्धान्तलक्षणजागदीशी ।

वह्नित्वावच्छिन्नस्य सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नत्वादव्याप्तिरिति अन्यथा व्याचष्टे(१) प्रतियोगितानवच्छेदको यो धर्म इति । तथाच प्रतियोगितावच्छेदकेत्यस्य भावप्र-

---

स्योक्तसंबन्धेन तादृशावच्छेदकताव्यापकत्वविरहेणातिव्याप्तिविरहादिनि वदन्ति । वस्तुतस्तु तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकरूप॥सिद्धरूपत्वावच्छिन्नवत्साध्यसामानाधिकरण्यमित्यर्थेऽदोषात् । अपरे तु ये यत्र दोषाः संभवन्ति ते किं कथायां सर्वे समुद्भाव्याः, न, किन्तु यथा–काममेक इति सत्प्रतिपक्षलेखनस्वरसादेकदोषोप्याद‍रणीय इति वदन्ति ।

वह्नित्वावच्छिन्नस्य सर्वस्यैवेति । सर्वस्यैव वह्नेरित्यर्थः । तत्तद्व्यक्तित्वावच्छिन्नत्वादिति । तत्तद्व्यक्तित्वावच्छिन्नाभिन्नत्वाभावादित्यर्थः । अव्याप्तिरिति । वह्निमान् धूमादित्यत्र सर्वेषामेव वह्नीनां धूमसमानाधिकरणो यथालनीयन्यायेन तत्तद्व्यक्तिर्नास्तीत्यभावस्तत्प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वाभावादव्याप्तिरिति यावत् । अन्यथा व्याचष्टे–साध्ये प्रतियोगिभेदमुपेक्ष्य साध्यतावच्छेदके प्रतियोगितावच्छेदकभेदं निवेशयति । तथाच हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः । वह्निमान् धूमादित्यत्र धूमसमानाधिकरणाऽत्यन्ताभावप्रतियोगितावच्छेदकं तद्व्यक्तित्वं, तद्भिन्नत्वस्य वह्नित्वे सत्त्वान्नाव्याप्तिः ।

[१]नन्वेवमपि धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकघटत्वभेदस्य धूमत्वघटोभयभेदस्य वा धूमत्वे सत्त्वेनाऽतिव्याप्तिरिति चेन्न । प्रतियोगितानवच्छेदकेत्यनेन तादृशप्रतियोगितावच्छेदकसामान्यभेदो विवक्षणीयः । तदर्थश्च प्रतियोगितावच्छेदकत्वेतरधर्मानवच्छिन्नप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेद इति । एवं च मूलेऽपि प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र प्रतियोगितावच्छेदकपदं प्रतियोगितावच्छेदकत्वपरम्, अवच्छिन्नपदमवच्छिन्नप्रतियोगिताकपरम्, एवं चैतादृशार्थलाभार्थमेव प्रतियोगितावच्छेदकं यन्न भवतीति नोक्तम्, तदेवाह तथाचेत्यादिना ।

[२]नन्वत्र रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादायाऽव्याप्तिवारणायाऽग्रे प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया तद्व्यक्तित्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धावच्छिन्नत्वविरहेण तत्तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिविरहादनवच्छेदकत्वानुसरणं व्यर्थम् । न च

---

(१) शब्दशक्यार्थत्यागेन तात्पर्यविषयार्थप्रतिपत्त्यनुकूलप्रतियोगितानवच्छेदको यो धर्म इत्यादिग्रन्थाभिन्नव्यापारानुकूलकृतिमानित्यर्थः ।

धाननिर्देशतयाऽवच्छिन्नपदस्याऽवच्छिन्नप्रतियोगिताकपरतया तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभिन्नत्वं लभ्यते इति मूले नावच्छिन्नपदस्य वैयर्थ्यमिति ध्येयम्।

---

तद्व्यक्तित्वं तद्व्यक्तिगतरूपमेव, तथाच वह्निवृत्तिरूपनिष्ठावच्छेदकतायां समवायसंबन्धावच्छिन्नत्वसत्त्वादव्याप्तिरिति वाच्यम्। वह्नौ उत्पत्तिकालावच्छेदेन रूपस्याऽसत्त्वादुत्पत्तिकालावच्छेदेन तद्व्यक्तित्वं नास्तीति प्रत्ययप्रसङ्गात्। न च तथापि प्रकृते तद्व्यक्तित्वं तद्व्यक्त्यनुयोगिकसमवायेन वह्नित्वमेवेति तद्व्यक्तित्वावच्छिन्नाभावमादायाऽव्याप्तिसङ्गतिरिति वाच्यम्। साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्येतरवारकपर्याप्तिनिवेशेनैव तद्वारणात्, अन्यथाऽनवच्छेदकत्वानुसरणेऽपि तद्दोषतादवस्थ्यम् तादृशाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वात्। न च मूललक्षणे प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव प्रतियोगितावच्छेदकावच्छिन्नत्वं निवेशनीयम्, तावतापि रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टज्ञानभिन्नत्वस्य साध्ये रूपे सत्त्वेनाऽव्याप्तिवारणसंभवे साध्यताघटकसंबन्धावच्छिन्नत्वं न निवेशनीयमिति वाच्यम्। स्वरूपसंबन्धेन गुणकर्मभेदविशिष्टसत्त्वस्य समवायेन साध्यतायां जातिमत्त्वादिहेतौ सामानाधिकरण्यसंबन्धावच्छिन्नगुणकर्मान्यत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तिवारणाय तन्निवेशस्यावश्यकतया व्यर्थमेवानवच्छेदकत्वानुसरणमिति चेन्न।

वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ हेतुसमानाधिकरणशुद्धसमवायेन वह्नित्वविशिष्टाभावीयप्रतियोगितावच्छेदकताया अपि साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वादव्याप्तिवारणाय, एवं विषयितात्वसमवायत्वैतदन्यतरसंबन्धेन रूपत्वविशिष्टस्य समवायेन साध्यतायामात्मघटान्यतरत्वहेतौ आत्मघटान्यतरत्वाधिकरणे घटे विषयितया रूपत्वविशिष्टस्य, आत्मनि च समवायेन रूपत्वविशिष्टाभावमादायाऽव्याप्तिवारणाय न्यूनवारकपर्याप्तिनिवेशः कार्यः। समवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टाभावमादायाऽव्याप्तिवारणायेतरवारकपर्याप्तिर्निवेश्या। तथाच साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यदवच्छेदकत्वम् तादृशावच्छेदकताकप्रतियोगिताकाभाव इत्यर्थः। रूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। एवं च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यत्वे धूमादिहेतौ तादृशसंबन्धावच्छिन्नावच्छेदकत्वाऽप्रसिद्ध्याऽव्याप्तिवारणाय (१)स्वानवच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकतावि-

---

(१) अथात्र स्वानवच्छेदकसम्बन्धावच्छिन्नत्वं यदि स्वावच्छेदकसंसर्गभिन्नसंसर्गावच्छिन्नत्वं तदा वह्निमान् धूमादित्यत्र तद्वह्न्यनुयोगिकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तिः, एवं पूर्वोक्तान्यतरसम्बन्धेन रूपत्वादेः साध्यतावच्छेदकस्थले प्रत्येकेन समवायेन रूपत्वविशिष्टाभावमादायाऽव्याप्तिरतः स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तिसंसर्गताकत्वमवच्छेदकतायां विवक्षणीयम्। अवृत्तित्वघटकवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथाच तादृशरूपं सम-

शिष्टावच्छेदकत्वानिरूपकत्वमेव प्रतियोगितायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाव- च्छेदकतानिरूपकत्वस्यार्थः । तथाच तद्व्यक्तित्वनिष्ठावच्छेदकतायां स्वसामानाधिकरण्यविर- हेण तद्व्यक्त्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसङ्गतिरिति ध्येयम् ।

[ ३ ] केचित्तु वह्नित्वावच्छिन्नवान् धूमादित्यत्राऽव्याप्तिः, अत्र साध्यतावच्छे- दकताघटकसम्बन्धः स्वरूपसम्बन्धः तत्संबन्धावच्छिन्नत्वस्य तद्व्यक्तित्वावच्छिन्ना- भावप्रतियोगितावच्छेदकतायां सत्त्वात् । अत एव वह्नित्वावच्छिन्नत्वेन रूपेण साध्यतालाभाय 'वह्नेः सर्वस्ये'त्यनुक्त्वा 'वह्नित्वावच्छिन्नस्ये'त्युपात्तम्, अन्यथाऽग्रे साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिवेशस्य ध्रौव्ये तत्तद्व्यक्तित्वावच्छिन्नप्रतियो- गिताकाभावस्याऽतथात्वेनाऽव्याप्तिदानाऽसङ्गतिः, विशेषरूपेण संसर्गताविरहेण वह्नि- त्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकाऽव्याप्तिविरहेण पारिभाषिकार्थकरणस्यानावश्य

---

वायत्वविषयितान्य अन्यतरत्वगतसमुदायत्वं, तदवृत्तिसंसर्गताकत्वस्य रूपत्वनिष्ठावच्छेदकतायां सत्त्वेन निरु- क्तोभयसम्बन्धेन साध्यतावच्छेदकताविशिष्टत्वस्य रूपत्वनिष्ठावच्छेदकतायां सत्त्वात्तदनिरूपकत्वस्य तादृ- शप्रतियोगितायां विरहेणाऽव्याप्तिविरहात् । ननु प्रमेयप्रतियोगिकस्वरूपेण प्रमेयविशिष्टस्य स्वरूपेण सा- ध्यतायां वाच्यत्वादिहेतौ समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतायामुक्तोभयसम्बन्धेन प्रमेयनिष्ठाव- च्छेदकताविशिष्टत्वस्य सत्त्वात् साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वस्याऽप्रसिद्ध्याऽव्याप्तिः । नच स्वसामानाधिकरण्यपदेन स्वव्यापकत्वं निवेशनीयम्, एवं च समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदक- तायां प्रमेयत्वावच्छिन्नावच्छेदकताव्यापकत्वविरहेण वैशिष्ट्याभावात् विशिष्टा याऽवच्छेदकता तदनिरूपित- त्वस्य घटत्वावच्छिन्नप्रतियोगितायां सत्त्वान्नानुपपत्तिरिति वाच्यम् । प्रत्येकेन निखिलघटत्वपटत्वादिनिष्ठप्र- तियोगितावच्छेदकतायां प्रमेयत्वावच्छिन्नावच्छेदकताव्यापकत्वविरहेणोभयसम्बन्धेन साध्यतावच्छेदकताव- शिष्टावच्छेदकत्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यात् । न च समवायस्वरूपादिसम्बन्धावच्छिन्नप्रमेयनिष्ठावच्छेदकता- कसंयोगादिसम्बन्धावच्छिन्नप्रतियोगितानिरूपितप्रमेयनिष्ठावच्छेदकतायामेव प्रसिद्धिरिति वाच्यम् । अवच्छेदकत्वस्यावच्छेदकभेदेन भिन्नतया प्रत्येकेन निखिलप्रमेयनिष्ठावच्छेदकतायां साध्यतावच्छेदकता- समानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य सत्त्वेन तादृशानवच्छेदकत्वरूपव्यापकताविरहेण तद्दो- षतादवस्थ्यात् । न च व्यापकत्वमत्र न भेदघटितमपि तु साध्यतावच्छेदकतासमानाधिकरणा- त्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, तथाच तादृशानवच्छेदकं यत्प्रमेयत्वावच्छिन्नावच्छेद- कतात्वं तद्वत्त्वस्य तत्र सत्त्वान्नानुपपत्तिरिति वाच्यम् । तादृशावच्छेदकप्रमेयत्ववत्त्वस्य सर्वत्र सत्त्वेन साध्यताव- च्छेदकव्यापकत्वस्य समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतायां सत्त्वेन साध्यतावच्छेदकताविशि- ष्टावच्छेदकत्वानिरूपितत्वस्य प्रतियोगितायामप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वादिति चेन्न ।

साध्यताविशिष्टप्रतियोगिताकाभावभिन्नत्वस्यैव फलितार्थत्वात् । वै० स्वनिरूपितावच्छेदकताव्यापकत्व- स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयस- म्बन्धेन, रूपवृत्तित्वं च स्वनिरूपितावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य- नुयोगितानवच्छेदकत्वसम्बन्धेन, व्यापकता च स्वनिरूपितावच्छेदकतात्वसम्बन्धेन, स्वं प्रतियोगिता, तथा च प्रमेयत्वावच्छिन्नावच्छेदकताव्यापकत्वं समवायस्वरूपादिसम्बन्धावच्छिन्नप्रमेयनिष्ठावच्छेदकताकसंयोग- सम्बन्धावच्छिन्नप्रतियोगितायां सुघटमिति न कोऽपि दोषः । न च तथापि कालिकेन जातिविशिष्टः सन् समवायेन धूमत्वविशिष्टो यस्तस्य संयोगेन साध्यत्वे वह्न्याद्हेतौ साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिरिति वाच्यम् । स्वव्यापकत्वस्थाने स्वसमनियतत्वस्य निवेशनीयत्वात् । एवं स्वसजातीयत्वमपि निवेशनीयम् । साजात्यं च किंचिदवच्छिन्नत्वानिरवच्छिन्नत्वान्यतररूपेण, अन्यथा कालिकेन धूमत्वत्वेन धूमत्वविशिष्टस्य समवायेन स्वरूपतो धूमत्वविशिष्टस्य संयोगेन साध्यतायामतिव्याप्त्यापत्तेरिति ध्येयम् ।

त्वादित्याहुः । तन्मन्दम् । महानसीयवह्न्यभावमादायाऽव्याप्तितादवस्थ्यमित्यत्र तादवस्थ्यपदोपादानाऽसङ्गतिः, यद्धर्मावच्छिन्नहेतुकयद्धर्मावच्छिन्नसाध्यकस्थले पूर्वं लक्षणासत्त्वं, तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नसाध्यकस्थले पुनरव्याप्तेरेव तादवस्थ्यशब्दार्थत्वात् । यद्धेतुकस्थले पूर्वमव्याप्तिरभिहिता तद्धेतुकस्थलेऽव्याप्तेस्तादवस्थ्यशब्दार्थत्वे प्रमेयाश्रयवान् धूमादित्यत्र तादवस्थ्यानुक्तौ ग्रन्थन्यूनता स्यादिति ध्येयम् । यत्पदोपस्थाप्येऽव्याप्तिरुक्ता तत्पदोपस्थाप्ये लक्षणाऽसत्त्वं तादवस्थ्यपदार्थः, वह्नित्वावच्छिन्नपदोपस्थाप्यत्वं च वह्नित्वावच्छिन्नत्वावच्छिन्नस्य वह्नित्वावच्छिन्नस्य च वर्त्तते इति नव्याः ।

[ ४ ] अन्ये तु वह्नौ तद्व्यक्तित्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वं, वह्नित्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वाभावश्चेत्याभिप्रायकं हेतुसमानाधिकरणाभावप्रतियोगिताशून्यसाध्यसामानाधिकरण्यरूपसार्वभौमीयलक्षणं, तद्दूषणायैव वह्नित्वावच्छिन्नेत्युपादानम् । तेन प्रतियोगितायाः व्याप्यवृत्तित्वं प्रतिपादितम् , तथाच वह्नित्वावच्छेदेन प्रतियोगित्वाभावस्य वह्न्यवसत्वादनवच्छेदकत्वानुसरणमिति प्राहुः ।

[ ५ ] यद्वा व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्वीकारे वह्निधूमोभयं, हेतुमन्निष्ठाभावप्रतियोगीति प्रतीत्या धूमेऽपि द्वित्वावच्छेदेन तादृशभेदसत्वादतिव्याप्तिरतः साध्यतावच्छेदकधर्ममात्रावच्छिन्नानुयोगिताकतादृशभेदवत्त्वं विवक्षणीयम् । तादृशभेदासत्त्वप्रदर्शनायैव वह्नित्वावच्छिन्नस्येत्युक्तम्(१) । सर्वपदं नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिसूचनार्थम् , अन्यथा तद्व्यक्त्यनुयोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थले तद्व्यक्त्यभावस्य प्रतियोगिव्यधिकरणत्वाभावेनाऽव्याप्तिविरहाद् ग्रन्थाऽसङ्गतेः । सर्वपदं नानासंबन्धेन वह्निसाध्यकस्थलेऽव्याप्तिसूचनार्थमित्यपि कश्चित् ।

[६] ननु सर्वत्राऽसंभवसंभवेऽव्याप्तिदानमसंगतम् । न च तद्रूपवान् तद्रसादित्यत्र तत्तद्व्यक्तित्वावच्छिन्नाभावस्य लक्षणाऽघटकत्वेन नाव्याप्तिरिति वाच्यम् । तद्रूपघटोभयाभावस्य पूर्वक्षणवृत्तित्वविशिष्टतद्रूपाभावस्य च लक्षणघटकत्वादिति चेन्न । कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्यावश्यमुपादेयतया पूर्वक्षणवृत्तित्वविशिष्टतद्रूपाधिकरणतायास्तद्घटेऽपि विद्यमानतया तद्रूपघटोभयत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधिकरणतायाश्चाऽप्रसिद्धत्वेन तदभावस्यापि लक्षणाघटकत्वात् । न च तद्रूपवान् तद्रसादित्यत्र तद्रूपघटोभयाभावस्य घटरूपोभयत्वावच्छिन्नाधिकरणतायाः कपाले प्रसिद्धतया प्रतियोगिव्यधिकरणत्वेन तमादायाऽव्याप्तिरिति वाच्यम् । तादात्म्येन तद्रूपवतः साध्यतायां तद्रसादिहेतुत्वे तादात्म्यसंबन्धावच्छिन्नतद्रूपवद्घटोभयत्वावच्छिन्नाधिकरणाप्रसिद्धेरभावान्तरमादाय लक्षणसमन्वयसंभवान्नासंभवो विहितो जगदीशेन । यद्यपि तदवयवानुयोगिकसमवायेन वह्नेः साध्यत्वे तदवयवत्वादिहेतौ साध्यतावच्छेदकीभूततदवयवा-

(१) वस्तुतो वह्निपदस्य वह्नित्ववह्निभिन्नसमवायोपस्थापकत्वात्समवायेन वह्नित्वविशिष्टस्थलमात्रप्रदर्शनेन न्यूनता स्यात्, सम्बन्धसामान्येन वह्नित्वविशिष्टस्थलाऽव्याप्तिसत्त्वे सामानाधिकरण्येन दोषदानाऽसङ्गतिः स्यात् । यत्तु वह्नित्वावच्छिन्नेत्यनुक्तौ द्रव्यत्वप्रमेयत्वादिरूपेण सर्वत्र नाव्याप्तिः सम्भवति, गगननिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याभावेन तस्यैव तद्भिन्नत्वादिति । तन्मन्दम् । वह्निपदस्य प्रमेयत्वावच्छिन्नेऽशक्तत्वादिति ।

न च पर्वते महानसीयवह्निर्नास्तीत्यादिप्रतीतिसिद्धस्य हेतुमन्निष्ठाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तितादवस्थ्यम् । साध्यतावच्छेदकतदितरोभयावच्छेद्यभिन्नाया एव प्रतियोगिताया अनवच्छेदकत्वस्य विवक्षितत्वाददोषः ।

---

नुयोगिकसमवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधिकरणत्वाऽप्रसिद्ध्याऽभावाप्रसिद्धिनिबन्धना-ऽव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावोऽत्रार्थं निवेशनीयः, एवं चाऽत्रापि कालिकसंबन्धावच्छिन्नतद्रूपघटोभयत्वावच्छिन्नाधिकरणत्वस्य प्रसिद्धतया साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धेन तदभावस्य हेत्वधिकरणेऽपि सत्त्वेन लक्षणं नैव घटते, तथापि शुद्धसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वस्य निवेशनीयतयोभयत्वस्य धीविशेषविषयत्वरूपत्वेन तद्रूपघटोभयाभावप्रतियोगितावच्छेदकताया उभयत्वत्वावच्छिन्नत्वेन लक्षणाघटकत्वान्नासंभवः । एवं तादात्म्येन गगनस्य साध्यत्वे तद्व्यक्तित्वहेतौ साध्यघटितविशिष्टाभावोभयाभावस्य प्रतियोगिवैयधिकरण्यविरहेण तत्र लक्षणसमन्वयान्नासंभवो विहित इति ध्येयम् ।

[७] ननु प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानिरूपितो यस्तदभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमित्यस्यैव सम्यक्त्वे अवच्छेदकतात्वेनाऽवच्छेदकत्वप्रवेशो व्यर्थ इति चेन्न । प्रमेयवान् वाच्यत्वादित्यत्र घटाभावीयप्रतियोगितानिरूपिता या प्रमेयत्वत्वावच्छिन्नाधेयता तस्याः प्रमेयत्वे सत्त्वादव्याप्तेः, वह्निमान् धूमादित्यादौ घटाद्यभावीयप्रतियोगितानिरूपितो यो घटाभावस्तस्य वह्नित्वे सत्त्वादव्याप्तेश्च, अभावप्रतियोगित्वयोः परस्परनिरूप्यनिरूपकभावादिति ।

[ ८ ] ननु तथापि तादृशप्रतियोगितानवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्यैव सम्यक्त्वे साध्यतावच्छेदकानुप्रवेशो व्यर्थ इति चेन्न । व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः; तादृशप्रतियोगितानवच्छेदकं यत्प्रमेयत्वं तदवच्छिन्नसाध्यसामानाधिकरण्यसत्त्वात्, निर्धर्मिकानवच्छेदकत्वज्ञानस्य व्यभिचारनिश्चयाप्रतिबध्यतया तद्विषयस्य व्याप्तित्वानुपगमाच्चेति ध्येयम् ।

न चेति । अस्य तादवस्थ्यमित्यनेनाऽन्वयः । प्रतीतिसिद्धस्येति । विशेषाभावकूटातिरिक्तस्य सामान्याभावस्य सविवादत्वेऽपि विशेषाभावे नास्ति विवादलेशोऽपीति सूचनार्थं प्रतीतिसिद्धस्येत्युक्तम् । एवं च अतिरिक्तः सामान्याभावोऽस्तु मा वा, उभयथापि धूमाधिकरणपर्वतवृत्तियों महानसीयवह्न्यभावः तत्प्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वादव्याप्तिरिति भावः ।

विवक्षितत्वादिति । हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वं विशेषणीयमित्यर्थः । महानसीयवह्न्यभावप्रतियोगिता तु साध्यतावच्छेदकं वह्नित्वं तदितरं महानसीयत्वमेतदुभयधर्मावच्छिन्नैवेति घटाभावमादाय लक्षणसमन्वयः । अत्र साध्यतावच्छेदकानवच्छिन्नत्वमात्रोक्तौ व्यभिचारिमात्रेऽतिव्याप्तिः, साध्याभावस्य लक्षणाघटकत्वात् । साध्यतावच्छेदकेतरानवच्छिन्नत्वमात्रोक्तौ सद्धेतुमात्रेऽसम्भवः, घटाभाव-

प्रतियोगितायाः साध्यतावच्छेदकेतरानवच्छिन्नत्वाभावात् । उभयानवच्छिन्न(१)त्वमात्रोक्तौ वह्निधूमोभयवान् वह्नेरित्यत्राऽतिव्याप्तिः । साध्याभावप्रतियोगितायाः वह्नित्वधूमत्वाद्युभयधर्मावच्छिन्नत्वेन साध्याभावस्य लक्षणाघटकत्वात् । न च धूमाभावमादाय नातिव्याप्तिरिति वाच्यम् । उभयत्वस्याऽनवच्छेदकत्वेन तदवच्छिन्नविधेयताकानुमित्यापत्तिसम्भवात् ।

[१] नन्वत्र महानसीयत्वं यदि वह्नौ महानसवृत्तित्वं तदा अग्रे विवक्षणीयस्य प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य महानसीयत्वनिष्ठावच्छेदकतायां(२) विरहेण कथं तादृशाभावस्य लक्षणघटकत्वमिति चेन्न । महानसीयत्वं महानसानुयोगिकसंयोगस्तन्निष्ठावच्छेदकत्वस्य समवायसम्बन्धावच्छिन्नतयाऽव्याप्तिसम्भवात् । तार्णत्वादेर्जातित्वमते तार्णवह्न्यभावमादायैव वाऽव्याप्तिसम्भवादिति ।

[२] ननु कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यं विवक्षणीयम्, तदर्थञ्च यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वमित्यादि । एवं च महानसीयवह्न्यभावप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नाधिकरणत्वस्यैव पर्वते सत्त्वेन कथं महानसीयवह्न्यभावः प्रतियोगिव्यधिकरण इति चेन्न । तार्णवह्निमान् धूमादित्यत्र वह्नित्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य हेतुमति सत्त्वेन तार्णवह्न्यभावस्य लक्षणाऽघटकत्वादतिव्याप्तिः(३) ।

अतः प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वमित्यनेन स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगितापर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वं निरूपकतायां विवक्षणीयम्, रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । एवं च महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यन्महानसीयत्ववह्नित्वगतं द्वित्वं तद्वृत्तिनिरूपकाताकाधिकरणत्वाभावस्य पर्वतादौ सत्त्वेन तस्य लक्षणघटकत्वादव्या(४)प्तिसंगतिरिति ।

---

(१) अत्रोभयानवच्छिन्नत्वं यदि उभयनिष्ठावच्छेदकत्वानिरूपितत्वं तदाऽसम्भवः, यदि च स्वावच्छिन्नत्वस्वेतरधर्मानवच्छिन्नत्वोभयसम्बन्धेन धर्मविशिष्टान्यत्वं तदित्युच्यते, तदा महानसीयवह्निमान् धूमादित्यादौ चाऽतिव्याप्तिरिति ध्येयम् ।

(२) प्रतियोगितावच्छेदकता स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्वरूपत्वसमवायत्वगतद्वित्वे वर्त्तते साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतसमवायत्वगतैकत्वे विरहादिति भावः ।

(३) न च तार्णाभावमादाय नातिव्याप्तिः, शुद्धवह्नित्वस्याऽनवच्छेदकत्वेऽपि तदवच्छिन्नविधेयताकानुमितेरिष्टत्वादिति वाच्यम् । यद्धर्मे व्यापकतावच्छेदकत्वं गृह्यते तद्धर्मावच्छिन्नविधेयताकानुमितिर्भवतीत्यत्र तद्धर्मावच्छिन्नविधेयताया इतरवारकपर्याप्त्यनिवेशेन वह्नित्वेऽनवच्छेदकत्वज्ञानादेव तार्णत्ववह्नित्वोभयधर्मावच्छिन्नविधेयताकानुमित्यापत्तिसम्भवात् । न च वह्निमान् धूमादित्यत्र वह्नित्वेऽनवच्छेदकत्वज्ञानान्महानसीयवह्निमानित्यनुमित्यापत्तिः स्यादिति वाच्यम् । तत्र महानसीयवह्न्यभावस्यापि लक्षणघटकतया वह्नित्वेऽनवच्छेदकत्वज्ञानस्यैवाऽसम्भवात् ।

(४) नचैतादृशपर्याप्तिनिवेशे तादृशहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसाध्यसामानाधिकरण्यस्यैव सम्यक्त्वेऽलं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशेनेति

[३] ननु महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावमादायाऽव्याप्तिवारणाय शुद्धसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वनिवेशस्याऽऽवश्यकतया तेनैव महानसीयवह्न्यभाववारणसम्भवः । न च वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वस्य प्रतियोगितायां सत्त्वेन कथं तस्य वारणम्, अथवा सावच्छिन्नावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वमेव तत्, तेनापि महानसीयवह्निवृत्तित्वविशिष्टजातिमदभाववारणात्, तथाच वह्नित्वनिष्ठावच्छेदकतायास्तादृशत्वादिति वाच्यम् । महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निर्नास्तीत्यभावमादायाऽव्याप्तेः । अतः सावच्छिन्नावच्छेदकत्वानिरूपितत्वमेव निरवच्छिन्नावच्छेदकतानिरूपितत्वम्, तथाच कथं महानसीयवह्न्यभावमादायाऽव्याप्तिः । न च तादृशजातिमद्वह्न्यभावप्रतियोगिता जातित्वावच्छिन्नावच्छेदकताकैव न तु वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकेति वाच्यम् । महानसीयवह्न्यभावमादायाव्याप्तिवारणार्थमेव तादृशार्थकरणे बाधकाभावादिति चेन्न ।

तार्णवह्न्यभावप्रतियोगितायां तार्णत्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वस्य वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वस्य च सत्त्वेन तन्निरूपकाभावमादायाऽव्याप्तिवारणायैव साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य सार्थक्यादिति(१) ।

[४]केचित्तु अग्रे विवक्षणीयस्य यादृशप्रतियोगितावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयद्व्यक्तिनिष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभेदकूटवद्धेत्वधिकरणमिति पारिभाषिकप्रतियोगिवैयधिकरण्यस्य महानसीयवह्न्यभावेऽक्षततया तमादायाऽव्याप्तिवारणाय तादृशोभयानवच्छिन्नत्वानिवेशस्य सार्थक्यात् पर्याप्त्यनिवेशेऽपि नाऽव्याप्तिदानमसङ्गतमित्याहुः । तन्न । विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावप्रतियोगितावच्छेदकसत्तात्वे स्वाश्रयाधिकरणद्रव्यगुणादिव्यक्तिनिष्ठाधिकरणतानवच्छेदकत्वघटितोभयाभावस्य सत्त्वेन द्रव्यगुणादिव्यक्तिभेदकूटवत्त्वस्य हेत्वधिकरणे विरहात् साध्याभावस्य लक्षणाऽघटकत्वेनाऽतिव्याप्तिभिया पर्याप्तिनिवेशस्याऽऽवश्यकत्वेन पूर्वोक्तनिवेशस्यैव दार्ढ्यादिति ध्येयम् ।

[५] वस्तुतस्तु प्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपकत्वनिवेशो कालो गोमान्

---

वाच्यम् । जगदीशेन एकत्वादेः पर्याप्त्यस्वीकारात् । तेषामयमाशयः । अव्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्तेरस्वीकारात् वह्नित्वनिष्ठावच्छेदकताया अव्यासज्यवृत्तितया तत्प्रतियोगिकपर्याप्तेरप्रसिद्धतया वह्निमान् धूमादित्यादौ तादृशरूपाऽप्रसिद्ध्याऽव्याप्तेरिति । एवं पर्याप्तिघटितप्रतियोगिवैयधिकरण्यनिर्वचने धूमत्वगतैकत्वादेः पर्याप्तिविरहेण धूमाभावस्य लक्षणाघटकतयाऽभावान्तरमादायाऽतिव्याप्तिः, एकत्वप्रतियोगिकपर्याप्त्यङ्गीकारे तु तन्निरुक्तेर्निर्दोषत्वात् । परन्तु असमानप्रकारकज्ञानस्याप्रतिबन्धकत्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति व्यभिचारज्ञानकाले तादृशपर्याप्तिघटितज्ञानादनुमित्यापत्तिरतः तन्निवेशयितुं न शक्यते ।

(१) न च तार्णत्वं वह्नित्वव्याप्यजातिविशेषः, तथाच तादृशाभावप्रतियोगितावच्छेदकत्वस्य तार्णत्वे एव स्वीकारान्नाव्याप्तिशङ्केति वाच्यम् । विषयितासम्बन्धेन वह्निसाध्यकतद्ज्ञानत्वहेतुकस्थले विषयितासम्बन्धावच्छिन्नप्रतियोगिताकतार्णवह्न्यभावप्रतियोगितावच्छेदकत्वस्य केवलतार्णत्वे स्वीकारे तार्णविषयकज्ञाने तार्णवह्निर्नास्तीतिप्रतीत्यनुपपत्तेः तार्णत्वावच्छिन्नाधिकरणतायास्तत्र सत्त्वात्, अतस्तादृशाभावप्रतियोगितावच्छेदकतायाः तार्णत्ववह्नित्वोभयत्रैव स्वीकरणीयत्वात् ।

सृष्टिकालत्वादित्यत्र प्रलयध्वंसत्वविशिष्टगोत्वाद्यभावस्यैव हेतुसमानाधिकरणतया तदीयप्रतियोगितायां सावच्छिन्नावच्छेदकतानिरूपितत्वसत्त्वेन तादृशप्रतियोगितानिरूपकाभावाऽप्रसिद्ध्याऽव्याप्तिः, एवमग्रे कालो घटवान् महाकालत्वादित्यादौ महाकालान्यत्वविशिष्टघटाभावेऽप्यादिग्रन्थासङ्गतिश्च स्यात्, अतः साध्यतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकत्वानिरूपकत्वस्यैव तदर्थताध्रौव्येण महानसीयवह्न्यभावोऽपि लक्षणघटक इति ध्येयम्।

[६] ननु सर्वत्रोभयाभावमादायाऽसम्भवसम्भवेऽव्याप्तिदानमसङ्गतमिति चेन्न। तद्व्यक्तित्वावच्छिन्नप्रतियोगिकवृत्तित्वाच्यत्वसम्बन्धेन घटसाध्यकसद्धेतौ साध्यतावच्छेदकसम्बन्धेनोभयत्वावच्छिन्नाभावस्य केवलान्वयितया प्रतियोगिव्यधिकरणत्वाभावेनोभयाभावस्य लक्षणाघटकत्वात्, लक्षणघटकता च तद्व्यक्तित्वावच्छिन्नाभावस्यैव तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। किञ्च स्ववृत्तिभेदीयप्रतियोगितासम्बन्धेन घटसाध्यकपटत्वादिहेतौ पटाभावस्यैव लक्षणघटकतया साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वात्तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाऽव्याप्त्यभावात्। न च घटपटोभयाभावस्य लक्षणघटकत्वादव्याप्तिरिति वाच्यम्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्याऽप्रामाणिकतया साध्यतावच्छेदकसम्बन्धेन प्रतियोगित्वाऽप्रसिद्धेः। तादात्म्येन गगनसाध्यकस्थले उभयत्वावच्छिन्नतादात्म्याप्रसिद्धिरिति लक्षणसमन्वयादित्यपि द्रष्टव्यम्।

[७] अथ किमिदं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वम्, यदि साध्यतावच्छेदकतदितरोभयनिष्ठावच्छेदकत्वानिरूपकत्वं, तदाऽप्रसिद्धिः अवच्छेदकताया अवच्छेदकभेदेन भिन्नत्वात्, महानसीयवह्न्यभावप्रतियोगितानिरूपितावच्छेदकता एका वह्नित्वनिष्ठा निरवच्छिन्ना, एका च महानसीयत्वनिष्ठा सावच्छिन्ना, न कापि साध्यतावच्छेदकतदितरोभयनिष्ठा एका इत्यसम्भवप्रसंगात्। न च जातिमान्नास्तीत्यभावप्रतियोगितानिरूपितजातित्वावच्छिन्नावच्छेदकतायां तत्प्रसिद्धिरिति वाच्यम्। तादृशावच्छेदकत्वानिरूपितत्वस्य महानसीयवह्न्यभावप्रतियोगितायां सत्त्वेनाऽव्याप्तितादवस्थ्यात्। यदि च नृसिंहाकारावच्छेदकता स्वीक्रियते तथा चोभयनिष्ठावच्छेदकता एकैवेति तत्रोभयनिष्ठत्वस्य प्रसिद्ध्या न काप्यनुपपत्तिरित्युच्यते, तदा तदस्वीकारपक्षे निरुक्तदोषोद्धारोऽशक्य एव। नापि साध्यतावच्छेदकतदितरोभयत्वाश्रयनिरूपितवृत्तितावदवच्छेदकत्वानिरूपकत्वम्, घटाभावीयप्रतियोगितानिरूपितावच्छेदकत्वस्यापि वह्नित्वघटत्वोभयत्वाश्रयनिरूपितवृत्तित्वेनाऽसंभवापत्तेरिति चेत्।

अत्रोच्यते। साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वतदितरनिष्ठावच्छेदकतानिरूपितत्वोभयाभावस्य विवक्षितत्वात्। साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वविशिष्टतदितरनिष्ठावच्छेदकतानिरूपितत्वाभावस्य विवक्षितत्वादित्यपि कश्चित(१)। साध्यतावच्छेदकनिष्ठावच्छे

(१) कश्चिदित्यस्वरसः। अत्रापि तादृशानिरूपितत्वघटोभयाभावमादाय तदवस्थतादवस्थ्यमिति। न च तादृशनिरूपकतात्वपर्याप्तावच्छेदकताकत्वं निवेश्यमिति वाच्यम्। पर्याप्तिनिवेशस्याऽऽवश्यकत्वे एतावान्प्रयासो व्यर्थः स्यात्। न च तादृशानिरूपकत्वाभावकूटनिवेशे न दोष इति वाच्यम्। तथासति दुर्ज्ञेयत्वापातात् असम्भवापत्तेश्च, निरुक्तनिरूपकत्वघटनिष्ठावच्छेदकतानिरूपकत्वान्यतराभावस्य घटत्वातिरिक्तनिष्ठावच्छेदकतानिरूपकत्वाभावस्य चोक्तकूटान्तर्गततया पटाभावप्रतियोगितायामसत्त्वादिति। इदमत्रावधेयम्। स्वावच्छिन्नत्वस्वेतरधर्मावच्छिन्नत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन

तादितरपदेन तद्विषयिताव्यापक...



न च प्रमेयाश्रयवान् धूमादित्यादावव्याप्तिः, साध्यतावच्छेदकेतरस्याऽप्रसिद्धेरिति वाच्यम् । तदितरपदेन येन रूपेण साध्यतावच्छेदकत्वं तेन रूपेण तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य विवक्षितत्वात् ।

---

दकतानिरूपिता सती तदितरनिष्ठावच्छेदकतानिरूपिता या प्रतियोगिता तदन्यत्वमिति तु श्रीचरणाः । एवं च प्रमेयाश्रयवान् धूमादित्यत्र साध्यतावच्छेदकीभूतप्रमेयेतराऽप्रसिद्ध्याऽव्याप्तिरित्याशंकते न चेति । इतरपदमन्तरार्थकम्, अन्तरपदस्य च स्वानवच्छिन्नप्रकारतावच्छेदके निरूढलक्षणा, स्वमत्र साध्यतावच्छेदकम् । एतेन स्वावच्छिन्नप्रकारताभेदमपहाय स्वानवच्छिन्नप्रकारतावच्छेदकनिवेशे गौरवमित्युक्तिः परास्ता । अत एव सामान्यनिरुक्तौ जगदीशेन विशिष्टान्तरत्वं स्वानवच्छिन्नप्रकारतावच्छेदकत्वमुक्तम् । एवं तादृशप्रकारताभेदनिवेशे तत्तद्व्यक्तित्वावच्छिन्नभेदकूटनिवेशस्यावश्यकतया कूटत्वस्याऽपेक्षाबुद्धिविशेषविषयत्वस्यानन्ततया गौरवञ्च । मम तु साध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकतानिरूपितसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वं नास्तीति सामान्याभावस्य प्रकारतायां निवेशाल्लाघवमिति अखण्डाभावघटकतया सार्थकमात् । प्रमेयानवच्छिन्नप्रकारत्वाऽप्रसिद्ध्या तद्दोषतादवस्थ्यमतो येन रूपेणेत्यादि । यद्रूपावच्छिन्न साध्यतावच्छेदकत्वमित्यर्थः, साध्यतावच्छेदकतावच्छेदकं यद्रूपं तद्रूपविशिष्टानवच्छिन्नप्रकारतावच्छेदकेत्यर्थः । ननु साध्यतावच्छेदकेतरत्वं साध्यतावच्छेदकतासमानाधिकरणभेदप्रतियोगित्वम्, तस्य च घटत्वादौ सौलभ्यादलं गुरुतरनिवेशेनेति चेन्न । महानसीयवह्निमान् धूमादित्यादौ साध्यतावच्छेदकत्वस्य वह्नित्वे महानसीयत्वे च सत्त्वेन तत्समानाधिकरणभेदप्रतियोगित्वस्य प्रातिस्विकरूपेण महानसीयत्वे वह्नित्वे च सत्त्वात्, साध्याभावस्य लक्षणाऽघटत्वादनिव्याप्त्यापत्तिरतस्तदुपेक्षितम् ।

[२] ननु इतरपदेन तथाविवक्षणेऽपि साध्यतावच्छेदकं यत्प्रमेयत्वं तद्विशिष्टत्वस्य निखिलपदार्थे सत्त्वेन तद्विशिष्टानवच्छिन्नप्रकारत्वाऽप्रसिद्ध्या तद्दोषतादवस्थ्यमिति चेन्न । साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपितप्रकारतावच्छेदकत्वस्य तादृशविशिष्टानवच्छिन्नप्रकारतावच्छेदकेत्यनेन विवक्षितत्वात् । तथाच घटवानितिज्ञानीयनिरवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतायास्तादृशत्वान्नाऽप्रसिद्ध्यवकाश इति ।

न च तथापि घटाभावीयप्रतियोगितायां साध्यतावच्छेदकघटत्वात्मकप्रमेयनिष्ठावच्छेदकतानिरूपितत्वस्य तदितरं यद् घटत्वादि तन्निष्ठावच्छेदकतानिरूपितत्वस्य च सत्त्वेन साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगित्वाप्रसिद्ध्योक्ताव्याप्तितादवस्थ्यमिति वाच्यम् । विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वामेस्त्वेन साध्यतावच्छेदकतावच्छेदकीभूतधर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्यैव विवक्षितत्वात्, तथाच

---

साध्यतावच्छेदकवैशिष्ट्यं प्रतियोगितायां वाच्यमतो नानुपपत्तिः । वस्तुतस्तु पङ्कजनिकर्तृत्वप्रयोगं प्रति अभावसम्बन्धेन पद्मत्वेन प्रतिबन्धकत्वम्, अत्राऽभावत्वेन विलक्षणाभावस्यैव संसर्गता तद्वदत्रापि तादृशोभयावच्छेद्यत्वं नेति प्रतीतिसिद्धविलक्षणभेद एव तादृशोभयानवच्छिन्नत्वपदेन विवक्षणीयः । वैलक्षण्यं च विशिष्टाभावोभयाभावव्यावृत्तमतो न दोष इति ।

घटत्वादिनिष्ठावच्छेदकतायां प्रमेयत्वावच्छिन्नत्वविरहेण घटाभावप्रतियोगितायां तदितरोभयानवच्छिन्नत्वसत्त्वात्तन्निरूपकाभावमादाय लक्षणसमन्वयात् ।

[३] अथैतादृशविवक्षणे वह्नित्ववद्वान् धूमादित्यादौ महानसीयवह्न्यभावप्रतियोगितायां वह्नित्वत्वावच्छिन्नावच्छेदकतानिरूपितत्वविरहेण निरुक्ततदितरोभयानवच्छिन्नत्वसत्त्वात्तन्निरूपकाभावमादायाऽव्याप्तिः। यदि च प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानिरूपितसावच्छिन्नावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षणान्नाव्याप्तिः, महानसीयवह्न्यभावप्रतियोगितानिरूपिता सावच्छिन्नावच्छेदकता न वह्नित्वे किन्तु महानसीयत्वादावेव तादृशावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वादित्युच्यते, तदाऽग्रे रूपवति नीलो नास्तीतिप्रत्ययात् रूपत्वन्यूनवृत्तिजातिमद्भूवान् रूपादित्यत्र नीलत्वपीतत्वादिजातीनां निरवच्छिन्नावच्छेदकतावत्वात् नीलो नास्तीत्याद्यभावानां लक्षणाऽघटकत्वादव्याप्तिपरग्रन्थाऽसंगतिः ।

अत्रोच्यते । साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपितप्रकारतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वोभयाभाववत्त्वस्य विवक्षितत्वात्, तथाच प्रमेयाश्रयवान् धूमादित्यादौ साध्यतावच्छेदकपदेन यदि घटत्वात्मकप्रमेयस्य धारणं, तदा घटत्वनिष्ठावच्छेदकतानिरूपितत्वस्य इतरघटत्वनिष्ठावच्छेदकतानिरूपितत्वस्य चैक्येनोभयाभावविरहादतः साध्यतावच्छेदकपदेन घटत्वपटत्वादिधारणं प्रमेयं युक्तम्, तथाच घटत्वनिष्ठावच्छेदकतानिरूपितत्वतदितरपटत्वनिष्ठावच्छेदकतानिरूपितत्वोभयाभाववत्त्वस्य घटाभावीयप्रतियोगितायां सत्त्वाल्लक्षणमन्वयात् ।

न च जातिमद्वान् भावत्वादित्यादौ साध्यतावच्छेदकघटत्वनिष्ठावच्छेदकतानिरूपितत्वस्य-तादृशविशिष्टानवच्छिन्नपटवानित्याकारकज्ञानीयप्रकारतावच्छेदकपटत्वनिष्ठावच्छेदकतानिरूपितत्वस्य चोभयोर्जातिमदभावीयप्रतियोगितायां सत्त्वेनोभयाभावविरहादभावान्तरमादायाऽव्याप्तिः, यदि च जातिमदभावीयप्रतियोगितानिरूपितजातित्वावच्छिन्ना घटपटत्वादिनिष्ठावच्छेदकता एकैव तथाच घटत्वनिष्ठावच्छेदकतानिरूपितत्वपटत्वनिष्ठावच्छेदकतानिरूपितत्वैतदुभयत्वविरहात्, इतरनिष्ठावच्छेदकतापदेन निरवच्छिन्नावच्छेदकता धर्त्तव्या तन्निरूपितत्वविरहेणोभयाभावस्य साध्यभावप्रतियोगितायां सत्त्वान्नातिव्याप्तिः, तदाऽवच्छेदकभेदेनावच्छेदकताया भिन्नत्वेऽतिव्याप्तिस्तदवस्थैवेति वाच्यम् । निष्कृष्टार्थेन वारणीयत्वादिति ।

[४] ननु साध्यतावच्छेदकतावच्छेदकरूपानवच्छिन्नप्रकारतावच्छेदकमित्येव तदितरपपदेन विवक्षणीयम्, अलं रूपविशिष्टानवच्छिन्नेत्यादिनेति चेन्न । महानसीयवह्निमान् धूमादित्यादौ परम्परानिरूपितत्वस्यास्वीकारे साध्यतावच्छेदकतावच्छेदकं यन्महानसीयत्वत्वं तदनवच्छिन्नत्वस्य महानसीयवह्नित्वावच्छिन्नप्रकारतायां सत्त्वेन तदितरपदेन साध्यतावच्छेदकस्यापि धर्तुं शक्यत्वेनाऽतिव्याप्त्यापत्तेरतस्तन्निवेशः ।

[५] ननु तथापि साध्यतावच्छेदकतावच्छेदकरूपानवच्छिन्नप्रकारताश्रयत्वविवक्षणेनैव सामञ्जस्ये तेन रूपेण तदनवच्छिन्नप्रकारतावच्छेदकत्वपर्यन्तनिवेशोऽनुचित इति चेन्न । महानसीयवह्निमान् धूमादित्यादावतिव्याप्तेः साध्याभावीयप्रतियोगितायां तद्रूपावच्छिन्नवह्निरिति ज्ञानीयप्रकारताश्रयवह्नित्वावच्छिन्नत्वसत्त्वेनोभयाविरहात् । न च महानसीयाभावमादायैव

नातिव्याप्तिरिति वाच्यम्। एवमपि महानसीयवह्निभिन्नवह्निमान् धूमादित्यादौ साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकं यन्महानसीयवह्निभिन्नत्ववत्वादिकं तदनवच्छिन्नवह्निरितिज्ञानीयप्रकारताश्रयवह्नित्वनिष्ठावच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वस्य च सत्त्वादतिव्याप्तिः। न च प्रकारतावच्छेदकत्वनिवेशेपि वह्निमानितिज्ञानीयप्रकारतावच्छेदकत्वस्य वह्नित्वे सत्वात्तद्दोषतादवस्थ्यमिति वाच्यम्। तादृशरूपविशिष्टानवच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति अवच्छेदकत्वानिरूपितत्वघटितोभयाभावस्य विवक्षितत्वात्, रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन।

[६] ननु तथापि वह्नित्ववद्वान् धूमादित्यादौ अव्याप्तिः, वह्नित्वस्वावच्छिन्नावच्छेदकत्वानिरूपिका या प्रकारता सा न महानसीयवह्नित्ववद्वानित्याकारकज्ञानीया प्रकारता किन्तु अन्यैव तन्निरूपितावच्छेदकतात्वावच्छिन्नप्रतियेगिताकपर्याप्त्यनुयेगितावच्छेदकं न महानसीयत्ववह्नित्वगतसमुदायत्वं किन्तु अन्यदेव तद्वृत्त्यवच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकनिष्ठावच्छेकतानिरूपितत्वस्य च द्वयोरभावेन महानसीयवह्नित्वतदभावस्य लक्षणघटकत्वात्। यद्यपि विशिष्टसाध्यतावच्छेदककस्थले प्रतियेगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशेन तादृशाभावव्युदाससम्भवेऽपि तार्णवह्नित्ववदभावस्य लक्षणघटकत्वादव्याप्तिः। न च येन रूपेण साध्यतावच्छेदकता तद्रूपनिष्ठावच्छेदकतानिरूपितावच्छेदकताभिन्नावच्छेदतानिरूपितप्रकारतावच्छेदकतात्वावच्छिन्नेत्यादिक्रमेण निवेश्य महानसीयवह्निमानित्याकारकज्ञानीयप्रकारतामादायाऽव्याप्तिवारणमिति वाच्यम्। तथापि तुल्ययुक्त्या महानसीयवह्निभिन्नवह्निमान् धूमादित्यादावतिव्याप्तिः, तादृशावच्छेदकताभिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितमहानसीयवह्नित्वस्वावच्छिन्ना प्रकारता भवत्येवेति चेन्न।

साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वोभयाभावस्य विवक्षितत्वात्। वैशिष्ट्यं स्वसामानाधिकरण्यस्वसाजात्योभयसम्बन्धेन। साजात्यं च निरवच्छिन्नत्वसावच्छिन्नत्वान्यतररूपेण। तार्णवह्न्यभावमादायाव्याप्तिवारणाय सामानाधिकरण्यनिवेशः। तन्मात्रोक्तौ प्रमेयाश्रयवान् धूमादित्यादौ साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वाप्रसिद्ध्याव्याप्तिरतः साजात्यनिवेशः। तत्रापि निरवच्छिन्नत्वमात्रोक्तौ तद्दोषतादवस्थ्यम्, साध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकत्वाप्रसिद्धेः। सावच्छिन्नत्वमात्रोक्तौ वह्निमान् धूमादित्यादावप्रसिद्धिः, तथाच नाव्याप्त्यतिव्याप्ती।

[६] ननु महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीतिप्रतीतिसिद्धाभावमादायाव्याप्तिवारणार्थमग्रे निरवच्छिन्नत्वनिवेशनमनतिप्रयोजनकम्, तादृशाभावस्य व्युदासात्, तथाहि साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकताविशिष्टान्यजातिस्वावच्छिन्नावच्छेदकतानिरूपितत्वस्य तदभावीयप्रतियोगितायां सत्त्वेनोभयाभावविरहादिति चेन्न। एतादृशनिवेशलाभायैव तदिति ध्येयम्।

[७] अथात्र समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादायाऽव्याप्तिवारकं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणं व्यर्थम्, यतः समवायसम्बन्धावच्छिन्नवह्निनिष्ठप्र-

तियोगितायां साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपितत्व—साध्यतावच्छेदकताविशिष्टान्यसमवायनिष्ठावच्छेदकतानिरूपितत्वोभयसत्त्वेन तादृशाभावस्य लक्षणाघटकत्वेनाऽव्याप्तिविरहादिति चेन्न। धूमवान् वह्नेरित्यादौ संयोगेन धूमाभावीयप्रतियोगितायां धूमत्वनिष्ठावच्छेदकतानिरूपितत्वतद्विशिष्टान्यसंयोगनिष्ठावच्छेदकतानिरूपितत्वोभयोः सत्त्वेन लक्षणाघटकत्वादतिव्याप्तिरतो विशिष्टान्यावच्छेदकतायां किंचित्सम्बन्धावच्छिन्नत्वस्याऽऽवश्यकतया न ग्रन्थासङ्गतिः। न चोक्तातिव्याप्तिवारणाय धर्मसम्बन्धसाधारणसाध्यतावच्छेदकताविशिष्टान्यत्वस्यैव वक्तव्यतया संयोगनिष्ठावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यत्वविरहान्नातिव्याप्तिः, एवं च ग्रन्थासंगतिस्तदवस्थैवेति वाच्यम्। एवंसति समवायनिष्ठावच्छेदकतायामपि परम्परया साध्यतानिरूपितत्वस्य सत्त्वेन साध्यतानिरूपितधर्मसंसर्गसाधारणावच्छेदकताविशिष्टान्यत्वस्य समवायनिष्ठावच्छेदकतायां विरहात्समवायेन वह्न्यभावस्य लक्षणघटतया तमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य सार्थक्यसम्भवात्। न च साध्यतानिरूपितत्वं साक्षादेव निवेशनीयम्, तथाच वह्नित्वप्रतियोगिकसमवायनिष्ठावच्छेदकतायां साक्षात्साध्यतानिरूपितत्वविरहात्साध्यतावच्छेदकताविशिष्टान्यत्वसत्त्वादव्याप्तिविरहेण साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशपरस्य 'अत्र च साध्यसामानाधिकरण्ये' इत्यादिग्रन्थस्यासङ्गतिस्तदवस्थैवेति वाच्यम्। संयोगिनः कालिकेन साध्यतायां स्पन्दत्वादिहेतौ संयोगेन संयोग्यभावमादायाऽव्याप्तिस्तत्प्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यघटत्वनिष्ठावच्छेदकतानिरूपितत्वासत्त्वे नोभयाभावसत्त्वादतः साध्यतावच्छेदकताविशिष्टान्यघटकविशिष्टावच्छेदकता किञ्चित्सम्बन्धावच्छिन्ना बोध्या। तथाच संयोगेन संयोगिनः साध्यतायां व्यभिचारिणि साध्यतावच्छेदकनिष्ठावच्छेदकताविशिष्टान्यसंसर्गविषया संयोगनिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकनिष्ठावच्छेदकनिरूपितत्वयोरुभयोः सत्त्वात्साध्याभावस्य लक्षणाऽघटकत्वादतिव्याप्तिरतो विशिष्टान्यावच्छेदकतापि किञ्चित्सम्बन्धावच्छिन्नत्वेन निवेशनीया। एवं च समवायेन वह्न्यभावमादायाऽव्याप्तिवारणाय प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश इति ग्रन्थासंगतिः। न च तथापि महानसीयत्वकालीनवह्निमान् धूमादित्यादौ साध्यतानिरूपितत्वस्य परम्परया महानसीयत्वनिष्ठावच्छेदकतायां सत्त्वात्तत्र च साध्यतावच्छेदकताविशिष्टान्यत्वविरहेण महानसीयवह्न्यभावप्रतियोगितायां तदितरोभयानवच्छिन्नत्वसत्त्वेन तन्निरूपकाभावमादायाऽव्याप्तिरिति वाच्यम्। साध्यतानिरूपितत्वस्य साक्षादेव निवेशात्, तथाच साक्षात्साध्यतानिरूपितत्वस्य वह्नित्वनिष्ठावच्छेदकतायां सत्त्वेन तद्विशिष्टान्यत्वस्य महानसीयत्वनिष्ठावच्छेदकतायां सत्त्वेन तादृशाभावस्य लक्षणाऽघटकत्वान्नाव्याप्तिः। नचैवंरीत्या विवक्षणेऽपि महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वान् धूमाद्‌जातिमद्वान् भावत्वादित्यादौ च साध्याभावप्रतियोगितायां साक्षात्साध्यतानिरूपितावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताविशिष्टान्यायां जातित्वनिष्ठावच्छेदकता परम्परया तन्निरूपितत्वोभयोः सत्त्वेन साध्याभावस्य लक्षणाऽघटकत्वादतिव्याप्तिरिति वाच्यम्। विशिष्टान्यावच्छेदकतानिरूपितत्वस्य साक्षादेव निवेशेनाऽतिव्याप्तिविरहादिति ध्येयम्।

[२] अथ महानसीयवह्निमान् तज्ज्ञानत्वादिति विषयितया महानसीयवह्निसाध्यकस्थलेऽव्याप्तिः तत्र महानसीयाभाववह्न्यभावयोर्लक्षणघटकत्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्, एवं प्रतियोगितासंबन्धेन महानसीयवह्निमान् तद्व्यक्तित्वादित्यत्रापीति चेन्न। यत्किंचिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वस्य प्रतियोगितायां निवेशात्, तादृशरूपवृत्तित्वं च स्वावच्छेदकतास्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तावतैवोक्ताव्याप्तिवारणसम्भवात्। न च विषयितया वह्नेः साध्यत्वे महानसीयवह्निविषयकज्ञानवह्निविषयकज्ञानान्यतरत्वहेतावतिव्याप्तिः साध्याभावीयप्रतियोगितायां तादृशरूपवृत्तित्वविरहादिति वाच्यम्। तादृशरूपे साध्यतावच्छेदकतास्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य विवक्षणात्, तथाच वह्नित्वगतैकत्वं न तादृशानवच्छेदकं यच्चाऽनवच्छेदकं द्वित्वादि तत्र वह्न्यभावीयप्रतियोगिताया अवृत्तित्वेन लक्षणघटकत्वात्। नच तथापि महानसीयवह्निमान् तज्ज्ञानत्वादित्यादौ वह्निमहानसीयाभावमादाय पुनरव्याप्तिः, द्वित्वस्य धीविशेषविषयत्वरूपतया महानसीयत्ववह्नित्वगतद्वित्वभिन्नं वह्नित्वमहानसीयत्वगतद्वित्वम्; एवं च वह्नित्वमहानसीयत्वगतद्वित्वे साध्यतावच्छेदकमहानसीयत्ववह्नित्वगतद्वित्वभिन्नत्वेऽपि तादृशवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वाभावात् यत्तादृशं रूपं भवति तदवृत्तित्वस्य निरुक्ताभावीयप्रतियोगितायां सत्त्वेन लक्षणघटकत्वादिति वाच्यम्। यत्किंचिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यत्तादृशपर्याप्त्यनुयोगितावच्छेदकं तदवृत्तित्वस्य प्रतियोगितायां निवेशेन तादृशाभावस्य लक्षणाऽघटकत्वान्नाव्याप्तिरिति।

[३] परे तु साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वेत्यत्र वै० स्वनिरूपितविधेयतावच्छेदकतास्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वपूर्वोक्तसम्बन्धद्वयएतन्नितयसम्बन्धेन, रूपवृत्तित्वं च स्वनिरूपितप्रतियोगितावच्छेदकतास्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाच महानसीयो नास्तीत्यभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकगतरूपेऽवृत्तित्वात् साध्यतावच्छेदकताविशिष्टान्यत्वेन तन्निरूपकत्वघटितोभयोः सत्त्वादिति वदन्ति।

[४] ननु वह्निमान् धूमादित्यादावसंभवः, हेत्वधिकरणनिरूपितवृत्तितायाः सम्बन्धसामान्येन घटादिसाधारणतया तदवच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं घटत्वगतैकत्वादिकं तदवृत्तित्वस्यैव घटाभावीयप्रतियोगितायां सत्त्वादिति चेन्न। हेत्वधिकरणसमानकालीनपदार्थाभावमादायाऽसम्भवानवकाशात्। न च सत्तावान् महाकालत्वादित्यादौ हेत्वधिकरणाऽसमानकालीनपदार्थाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। हेत्वधिकरणवृत्तितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य(१) विवक्षितत्वात्।

---

(१) ननु वह्निमान तज्ज्ञानत्वादित्यादावव्याप्तिः, यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाप्रसिद्धेः। न च हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्ता-

 

हेत्वधिकरणे यत्किञ्चित्त्वनिवेशाच्च तादात्म्येन प्रमेयसाध्यकवाच्यत्वहेतौ घटनिरूपित-वृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकघटत्वत्वगतैकत्वादावृत्तिघटाभावीयप्रतियोगितामादाय नाव्याप्तिः, अन्यथाऽभावमात्रस्य लक्षणाघटकत्वादव्याप्तिः स्यात् । न च तत्र गगनाभावस्यैव लक्षणघटकत्वमिति वाच्यम् । गगनस्यापि तादात्म्येन हेत्वधिकरणसम्बन्धित्वात् । न च घटपटोभयभेदमादाय तत्र लक्षणसमवाय इति वाच्यम् । साध्यतावच्छेदक-सम्बन्धेन तादृशोभयाधिकरणाऽप्रसिद्धेः ।

[५] ननु वह्निमान् धूमादित्यादौ हेत्वधिकरणनिरूपितप्रमेयावच्छिन्नवृत्तितावच्छे-दकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिता-कपर्याप्त्यनुयोगितानवच्छेदकं घटत्वगतैकत्वादि तदवृत्तित्वस्य प्रतियोगितामात्रेऽसत्त्वेन सर्वत्राऽसम्भवापत्तिः । न च केवलान्वयितावच्छेदकीभूतधर्मानवच्छिन्नत्वं यत्किञ्चिद्धेत्व-धिकरणनिरूपितवृत्तितायां विशेषणीयमिति वाच्यम् । तथासति स्वरूपसम्बन्धेन वाच्यत्ववि-शिष्टप्रमेयस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतावव्याप्त्यापत्तिः, तत्र हेत्वधिकरणनिरू-पितसाध्यतावच्छेदकावच्छिन्नवृत्तितायां केवलान्वयितावच्छेदकधर्मानवच्छिन्नत्वविरहात्, भ-वति च ज्ञानत्वत्वावच्छिन्नवृत्तितैव तादृशी तादृशवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयो-गितावच्छेदकरूपावृत्तित्वस्य विषयित्वसम्बन्धावच्छिन्नवाच्यत्वाभावीयप्रतियोगितायां तादृश सम्बन्धावच्छिन्नप्रमेयाभावीयप्रतियोगितायां च सत्त्वात्तदवच्छेदकत्वस्य साध्यतावच्छेदके वि-रहादिति चेन्न ।

प्रमेयावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वं तत्तदेकत्वद्वित्व-त्रित्वान्यतमापेक्षया लाघवात्तदेकत्वे एव स्वीक्रियते, एवं च तत्तदेकत्वावृत्तित्वस्योभयाभावी-यप्रतियोगितायां सत्त्वात्तामादाय नाऽसम्भवः । न चोभयाभावस्य प्रतियोगिवैयधिकरण्याऽ-सम्भव इति वाच्यम् । समानाधिकरणोभयाभावमादाय खण्डशः प्रसिद्ध्या वा तत्सङ्गतेरिति ।

अथवा तादृशवृत्तिताविशिष्टरूपावृत्तित्वस्य विवक्षितत्वात् । वै० स्वनिरूपितावच्छेदकता-विशिष्टप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । प्रतियोगितायामवच्छेदकतावै० स्वविशिष्टावच्छेदकतात्वावच्छिन्नत्वसम्बन्धेन । वै० स्वतादात्म्यस्वनिरूपितत्वान्यतरसम्बन्धेन । तथा च यत्किञ्चिद्धेत्वधिकरणनिरूपितप्रमेयावच्छिन्नवृत्तिताविशिष्टं रूपं घटत्वप्रमेयत्वगतद्वि-त्वघटत्वप्रमेयत्वपटत्वगतत्रित्वादिकमेव नतु घटत्वगतैकत्वमिति घटाद्यभावमादाय लक्षणस-मन्वय इति ।

---

नत्वनिष्ठवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूततज्ज्ञानत्वत्वनिष्ठैकत्वे साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वप्रसिद्धिरतो नोक्तदोष इति वाच्यम् । यत्र विषयितया वह्नेः साध्यता तज्ज्ञानत्वप्रतियोगिकसमवायेन स्वरूपतस्तद्ज्ञानत्वस्य हेतुता तत्राव्याप्तेः, तत्र हेतुनिष्ठवृत्तितावच्छेदकत्वाऽप्रसिद्धेः, वृत्तिताया निरवच्छिन्नत्वात् । साध्यनिष्ठवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वयोर्विरहादिति चेन्न । साध्यत्वाभाववद्रूपवृत्तित्वं प्रतियोगितायां निवेश्यम् । अभावश्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वकालीन[illegible]तावच्छेदकताप्रतियोगिकपर्याप्त्यनुवच्छेदकत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः ।

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायाः पर्याप्त्यधिकरणाभिन्नत्वं साध्यतावच्छेदकस्य वाच्यमित्यपि कश्चित् । तन्न । प्रत्येकमुभयत्र पर्याप्तिसम्बन्धेनाऽसतोऽवच्छेदकत्वस्योभयत्र पर्याप्तिसम्बन्धेन सत्त्वायोगात् ।

---

पर्याप्त्यधिकरणाभिन्नत्वमिति । एवं च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वाभाववत्साध्यतावच्छेदकमिति लक्षणम् । एतन्मते व्यासज्यवृत्तिप्रतियोगिकपर्याप्तेरव्याप्यवृत्तितया तत्सम्बन्धेन तदधिकरणत्वस्याव्याप्यवृत्तितया महानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्य द्वित्वावच्छेदेन सत्त्वेऽपि वह्नित्वगतैकत्वावच्छेदेन तदभावस्यापि सत्त्वेन लक्षणसमन्वयात्, अवच्छेदकभेदेन तत्तदभावयोरेकत्र समावेशे बाधकाभावात् । न च महानसीयवह्निमान् धूमादित्यादौ साध्यतावच्छेदके महानसीयवह्न्यभावप्रतियोगितावच्छेदकतायाः द्वित्वावच्छेदेन सत्त्वेऽपि एकत्वावच्छेदेन तदभावसत्त्वे बाधकाभावेनाऽतिव्याप्तिरिति वाच्यम् । एतन्मते साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छेदेनैव तादृशाभावस्य लक्षणे प्रवेशान्नातिव्याप्तिरिति । व्यासज्यवृत्तिप्रतियोगिकपर्याप्तेरपि व्याप्यवृत्तितया तत्सम्बन्धेन तदधिकरणत्वस्यापि व्याप्यवृत्तित्वात्तदभावस्यावच्छेदकाप्रसिद्ध्या नोक्तदोषवारणमित्याशयेनाह तन्नेति । प्रत्येकमिति । प्रत्येकवृत्तिधर्मावच्छेदेनेत्यर्थः । तथाच तत्सम्बन्धेन प्रत्येकावृत्तिधर्मस्य तत्सम्बन्धेन समुदायावृत्तित्वमिति नियमः सूचितः । एवञ्च महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं यदि पर्याप्तिसम्बन्धेन वह्नित्वनिरूपितवृत्तित्वाभाववत्स्यात् तदा तत्सम्बन्धेन महानसीयत्ववह्नित्वोभयनिरूपितवृत्तित्वाभाववत्स्यात् इत्याकारिका प्रथमत आपत्तिः, तत आपाद्याभावहेतुना आपादकाभावसिद्धिः, तथाच महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं वह्नित्वनिरूपितवृत्तितावत् महानसीयत्ववह्नित्वोभयनिरूपितवृत्तितावत्त्वादित्यनुमानेन वह्नित्वे तादृशावच्छेदकतापर्याप्त्यधिकरणत्वासिद्धिः, एवं च वह्निमान् धूमादित्यादावव्याप्त्या पर्याप्तिनिवेशो न सम्यगिति भावः।

[१] न च निरुक्तप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टावच्छिन्नसामानाधिकरण्यमित्येवास्तु किमेतत्कल्पपरित्यागेनेति वाच्यम् । एकत्वादेः पर्याप्त्यस्वीकारेण वह्निमान् धूमादित्यादौ साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाप्रसिद्ध्याऽव्याप्त्यापत्तेः, धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकगततादृशरूपाप्रसिद्ध्याऽभावान्तरमादायाऽतिव्याप्तेश्च । न च प्रतियोगिवैयधिकरण्येत्यत्र विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय पर्याप्तिनिवेशस्यावश्यकतया एकत्वप्रतियोगिकपर्याप्त्यस्वीकारे तत्रातिव्याप्तितादवस्थ्यमिति वाच्यम् । प्रतियोगिव्यधिकरणपदेन स्वप्रतियोगितावच्छेदकतात्वसमनियतनिरूपकताकाधिकरणत्वाभावस्य विवक्षितत्वात् । व्यापकताघटकसम्बन्धश्च स्वनिरूपितावच्छेदकतावत्स्वरूपः । अवच्छेदकतावत्ता च प्रसिद्धचतुष्टयसम्बन्धेन । सम्यग्व्याप्तिः स्वयमूहनीया ।

[२] वस्तुतस्तु महानसीयवह्निमान्वह्निमान् धूमादित्यत्र प्रत्येकाभावस्य लक्षणघटकतया-

(१)साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छेद्या प्रति-

ऽभावान्तरमादायाऽतिव्याप्तिवारणाय पर्याप्तिनिवेश आवश्यकः। परन्तु जगदीशमते हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति व्यभिचारज्ञानकाले निरुक्तपर्याप्तिघटितव्याप्तिज्ञानादनुमित्यापत्तिभिया तदितरोभयानवच्छिन्नत्वं निवेशितम्, तन्मतेऽसमानप्रकारकज्ञानस्याप्रतिबन्धकत्वात्। गदाधरेण तादृशज्ञानस्य प्रतिबन्धकत्वं स्वीकृत्य पर्याप्तिनिवेशः कृतः। एकत्वपर्याप्तिरुभये नयेऽस्तीत्यास्तां विस्तरः।

साध्यतावच्छेदकभिन्नो य इति। महानसीयवह्निनिष्ठा प्रतियोगिता तु साध्यतावच्छेदकीभूतवह्नित्वभिन्नो यः साध्यनिष्ठो धर्मः महानसीयत्वं, तदवच्छेद्यैवेति तदनवच्छेद्यत्वविरहात्तद्वारणम्। अत्र साध्यतावच्छेदकभिन्नो य इत्यनुक्तौ व्यभिचारिमात्रेऽतिव्याप्तिः, साध्याभावीयप्रतियोगितायाः साध्यनिष्ठसाध्यतावच्छेदकीभूतधूमत्वरूपधर्मावच्छेद्यत्वात्। साध्यतावच्छेदकातिरिक्तधर्मानवच्छेद्यत्वमात्रोक्तौ वह्निमान् धूमादित्यादावसम्भवः, घटाद्यभावीयप्रतियोगितायाः वह्नित्वातिरिक्तघटत्वाद्यवच्छिन्नत्वादतः साध्यनिष्ठेति।

[१] अत्र धर्मे साध्यनिष्ठत्वं यदि यत्किंचित्सम्बन्धेन तदा वह्निमान् धूमादित्यादौ तादृशप्रतियोगित्वाप्रसिद्धिः, घटत्वादेरपि कालिकेन साध्यवृत्तित्वात्। अथ साध्यतावच्छेदकताघटकसंबन्धेन साध्यवृत्तित्वनिवेशे न दोषः। न च महानसीयत्वस्य महानसवृत्तित्वरूपतया साध्यतावच्छेदकताघटकसमवायसम्बन्धेन साध्यवृत्तित्वविरहान्महानसीयवह्न्यभावमादायाव्याप्तितादवस्थ्यमिति वाच्यम्। महानसीयत्वस्य महानसानुयोगिकसंयोगस्वरूपतया तत्सम्बन्धेन साध्यवृत्तितया तादृशाभावस्य लक्षणाघटकत्वादिति चेन्न।

तथासति वह्निमान् धूमादित्यादौ तद्व्यक्तित्वादौ साध्यतावच्छेदकताघटकसमवायसम्बन्धेन वह्निवृत्तित्वविरहेण तद्व्यक्तित्वावच्छिन्नाभावमादायाऽनवच्छेदकत्वानुसरणस्यावश्यकत्वेन तद्वैयर्थ्यस्यासङ्गतिः स्यात्, एवं प्रमेयवान् वाच्यत्वादित्यादौ साध्यतावच्छेदकताघटकस्वरूपसम्बन्धेन घटत्वादेरवृत्तितया तदवच्छिन्नप्रतियोगितायां साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मानवच्छिन्नत्वस्य सत्त्वेन तन्निरूपकाभावमादायाव्याप्तिवारणसम्भवे एतत्कल्पस्य निर्दोषतया तत्परित्यागस्याऽनुचितत्वापाताच्च। यद्यपि रूपवान् पृथिवीत्वादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिवेशस्यावश्यकतया घटत्वनिष्ठावच्छेदकतायां तद्विरहेण घटाभावस्य लक्षणाघटकत्वात्प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिरस्त्येवेति न ग्रन्थासङ्गतिः। न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावो विवक्षणीयः, तथाच घटत्वनिष्ठावच्छेदकतायां प्रमेयत्वनिष्ठत्वविरहेणोभयाभावस्याऽक्षततयाऽव्याप्तिविरहेण ग्रन्थासङ्गतिरिति वाच्यम्। तथापि वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेदकस्थले साध्यतावच्छेदकताघटकतादृशसमवायेन साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मस्याऽ-

(१) साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकसमानाधिकरणवृत्त्यवच्छेदकत्वानिरूपकत्वं तत्पर्यवसितोऽर्थः। तेन प्रमेयसाध्यतावच्छेदकस्थले साध्यतावच्छेदकेतराऽप्रसिद्धावपि न क्षतिः।

थोगिता तु न निवेश्या, तथासति तादृशप्रतियोगिताशून्यसाध्यसामाना-धिकरण्यस्यैव व्याप्तित्वसम्भवे साध्यतावच्छेदकस्य तदनवच्छेदकत्वानु-सरणवैयर्थ्यापत्तेरिति ध्येयम् ।

---

प्रसिद्ध्याऽव्याप्त्यापत्तेः । एवं कालिकस्वरूपान्यतरसम्बन्धेन प्रमेयत्वस्य साध्यतावच्छेदकस्थले साध्यतावच्छेदकताघटकान्यतरसम्बन्धेन वस्तुमात्रस्यैव साध्यवृत्तितया तदनवच्छिन्नप्रतियो-गित्वाऽप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्, तत्तद्व्यक्त्यभावस्य वारणासम्भवाच्च, अतः प्रतियोगिताव-च्छेदकतावच्छेदकसम्बन्धेनैव साध्यवृत्तित्वं वाच्यमतो नाऽसङ्गतिरपीति ध्येयम् ।

[२] नचैवमपि साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्ना या साध्यनिष्ठा प्रतियोगिता तद-न्यत्वमेव प्रतियोगितायां निवेश्यम्, एवञ्च साध्यनिष्ठत्वं प्रतियोगितायां स्वरूपेणैवेति लाघव-मपीति वाच्यम् । वह्निमान् धूमादित्यत्र वह्निघटोभयाभावमादायाव्याप्तेः । नच साध्यताव-च्छेदकातिरिक्तधर्मावच्छिन्ना या साध्यनिष्ठा प्रतियोगिता तदनिरूपकत्वमभावे निवेश्यमिति वाच्यम् । तद्रूपवान् द्रव्यत्वादित्यत्र समनियताभावयोरैक्यमते तद्रसाभावमादायाऽतिव्याप्तेः ॥

**तथासति**—तथानिवेशे सति । **तादृशेति** । हेतुसमानाधिकरणाभावेत्यर्थः । **वैयर्थ्या-पत्तेरिति** । तद्व्यक्तिनिष्ठप्रतियोगितायाः साध्यतावच्छेदकातिरिक्तसाध्यवृत्तितद्व्यक्तित्वावच्छि-न्नत्वेन तद्व्यक्त्यभावस्य लक्षणाऽघटकत्वात् ।

[१] ननु तादृशप्रतियोगिताशून्यत्वस्यैव पर्यवसितत्वे प्रमेयसाध्यकस्थलेऽव्याप्ति-शङ्कैव नोदेति, तत्र साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मानवच्छिन्ना या विषय-यित्वसम्बन्धावच्छिन्नप्रमेयत्वनिष्ठावच्छेदकताकप्रतियोगिता तन्निरूपकस्य प्रमेयत्ववज्ज्ञा-नाभावस्य लक्षणघटकतया तदीयप्रतियोगिताशून्यत्वस्य ज्ञानभिन्ने प्रमेयमात्रे सत्त्वात् । नच समवायेन प्रमेयस्य साध्यतायां आत्मत्वहेतावव्याप्तिः, प्रतियोगिव्यधिकरणतादृशाभा-वाऽप्रसिद्धेरिति वाच्यम् । दिक्कृतविशेषणताविशेषसम्बन्धेन प्रमेयत्ववदभावस्य प्रसिद्ध-त्वात् । एवं समवायेन ज्ञानघटान्यतरस्य साध्यतायां आत्मकपालान्यतरत्वहेतावव्याप्तिः, वि-षयितया तादृशान्यतरत्ववतो ज्ञानादेरभावस्य हेत्वधिकरणकपाले सत्त्वात्, दिक्कृतविशेषण-तासम्बन्धेन तादृशान्यतरत्ववतो घटादेरभावस्य हेत्वधिकरणात्मनि सत्त्वादिति चेन्न ।

साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्याऽवच्छेदकतायां विरहेण तादृशाभा-वस्य लक्षणाऽघटकत्वात् । नच रूपवान् पृथिवीत्वादित्यादौ रूपत्ववज्ज्ञानाभावीयप्रतियोगिता-शून्यत्वस्य रूपादौ सत्त्वादव्याप्तिविरहात्, अवच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धा-वच्छिन्नत्वस्यानिवेशेनोक्ताभावस्य लक्षणघटकत्वादिति वाच्यम् । तद्व्यक्त्यनुयोगिकसमवाय-सम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य लक्षणघटकतया तदीयप्रति-योगिताशून्यत्वस्य वह्न्यादौ विरहादव्याप्तिभिया विषयितासमवायान्यतरसम्बन्धेन रूपत्ववि-शिष्टस्य साध्यतायां आत्मघटान्यतरत्वहेतौ प्रत्येकाभावमादायाव्याप्तिभिया च इतरन्यूनवा-रकसहितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेश आवश्यकः, तथाच प्रमे-यवान् वाच्यत्वादित्यादौ विषयितया प्रमेयत्ववज्ज्ञानाभावस्य लक्षणाघटकत्वादव्याप्तिसङ्गति-रिति ध्येयम् ।

**अपि च प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः, तथाहि साध्यतावच्छेदकातिरिक्तं यत्साध्यवृत्ति घटत्वादिकं तदनवच्छेद्यप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्याऽप्रसिद्धेरिति तु नव्याः।**

---

अवच्छेदकत्वानुसरणवैयर्थ्ये इष्टापत्तौ दोषान्तरमाह—अपि चेति। केचित्तु समवायेन जातिविशिष्टस्य तादात्म्येन साध्यतायां सत्तादिहेतौ हेतुसमानाधिकरणानां द्रव्यन्न गुणो नेत्यादिभेदानां प्रतियोगिताशून्यत्वस्य साध्ये विरहादव्याप्तिवारणायाऽनवच्छेदकत्वानुसरणमावश्यकम्, एवं च तादृशाभावप्रतियोगितावच्छेदिका यद्यपि द्रव्यत्वादिजातिस्तथापि सत्तारूपजातेरनवच्छेदकत्वान्नाव्याप्तिः। न चाऽनवच्छेदकत्वानुसरणेऽपि उक्तस्थले जातिमद्घटो नेतिप्रतीतिसिद्धाभावमादायाव्याप्तितादवस्थ्यमिति वाच्यम्। साध्यतावच्छेदकरूपाभिन्नं यत्साध्यवृत्तिरूपं तदवृत्तित्वस्य प्रतियोगितायां विवक्षणीयत्वात्, रूपे साध्यवृत्तित्वं च स्वाश्रयाश्रयत्वसंबन्धेन, अवृत्तित्वघटकवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन, तथाच तादृशरूपातिरिक्तं यत्सत्ताघटत्वगतद्वित्वं तदवृत्तित्वस्य सत्तावद्घटाभावीयप्रतियोगितायां विरहेण तस्य लक्षणाऽघटकत्वेनाऽव्याप्तिविरहात्। नच घटत्वावच्छिन्नाभावीयप्रतियोगितायां तादृशरूपातिरिक्तं यद् घटत्वगतैकत्वं तदवृत्तित्वस्य विरहेणाऽभावाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। गगनाभावस्यैव(१) लक्षणघटकतया तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वान्न काप्यनुपपत्तिरित्याहुः।

तच्चिन्त्यम्। **साध्यतावच्छेदकाभिन्नेत्यस्य** प्रमेयाश्रयवान् धूमादित्यादावव्याप्तिवारणायाऽवश्यं येन रूपेण साध्यतावच्छेदकत्वं तेन रूपेण तदनवच्छिन्नप्रकारतावच्छेदकभिन्नार्थकतया द्रव्यत्वादेर्जातित्वेन जात्यनवच्छिन्ना या प्रकारता तदवच्छेदकतया साध्यतावच्छेदकातिरिक्तसा-

---

(१) न च तादात्म्यन गगनसाध्यकगगनत्वहेतावभावाप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति वाच्यम्। साध्यवृत्तिवृत्तिरूपे महाकालत्वगतैकत्वातिरिक्तत्वस्यापि विशेषणीयत्वात् तथाच महाकालभेदमादायैव लक्षणसमन्वयात्। नच तादात्म्येन गगनमहाकालान्यतरत्वसाध्यकगगनमहाकालान्यतरत्वहेतौ प्रत्येकं गगनाभावं महाकालाभावं वादायाऽव्याप्तिरिति वाच्यम्। गगनत्वगतैकत्वातिरिक्तसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकयत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसाध्यवृत्तिवृत्तिरूपावृत्तिप्रतियोगिताया निवेशेनाऽव्याप्तिविरहात्। नच तद्व्यक्तित्वेन गगनस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ गगनाभावस्य लक्षणघटकतयोऽव्याप्तिरिति वाच्यम्। अनवच्छेदकत्वानुसरणेनैव तद्वारणात्। लाघवन्तु निरवच्छिन्नत्वसाध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वाद्यनिवेशेन बोध्यम्। न चाऽयोगोलकीयवह्न्यभावीयप्रतियोगितायां यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। हेत्वधिकरणवृत्तिवृत्तिवृत्तित्वस्य तादृशरूपे निवेशनीयत्वात्। तथाचायोगोलकीयत्ववह्नित्वगतद्वित्वं हेत्वधिकरणवृत्तिवृत्तिवृत्तीति नोक्तप्रतियोगिताकाभावमादायाऽव्याप्तिः। तादृशवृत्तिता साध्यतावच्छेदकसम्बन्धेन। द्वितीयवृत्तिता साध्यतावच्छेदकतावच्छेदकसम्बन्धेनेति। तदपि न; घटवन्नित्यज्ञानत्वादित्यादौ नित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायास्तादृशरूपावृत्तित्वविरहेणाऽव्याप्त्यापत्तेरिति त दादात्म्येन प्रमेयसाध्यकगगनत्वहेतावव्याप्तिरिति चिन्तनीयम्।

तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः ।

द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्य वारणार्थं विशिष्य लक्ष्यं निर्दिशति तद्रूपविशिष्टस्येत्यादिना ।

ध्यनिष्ठधर्मानवच्छिन्नत्वस्य द्रव्यादिनिष्ठप्रतियोगितायामसत्त्वेन द्रव्यादिभेदस्य लक्षणाघटकत्वेनाऽनवच्छेदकत्वानुसरणमनावश्यकमेवेति ।

हेतुसमानाधिकरणाभावस्याऽप्रसिद्धेरिति । [१]अथ प्रमेयवान् वाच्यत्वादित्यत्र साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्येव कथं नोक्तम् । नच संसर्गीयप्रतियोगितायामेव प्रमेयत्वावच्छिन्नत्वस्य प्रसिद्धिसम्भवात्प्रतियोगित्वाऽप्रसिद्धिर्नोक्तेति वाच्यम् । तथासति अभावे प्रतियोगितानिरूपकत्वस्यैवाऽप्रसिद्धेर्वक्तव्यत्वापातादिति चेन्न । स्वरूपसमवायादिसम्बन्धावच्छिन्नप्रमेयनिष्ठप्रतियोगितायामेव तत्प्रसिद्धिसौलभ्यात् । अत एवाऽभावाऽप्रसिद्धेरित्यनुक्त्वा हेतुसमानाधिकरणाभावस्याऽप्रसिद्धेरित्युक्तमिति ध्येयम् ।

[२] केचित्तु कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायामेव साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वसम्भवात्प्रतियोगित्वाप्रसिद्धिर्नोक्ता । अभावाप्रसिद्धिकथनेन च कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावे प्रतियोगिवैयधिकरण्यस्याऽसत्त्वादभावाप्रसिद्धिरित्युक्तमिति प्राहुः ।

[३] वस्तुतो ध्वंसीयप्रतियोगितायां न किञ्चिद्धर्मावच्छिन्नत्वम् , तेन तादृशप्रतियोगिताया एव तथाविधत्वादभावपर्यन्तानुधावनम् । तादृशधर्मानवच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्धिः सूचितेति तत्त्वम् ।

प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टेत्यारभ्य सामानाधिकरण्यपर्यन्तं लक्षणमुक्तम् , लक्ष्या(१) व्याप्तिः, सा च यदि सामानाधिकरण्यरूपा तदा इतरभेदानुमाने पक्षतावच्छेदकहेत्वोरैक्यादुपनयवाक्याच्छाब्दबोधानुपपत्तिरतो लक्ष्यमाह दीधितौ **तद्रूपविशिष्टस्येत्यादिना** । तत्पदं हेतुपरम्, षष्ठ्यर्थो निष्ठत्वम्, द्वितीयतत्पदं साध्यपरम्, तथाच हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठा साध्यतावच्छेदकावच्छिन्ननिरूपितेत्यर्थः । अत्र तस्य तन्निरूपितेत्यनुक्त्वा तद्रूपविशिष्टस्येत्युक्तौ विशेषमाह **द्रव्यत्वादिरूपेणेति** । अत्र तृतीयार्थोऽवच्छिन्नत्वम् , तस्य धूमेऽन्वयः । धूमपदोत्तरसप्तम्या लिङ्गत्वमर्थः, तस्य व्याप्यत्वघटकवह्न्यनुमितावन्वयः । वह्निव्याप्यत्वं च वह्न्यनुमितिजनकतायां विषयविधयाऽवच्छेदकत्वम् । वारणार्थं लक्ष्यतावारणायेत्यर्थः । तथाच द्रव्यत्वावच्छिन्नलिङ्गकवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदकस्य पक्षतावारणायेति समुदितार्थः । धूमसामान्येत्यस्य धूमत्वावच्छिन्नलिङ्गकतत्तद्व्यक्तित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदकस्य च लक्ष्यतावारणायेत्यर्थः । **विशिष्य लक्ष्यमित्यस्य** हेतुतावच्छेदकं साध्यतावच्छेदकं च विशेषतो निवेश्य, लक्ष्यं(२) अनुमितिजनकतावच्छेदकरूपपक्षं **निर्दिशति** ज्ञापयतीत्यर्थः ।

(१) लक्ष्यलक्षणभावश्चात्र तादात्म्येन बोध्यः ।

(२) यद्धर्मावच्छिन्ननिरूपितयद्धर्मावच्छिन्नत्वम् ... निरूपणं तद्धर्मावच्छिन्नो लक्ष्यः, अथा-

तथाच तद्धर्मावच्छिन्नहेतुकतादृशधर्मावच्छिन्नविधेयताकानुमितेर्जनकतायां विषयाविधयाऽवच्छेदिका इति तदर्थः। तेन व्याप्तिपदेनाऽपि

---

तथाच तद्धर्मावच्छिन्नलिङ्गकतद्धर्मावच्छिन्नविधेयताशाल्यानुमितिजनकतावच्छेदिका स्वेतरभिन्ना तद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यादित्यत्र तद्धर्माश्रयलिङ्गकत्वोक्तौ धूमत्वाश्रयद्रव्यत्वावच्छिन्नलिङ्गकवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदकस्यापि पक्षान्तर्गततया तादात्म्येन धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपव्याप्तेरसत्त्वाद् भागासिद्धिः स्यादतस्तद्धर्मावच्छिन्नलिङ्गकेति। एवं धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य तादात्म्येन धूमत्वावच्छिन्नहेतुकवह्नित्वाश्रयतत्तद्व्यक्तित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतावच्छेदके पक्षान्तर्गतेऽसत्त्वात्तद्दोषतादवस्थ्यमतस्तद्धर्मावच्छिन्नत्वं विधेयतायां निवेशितम्। तदेवाह **तथाचेति**। अथ द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्याऽप्रसिद्धतया कथं तदन्तर्भावेण भागासिद्धिः। न च धूमवदनुयोगिकसंयोगेन द्रव्यत्वावच्छिन्नलिङ्गकानुमितिजनकतावच्छेदकस्य प्रसिद्धिरिति वाच्यम्। तत्रोक्तसामानाधिकरण्यस्य सत्त्वेन भागासिद्धिविरहादिति चेन्न। धूमत्वावच्छिन्नलिंगकवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिजनकतानतिरिक्तवृत्तिविषयित्वं स्वेतरभिन्नं धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यनिरूपितत्वादित्यत्र तात्पर्यात्। विषयिता च भ्रमप्रमासाधारणीति नाऽप्रसिद्धिरिति(२)।

---

न्तरधर्मावच्छिन्नस्य लक्षणम्। तथाच तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदिका का इति जिज्ञासया तद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मावच्छिन्नसामानाधिकरण्यरूपव्याप्तेर्निरूपणम्, अनुमितिजनकतावच्छेदकत्वावच्छिन्नो लक्ष्यः सामानाधिकरण्यमेव लक्षणम्। यथा हेत्वाभासपदार्थत्वावच्छिन्नो लक्ष्यः हेत्वाभासपदार्थत्वावान्तरानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं लक्षणं तथा प्रकृतेपि बोध्यम्।

(२) परे तु व्याप्यत्वस्य व्याप्यत्वव्यवहारस्य. लक्ष्यं इतरभेदानुमित्युद्देश्यरूपव्याप्यत्वपदार्थम्। अयं भावः। तत्तद्धर्मावच्छिन्नहेतुसाध्यबोधकपदसमभिव्याहृतव्याप्यत्वपदार्थः तत्तद्धर्मघटित एव। तत्र व्याप्यत्वं यदि तद्धर्माश्रयनिष्ठलिङ्गताकवद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकरूपं तदा द्रव्यं वह्निव्याप्यमिति व्यवहारः स्याद्, तत्प्रयोजकस्य द्रव्यत्वाश्रयनिष्ठवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्य धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकधूमत्वावच्छिन्नसामानाधिकरण्यरूपविषयस्य सत्त्वात्। विशिष्य लक्षणनिर्देशे तु द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकरूपविषयस्याप्रसिद्धेर्नापत्तिरिति प्राहुः।

केचित्तु धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यज्ञानं विनापि वह्निव्याप्यद्रव्यवान् पर्वत इति ज्ञानाद्द्रव्यत्वावच्छिन्नहेतुकवह्नित्वावच्छिन्नविधेयताकानुमितेः, धूमव्यापकतद्वह्निसमानाधिकरणधूमवान्पर्वत इति ज्ञानाच्च धूमत्वावच्छिन्नहेतुकतद्वह्निविधेयकानुमितेश्चोत्पत्त्या निरुक्तव्याप्तेर्धूमत्वाश्रयहेतुकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वं धूमत्वावच्छिन्नहेतुकवह्नित्वाश्रयविधेयकानुमितिजनकतावच्छेदकत्वं च न सम्भवति, किन्तु धूमत्वावच्छिन्नहेतुकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वमेवेत्याशयेनोक्तम्। द्रव्यत्वादिरूपेणेति। तथाच द्रव्य-

तादृशसामानाधिकरण्योक्त्या न पौनरुक्त्यम्(१)। व्याप्तेः सामान्यरूपता- लाभाय यावदिति पूर्वत्र येन केनापीति च ।

ननु दण्डिमान् दण्डिसंयोगादित्यत्राऽव्याप्तिः, चालनीयन्यायेन दण्ड- मात्रस्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात् । न च प्रतियोगिताऽनवच्छेदकमित्यत्राऽवच्छेदकत्वं शुद्धसाध्यतावच्छेदकक- स्थले निरवच्छिन्नमिव विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छे- दकतावच्छेदकादितरोभयानवच्छिन्नं ग्राह्यम्, अन्यथा पर्वते महानसीय- वह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यादिप्रतीत्या विशिष्टवह्नित्वस्य तादृ- शाभावप्रतियोगितावच्छेदकतया वह्निमान् धूमादित्यादाविव जातिमद्-

---

व्याप्तेः सामान्यरूपतालाभायेति । व्याप्तेरैक्यलाभायेत्यर्थः । तथाचैतस्यैव भावं सामानाधिकरण्यव्यक्तीनां भेदेपीत्यादिना, वस्तुतस्त्वित्यादिना व्यापकसामानाधिकरण्यविशिष्ट- धूमत्वादिकं व्याप्तिरिति भावं च वक्ष्यति ।

नन्विति । दण्डिसंयोगादित्यत्र दण्डिसंयोगपदं दण्डिप्रतियोगिकत्वविशिष्टसंयोगपरम्, तथाच संयोगस्य द्विनिष्ठतया दण्डिनि वर्त्तमानत्वेऽपि न सद्धेतुत्वव्याघातः स्वप्रतियोगिकत्व- विशिष्टस्य स्वस्मिन्नसत्त्वात् । अनुयोगितासम्बन्धेन वा दण्डिसंयोगस्य हेतुता बोध्या । हेतुसमानाधिकरणाभावेति । हेतुभूतदण्डिसंयोगाधिकरणवृत्तिततद्दण्डीनास्तीतिसि- द्धाभावेत्यर्थः । अव्याप्तिमपाकर्तुं शंकते नचेति । निरवच्छिन्नत्वं च नाऽवच्छेदकत्वानिरू- पकत्वम्, अवच्छेदकतामात्रस्यैव संबन्धावच्छिन्नत्वेन निरवच्छिन्नावच्छेदकत्वाऽप्रसिद्धेः, किन्तु किंचित्संबन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वम्(२) । अन्यथा—शुद्धसाध्यतावच्छेद- ककस्थलेऽवच्छेदकतायां निरवच्छिन्नत्वानिवेशे । महानसीयवह्निवृत्तित्वविशिष्टजातिः वह्नित्वं तद्वान्महानसीयवह्निरेव तदभावस्य पर्वते सत्त्वात्तादृशाभावप्रतियोगितावच्छेदकमेव वह्नि त्वमित्यव्याप्तिरिति भावः । तथैव विशिष्टसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां

---

त्वावच्छिन्नधूमहेतुकवन्हिसाध्यकानुमितिजनकतावच्छेदकत्वस्येति "द्रव्यत्वादिरूपेण धूमे वन्हिव्याप्यत्वस्य" एतत्पर्यन्तस्यार्थः । वारणायेत्यस्याऽभावसम्पादनायेत्यर्थः । निरुक्तव्याप्तिधर्मिणश्चाऽध्याहारः करणीयः । तथाच वन्हित्वावच्छिन्ननिरूपितधूमव्याप्तेः द्रव्यत्वावच्छिन्नलिङ्गकवन्हित्वावच्छिन्नविधेयताकानुमितिजनकता- वच्छेदकत्वाभावसम्पादनायेति पर्यवसितोर्थः । एवं तत्तद्वन्हिव्याप्यत्वस्येत्यत्रापि बोध्यम् । विशिष्य लक्ष्यं निर्दिशतीत्यस्य हेतुतावच्छेदकं साध्यतावच्छेदकं च निवेश्य पक्षं ज्ञापयतीत्यर्थः । एवं च धूमत्वावच्छिन्न- लिङ्गकवन्हित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदिका धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रति- तानवच्छेदकवन्हित्वावच्छिन्नसामानाधिकरण्यरूपेति पर्यवसितामिति प्राहुः ।

(१) नोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यम् ।

(२) एतेन निरवच्छिन्नत्वस्य यथाश्रुतार्थकत्वे महानसीयवन्हिवृत्तित्वविशिष्टजातिमद्वन्हिर्नास्तीत्य- भावमादायाऽव्याप्तिरपि समाहिता । तत्र वन्हिनिष्ठप्रतियोगितायाः निरवच्छिन्नवन्हित्वनिष्ठावच्छेदकतानिरू- पकत्वेऽपि सावच्छिन्नाऽवच्छेदकत्वानिरूपकत्वाभावात् । वस्तुतः साध्यतावच्छेदकवन्हित्वनिष्ठनिरवच्छिन्ना- ऽवच्छेदकत्वानिरूपकत्वसाध्यतावच्छेदकताविशिष्टान्यजातित्वावच्छिन्नावच्छेदकतानिरूपकत्वयोः सत्त्वेन तादृ- शाभावमादायाऽव्याप्तिशंकैव नोदेतीति ।

**वान् घटत्वादित्यादावव्याप्तिप्रसंगात, घटे पटसमवेतत्वविशिष्टजातिमा-मान्नास्तीत्यादिप्रतीत्या विशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकत्वात्।**

साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वं निवेशनीयम्, अनिवेशे तूक्तम्—**अव्याप्तिप्रसंगादिति ।**

[१] अथ महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वतदितरद्रव्यत्वोभयनिष्ठजातित्वावच्छिन्नावच्छेदकताकत्वस्य सत्त्वात्तदितरोभयानवच्छिन्नत्वविरहेण कथमव्याप्तिरिति चेन्न । वह्नित्वप्रतियोगिकसमवायसम्बन्धावच्छिन्ना या महानसीयवह्निनिरूपितवृत्तिता तद्विशिष्टजातिमान्नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वमात्रे सत्त्वेन तदितरोभयानवच्छिन्नत्वस्य तदीयप्रतियोगितायां सत्त्वात्तमादायाव्याप्तिदाने तात्पर्यात् । किंच तादृशाभावप्रतियोगितावच्छेदकता एकैव वह्नित्वे द्रव्यत्वे चाऽस्तीति, तथाच तदितरनिष्ठसाध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्व विरहेण तदितरोभयाभावसत्त्वात्तादृशाभावस्य लक्षणघटकत्वाद्यथाश्रुतमेव सम्यक् ।

[२] ननु तथापि साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकताकत्वतदन्यतादृशवैशिष्ट्य(जातित्व)निष्ठावच्छेदकताकत्वोभयोः सत्त्वादव्याप्तिर्निरह इति चेन्न । महानसीयकालीनवह्निमान् धूमादित्यादौ महानसीयवन्ह्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिवारणाय साक्षात्साध्यतावच्छेदकताविशिष्टान्यावच्छेदकताकत्वघटितोभयाभावनिवेशस्यावश्यकतया यत्र महानसीयवह्नित्ववद्वान् धूमादित्यादौ महानसीयत्ववैशिष्ट्यं सामानाधिकरण्यसंबन्धेन वह्नित्वांशे भासते तत्र साक्षात्साध्यतावच्छेदकता वह्नित्वनिष्ठावच्छेदकतैव तद्विशिष्टान्यमहानसीयत्वनिष्ठावच्छेदकतानिरूपकत्वघटितोभयाभावस्य प्रतियोगितायां विरहेण महानसीयकालीनवह्न्यभावस्य लक्षणाघटकत्वेनाभावान्तरमादायाऽतिव्याप्तिवारणाय साक्षात्साध्यतावच्छेदकताविशिष्टान्यसाक्षादवच्छेदकतानिरूपकत्वघटितोभयाभावनिवेश आवश्यकः । तन्निवेशे च प्रमेयकालीनघटवन्नित्यज्ञानत्वादित्यादौ नित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायां पटाभावीयप्रतियोगितायां च साक्षात्साध्यतावच्छेदकताविशिष्टान्यसाक्षादवच्छेदकतान्तर्गतवैशिष्ट्यनिष्ठावच्छेदकतानिरूपकत्वसाध्यतावच्छेदकप्रमेयनिष्ठावच्छेदकतानिरूपकत्वोभयोः सत्त्वादुभयाभाववत्प्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिरतः साध्यतानिष्ठसाक्षादवच्छेदकतानिरूपकत्वघटितोभयाभावनिवेश आवश्यकः(१), तथा च महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीति प्रतीतिसिद्धाभावप्रतियोगितायां साक्षात्साध्यतावच्छेदकताविशिष्टान्यसाक्षादवच्छेदकतानिरूपकत्वसत्त्वेऽपि साक्षात्साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वविरहेणोभयाभावसत्त्वात्तमादायाऽव्याप्तिवारणायावच्छेदतायां निरवच्छिन्नत्वनिवेशः ।

[३] नन्वेवं जातित्वावच्छिन्नावच्छेदकताया अपि जातिभेदेन नानात्वे साक्षाद्वह्नित्वनि-

(१) एतेन महानसीयवह्निरित्यत्र वह्नित्वस्य स्वरूपतो भानाद् वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वतद्विशिष्टान्यजातित्वावच्छिन्नावच्छेदकताकत्वयोः सत्त्वेन कथं तस्य लक्षणघटकतेति प्रत्युक्तम्। साक्षादवच्छेदकताकत्वाभावादिति । केचित्तु वह्निपदं महानसीयपरिचयार्थम, न त्वभावघटकमप्रयोजकत्वादेवं च न शङ्काया अवसर इति वदन्तीति ध्येयम् ।

प्रावच्छेदकताकत्वतद्विशिष्टान्यद्रव्यत्वनिष्ठसाक्षादवच्छेदकतानिरूपकत्वयोः सत्त्वेन लक्षणाघटकत्वात्पुनरसङ्गतिरिति चेन्न । एकधर्मावच्छिन्नावच्छेदकताया ऐक्योपगमा(१)न्नासंगतिः ।

[४] नन्वेवमपि महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य पर्वतादौ सत्त्वात्तादृशाभावे प्रतियोगिवैयधिकरण्यविरहेण कथं तमादायाऽव्याप्तिः । नच विशिष्टसत्तावान् जातेरित्यादौ महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वान् धूमादित्यादौ चोक्तयुक्त्या साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायाऽतिव्याप्तिवारणाय यादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वाभावस्य(२) विवक्षणीयतयाऽव्याप्तिसंगतिः । रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । न च महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं वह्नित्वगतैकत्वमपि जातिगतसमुदायत्वस्य तथात्वेऽलीकत्वापत्तेरिति कथमयमभावः प्रतियोगिव्यधिकरण इति वाच्यम् । साक्षात्परम्परासाधारणावच्छेदकत्वस्वीकारात्, तथा च महानसीयवह्निवृत्तित्ववैशिष्टयस्य जातेः जातित्वस्यापि तादृशपर्याप्त्यनुयोगितावच्छेदकतया तद्वृत्तिनिरूपकताकाधिकरणतायाः केवलमहानसे सत्त्वेन तस्याः पर्वतेऽभावात्तादृशाभावे प्रतियोगिवैयाधिकरणसत्त्वेनाऽतिव्याप्तिविरहेऽपि तुल्ययुक्त्याऽव्याप्तिवारणाय निरवच्छिन्नत्वविशेषणसंगतिः । साक्षात्परंपरासाधारणावच्छेदकत्वानभ्युपगमे तु प्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं निवेश्यम् । वै० स्वतादात्म्यस्वनिरूपितावच्छेदकतात्वैतदन्यतरसंबन्धेन, वृत्तित्वमपि स्वनिरूपितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, वै० पूर्ववद् वाच्यम् । एकत्वादेः पर्याप्त्यस्वीकारा(३)दिति चेन्न ।

दत्तोत्तरत्वात् (४) ।

---

(१) ऐक्यानुपगमे महानसीयवह्निपदं तद्व्यक्तिपरम्, तथा च तद्व्यक्तिवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावमादायाव्याप्तिदाने तात्पर्यमवसेयम् ।

(२) ननु व्यभिचारिणः सर्वलक्षणस्यालक्ष्यतया शुद्धसाध्यतावच्छेदककस्थलीयलक्षणस्य दण्डिमान् द्रव्यत्वादित्यादौ दण्डावच्छिन्नप्रतियोगितायां निरवच्छिन्नावच्छेदकताकत्वविरहेण साध्याभावस्य लक्षणाऽघटकत्वादभावान्तरमादायाऽतिव्याप्तिवारणाय साध्यतावच्छेदकतायामपि निरवच्छिन्नत्वं निवेशनीयम्; एवं च तादृशप्रतियोगितायाः सावच्छिन्नावच्छेदकत्वानिरूपिकायाः अनवच्छेदकं यत्साध्यतानिरूपितनिरवच्छिन्नावच्छेदकतावत्साध्यतावच्छेदकं तदवच्छिन्नेत्यादि पर्यवसितलक्षणेनैवोक्तातिव्याप्तेरपि वारणसम्भवात्पर्याप्तिनिवेशो व्यर्थ इति चेन्न । तार्णवह्निमान् धूमादित्यादौ साध्याभावे प्रतियोगिवैयाधिकरण्यसंपादनार्थं पर्याप्तिघटितप्रतियोगिवैयाधिकरण्यनिवेशस्याऽवश्यकत्वात् ।

(३) साक्षात्परम्परासाधारणावच्छेदकतास्वीकारे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगितापर्याप्त्यनुयोगितानवच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसामानाधिकरण्यस्य, तदस्वीकारे तु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत्साध्यतावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसाध्यसामानाधिकरण्यस्य वा सम्यक्त्वाच्छेदधैयर्थ्यापत्तेः, उभयत्र वै० उक्तान्यतरसम्बन्धेन ।

(४) असमानप्रकारकज्ञानत्वं जगदीशमतेऽप्रतिबन्धकतया साध्यतावच्छेदकतदितरेत्यादिनिवेशः । एक-

**जातिमद्वान् घटत्वादिति** । अत्र समवायेन जातिविशिष्टस्य तादात्म्येन साध्यत्वे हेत्वधिकरणे घटे द्रव्यघटभेदाऽसत्वेन. द्रव्यत्वघटत्वयोरेव तादृशप्रतियोगितानवच्छेदकत्वेन लक्षणसमन्वय एव स्यात् , संयोगेन साध्यतायां त्वसद्धेतुत्वापत्तिः, अतः समवायेनैव तथात्वमिति ग्रन्थकृदभिप्रायः ।

अव्याप्तिं योजयति **घटे पटसमवेतत्वविशिष्टेति** ।

[१] ननु तादृशाभावप्रतियोगितानवच्छेदकत्वस्य घटत्वादिजातौ सत्वेन कथमव्याप्तिरिति चेन्न । साध्यतावच्छेदकसमवायसंबन्धेन घटादौ द्रव्यमात्रस्याऽसत्वेन घटाभावस्यापि लक्षणघटकत्वात् । एवं सत्तावद्घटो नास्तीत्यभावमादाय सत्ताया अवच्छेदकत्वं बोध्यम् ।

[२] ननु आत्माऽभावस्य प्रतियोगिवैयधिकरण्याभावादेव न लक्षणघटकता, आत्माभावीयप्रतियोगितावच्छेदकाऽऽत्मत्वावच्छिन्नाधिकरणत्वाऽप्रसिद्धेरिति चेन्न । अभावान्तरीयप्रतियोगितानवच्छेदकत्वस्याऽऽत्मत्वेऽसत्वेपि तदवच्छिन्नसामानाधिकरण्याऽप्रसिद्धयाऽव्याप्तिसंगतिः ।

[३] अथ पटसमवेतत्ववैशिष्ट्यं यदि स्वरूपेण, तदा गुणत्वनीलत्वसत्वादिजातीनामनवच्छेदकत्वात्कथमव्याप्तिः । यदि स्वरूपसामानाधिकरण्यान्यतरसंबन्धेनेत्युच्यते, तदा रूपत्वादीनामवच्छेदकत्वेऽपि तादृशाभावे प्रतियोगिवैयधिकरण्यविरहेण लक्षणाघटकत्वाद् ग्रन्थासंगतिः, घटपटगतद्वित्ववृत्तिद्वित्वत्वजातावपि पटसमवेतत्ववैशिष्ट्यसत्वेन तद्वान्नास्तीत्यभावस्य घटादावसत्वात् । न च पटसमवेतत्वविशिष्टद्वित्वत्वावच्छिन्नाधिकरणता पटे एवास्तीति वाच्यम् । निरूपकांशे वैशिष्ट्यस्य यदा भानं तदैव विशिष्टधर्मावच्छिन्नाधिकरणताया वैलक्षण्यम्, यथा समानाधिकरणवृत्तित्वसंबन्धेन यदि गुणकर्मान्यत्ववैशिष्ट्यं सत्तात्वे भासते तदा तादृशभेदविशिष्टसत्तात्वावच्छिन्नाधिकरणतायाः शुद्धसत्तात्वावच्छिन्नाधिकरणतायाश्च न वैलक्षण्यं तथा प्रकृतेऽपि । परन्तु अयं विशेषः—सामानाधिकरण्यघटितसामानाधिकरण्यसंबन्धेन गुणादिभेदवैशिष्ट्यस्य सत्तात्वे भासमाने तादृशधर्मावच्छिन्नाधिकरणताया वैलक्षण्यमेव । न च व्यासज्यवृत्तितानवच्छेदकपटसमवेतत्वविशिष्टजातिमदभावमादायाऽव्याप्तिरिति वाच्यम् । तथासति तादृशप्रतियोगितावच्छेदकत्वस्य द्वित्वत्वजातौ सत्वेनाऽव्याप्तिविरहादिति चेत् ।

अत्र केचित्—यादृशघटे (पटसमवेत) द्वित्वमेव कारणाभावान्नोत्पन्नं तादृशघटत्वस्य हेतुत्वे तात्पर्यम्, तथाच तादृशाभावस्य प्रतियोगिव्यधिकरणतया लक्षणघटत्वाद् ग्रन्थसंगतेरिति वर्णयन्ति ।

वस्तुतो व्यासज्यवृत्तितावच्छेदकजातिभिन्नजातिमद्वान् घटत्वादित्यत्राऽव्याप्तिदाने तात्पर्यात् । नच तथापि पटसमवेतत्वविशिष्टजात्यवच्छिन्नाभावप्रतियोगितानवच्छेदकत्वस्य घटत्वे सत्वेन कथमव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसमवायसबन्धेन तदवच्छिन्नसाध्यसामानाधिकरण्यविरहेणाऽव्याप्तितादवस्थ्यादिति ।

अपरे तु समवायेन जातिमत्तादात्म्येन साध्यतायामेवाऽव्याप्तिरभिप्रेता, एवं च

---

स्वपर्याप्तिस्तूभयमयेऽस्तीति । वस्तुतस्तु प्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वाभाव एव प्रतिव्यधिकरणशब्दार्थः । वै० स्वनिरूपितावच्छेदकताविशिष्टाभ्यावच्छेदकत्वानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टाभ्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन । उभयत्र वै० प्रसिद्धचतुष्टयसम्बन्धेन । एवं चैकत्वपर्याप्त्यस्वीकारे न क्षतिरिति ध्येयम् ।

पटनिरूपितसमवायसंबन्धावच्छिन्नवृत्तिताविशिष्टत्वस्य तादृशाद्वित्वत्वजातौ सामानाधिकरण्य संबन्धेन सत्त्वेऽपि साध्यतावच्छेदकतादात्म्यसंबन्धेन तद्वद्भेदस्य घटे सत्त्वेन प्रतियोगिव्यधिक रणाऽसंभवशंकापि नास्तीति वदन्ति ।

[४] विशिष्टसाध्यतावच्छेदककस्थले प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छे-दकतदितरोभयानवच्छिन्नत्वानिवेशे तु नाव्याप्तिः अवच्छेदकतायां साध्यतावच्छेदकतावच्छेदकं जातित्वं तदितरत् पटसमवेतत्ववैशिष्ट्यमेतदुभयावच्छिन्नत्वात्तादृशाभावस्य लक्षणाघटक-त्वादिति(१) ।

अन्यतरोभयानवच्छिन्नत्वमात्रोक्तौ महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वान् धूमादित्यत्राऽति-व्याप्तिः, साध्याभावीयप्रतियोगितावच्छेदकतायामुभयानवच्छिन्नत्वविरहात् । साध्यतावच्छेदक-तावच्छेदकानवच्छिन्नत्वमात्रोक्तौ उक्तस्थले विशिष्टसाध्यतावच्छेदककव्यभिचारिमात्रेऽतिव्या-प्तिः, साध्याभावस्य लक्षणाऽघटकत्वात् ।

[५] अथ साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशेनैव सर्वदोषवारणसंभवे तदेव कथं न विवक्षितम् । नच संयोगेन धूमविशिष्टस्य तादात्म्येन साध्यतायां तत्पर्वतत्वादिहेतौ संयोगेन घटविशिष्टभेदीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छि-न्नत्वेऽपि साध्यतावच्छेदकतावच्छेदकेतरघटत्वावच्छिन्नत्वेनाऽप्रसिद्ध्याऽव्याप्तिवारणाय तन्निवेश आवश्यक इति वाच्यम् । वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य साध्यतायां तादृशसं-बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धावच्छिन्न-त्वमित्यस्य साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकानिष्ठत्वोभ याभाववत्त्वमर्थः। तथा चोक्तस्थलेऽपि घटभेदीयप्रतियोगितावच्छेदकतायामेव तादृशावच्छेदक त्वप्रसिद्धेः, तस्याः निरवच्छिन्नत्वेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वाच्चेति चेन्न ।

घटत्वत्वेन घटत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ स्वरूपतो घटत्ववि-शिष्टस्य विषयितयाऽभावमादायाऽव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां किंचिद्धर्मावच्छि-न्नत्वं निवेशनीयम्, तथा च किञ्चिद्धर्मावच्छिन्नप्रतियोगितावच्छेदकतायां साध्यतावच्छेदक-

(१) नन्वेवमपि पटसमवेतत्वविशिष्टजातिमद्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्टजातिमदभावमादाया-ऽव्याप्तिरिति चेन्न । अवच्छेदकतावच्छेदकस्य पटस्यापि तत्र घटकत्वान्नाव्याप्तिः । परन्तु अवच्छेदकताव-च्छेदकसाधारणावच्छेदकतास्वीकारे विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकपर्यन्तानुधा-वनं व्यर्थम्, साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यैव सम्यक्त्वात् । तत्र पटसमवेतत्वविशिष्टजातिमा-न्नास्तीत्यभावप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकं यज्जातित्वं तस्यापि साध्यतावच्छेदकतया तदि-तरो यः पटसमवेतत्ववैशिष्ट्यरूपो धर्मः तदुभयधर्मावच्छिन्नतया तदुभयधर्मानवच्छिन्नत्वायोगात्, अतः सा-ध्यसाधनभेदेन व्याप्तिभेदाद् यत्र साध्यतावच्छेदकतावच्छेदकं प्रसिद्धं तत्राभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतावच्छेदकेतरधर्मावच्छिन्नावच्छेदकत्वानिरूपकत्वं प्रवेशनीयम्, तथाच समवे-तत्वविशिष्टजातिमद्वान् घटत्वादित्यत्र साध्यतावच्छेदकतावच्छेदकरूपस्य समवेतत्वत्वस्य प्रसिद्धतया तत्रापि तादृशपरिष्कारः कर्त्तव्य एव, तथाच पटसमवेतत्वविशिष्टजातिमदभावमादाय नाव्याप्तिरिति ध्येयम् । केचित्तु प्रतियोगितानिरूपिताऽवच्छेदकता नाऽवच्छेदकतावच्छेदकसाधारणी किन्तु प्रतियोगिता-वच्छेदकतावच्छेदकता अवच्छेदकतावच्छेदकसाधारणीति मतेन तादृशग्रन्थ इत्याहुः ।

तथाच तद्दण्डवान्नास्तीत्यादिप्रतीत्या तत्त्वविशिष्टदण्डव्यक्तेरेवाऽवच्छेदकत्वावगाहनात् शुद्धदण्डव्यक्तीनां दण्डत्वतदितरोभयानवच्छिन्नं यद्धेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं तदभावसत्त्वान्नाव्याप्तिरिति वाच्यम् ।

प्रमेयदण्डवान्नास्तीत्यादौ प्रमेयत्वोपलक्षितस्यैव तद्दण्डवान्नास्तीत्या-

तावच्छेदकेतरावच्छिन्नत्वाभावेन दण्डिमान् दण्डिसंयोगादित्यादावव्याप्तिवारणायोभयाभावपर्यन्तनिवेश इति ।

वस्तुतः सखण्डसाध्यतावच्छेदकतावच्छेदकस्थले घटत्वत्वस्यैव साध्यतावच्छेदकत्वात् साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वमेव निवेशनीयम् । अत एव "पटसमवेतत्वविशिष्टवान्नास्तीत्यभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतादितरोभयानवच्छिन्नत्वसत्त्वेनाव्याप्तितादवस्थ्यमि"ति पूर्वपक्षोपि निरस्तः ।

[६]नच प्रमेयस्य साध्यतावच्छेदकतावच्छेदकत्वे साध्यतावच्छेदकतावच्छेदकेतराऽप्रसिद्धयाऽव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपकत्वसाध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वोभयाभावस्य प्रतियोगितावच्छेदकतायां विवक्षणीयत्वात् । वै० पूर्ववद् । साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशपक्षे साध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वमात्रमेव तत् ।

नचोभयत्रावच्छेदकतायां निरवच्छिन्नत्वमेव निवेश्यतां तावतैव जातिमद्वान् घटत्वादित्यत्राव्याप्तिवारणं संभवतीति वाच्यम् । तथासति दण्डिमान् द्रव्यत्वादित्यादौ साध्याभावप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविरहेण साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिः स्यादिति । नच तथापि उभयत्रैव साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वमेव निवेश्यतां तावतैव महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणसंभव इति वाच्यम् । वह्निमान् धूमादित्यत्रैव साध्यतावच्छेदकतावच्छेदकेतराऽप्रसिद्धयाऽव्याप्त्यापत्तेरिति ध्येयम् ।

तथाचेति । विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशे सतीत्यर्थः । तद्दण्डवान्नास्तीत्यादीति । अत्र तत्त्वं दण्डांशे निविष्टं नतु दण्ड्यंशे, तथासति प्रतियोगिताणां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशेनैव तद्वारणादिति ध्येयम् । एवं च तद्दण्डी नास्तीत्यभावीयतद्दण्डनिष्ठप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकदण्डत्वतदितरतत्त्वोभयावच्छिन्नत्वात्तादृशाभावस्य लक्षणाऽघटकत्वात्, अभावान्तरीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकीभूतशुद्धदण्डे विरहान्नाव्याप्तिरिति शङ्कार्थः ।

दण्डव्यक्तिमात्रस्यैवेति । मात्रपदेन दण्डत्वस्याऽवच्छेदकत्वव्यवच्छेदः । तथाचोक्तनिवेशेऽपि तद्दण्डी नास्तीति प्रतीतिसिद्धाभावमादायाऽव्याप्तितादवस्थ्यमिति भावः । नन्वेवं दण्डिमति देशे तद्दण्डवान्नास्तीति प्रतीत्यनुपपत्तिः, तद्दण्डी नास्तीतिप्रतीतौ तत्त्वोपलक्षितदण्डस्यावच्छेदकत्वोक्तौ परिशेषेण दण्डत्वेनैव तस्यावच्छेदकत्वं प्राप्तम् एवं च दण्डवान्नास्ति

दण्ड्यादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः ।

---

दावपि तत्त्वोपलक्षितदण्डव्यक्तिमात्रस्यैव अवच्छेदकत्वकल्पनात्, केवलस्याऽवच्छेदकत्वाऽसंभवे एव विशिष्टस्य तथात्वस्वीकारात्, अन्यथा प्रमेयत्वविशिष्टदण्डादेरपि तथात्वापत्तेरत आह दण्ड्यादाविति । हेतुमति दण्डसामान्याभाववत्त्वाद् दण्डत्वमपि तादृशावच्छेदकमेवेत्यत उक्तम् परम्परासंबद्धमिति । तथाच स्वाश्रयाश्रयत्वलक्षणपरम्परासम्बन्धेन दण्डत्ववतो दण्डिनः साधनवति अभावविरहान्नाऽव्याप्तिः, साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाया एव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाः प्रवेशात्, अन्यथा विषयितया रूपत्वादिविशिष्टज्ञानादेः समवा-

---

तद्दण्डवान्नास्तीति प्रतीत्योः समानविषयकत्वादिति चेन्न । तद्व्यक्तेः स्वरूपतो भानमिति मतेनाऽयं ग्रन्थः। तथाच तद्दण्डवान्नास्तीत्यत्र तद्दण्डव्यक्तेरेवावच्छेदकत्वं तत्त्वोपलक्षितव्यक्तेरेवानतिप्रसक्ततया तत्तांशस्य दण्डत्वस्य चावच्छेदकान्तर्भावे गौरवात् । दण्डवान्नास्तीत्यादौ च सकलदण्डव्यक्तेरेवावच्छेदकत्वाद्विशेषः । एवं च तत्त्वस्योपलक्षणत्वे दण्डत्वस्याप्युपलक्षणत्वमिति हृदयम् । महानसीयवह्न्यभावप्रतियोगितायां वह्नित्वादेरतिप्रसक्ततया महानसीयत्वादेरप्यवच्छेदकान्तर्भावात् । एतदेवाह केवलस्येति । तथाच यत्र शुद्धस्य विशेष्यस्याऽतिप्रसक्तत्वं तत्रैव तद्विशेषणस्यावच्छेदकत्वं स्वीक्रियते, यथा विशिष्टसत्तावच्छेदे शुद्धसत्ताया अतिप्रसक्तत्वात्सामानाधिकरण्येन तद्विशेषणस्य गुणकर्मान्यत्वस्य । अन्यथा—केवलस्यावच्छेदकत्वसंभवेऽपि विशिष्टस्यावच्छेदकत्वस्वीकारे । ननु लाघवात्साक्षात्सम्बन्धेन दण्डत्वस्यावच्छेदकत्वं वाच्यमित्यत आह हेतुमतीति । तथाच व्यभिचाराल्लाघवमकिञ्चित्करमिति भावः । नन्वेवमपि दण्डसामान्याभावमादाय कुतो नाव्याप्तिरित्यत आह साध्यतावच्छेदकतासंबन्धावच्छिन्नाया इति । अन्यथा—तत्सम्बन्धावच्छिन्नत्वानिवेशे । [१]न च वह्निमान् धूमादित्यादावेव विषयितया वह्नित्ववज्ज्ञानाभावमादायाऽव्याप्तिसम्भवे रूपवान् पृथिवीत्वादित्याद्यव्याप्त्यनुधावनमसङ्गतमिति वाच्यम् । तादृशाभावप्रतियोगिनो ज्ञानस्य साध्यताघटकसंयोगेनाधिकरणाऽप्रसिद्ध्या प्रतियोगिवैयधिकरण्यविरहेण तस्य लक्षणाऽघटकत्वात्तदुपेक्षितम् । न च खण्डशः प्रतियोगिवैयधिकरण्यं तत्राक्षतमेवेति वाच्यम् । यथाश्रुताभिप्रायेण तस्योक्तत्वादिति यथाश्रुतग्रन्थानुरोधिनः ।

[२]परे तु वह्नीयसंयोगेन वह्नेः साध्यतास्थलेऽव्याप्तिवारणाय प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगिव्यधिकरणत्वस्य च पारिभाषिकस्यैव वक्तव्यतया तादृशाभावस्य प्रसिद्धस्थले सम्भवेऽपि वास्तविकसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाऽव्याप्तिसम्भवे प्रयासेन तत्सम्पादनं शिरोवेष्टनेन नासिकास्पर्शतुल्यमेवेति प्रसिद्धस्थलपरित्याग इति ।

येनाऽभावस्य हेतुमति सत्त्वाद्रूपवान् पृथिवीत्वादित्यादौ अव्याप्तिप्रसंगादिति भावः ।

---

[३]वस्तुतस्तु यथाश्रुतसाध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य पारिभाषिकस्यैव वा तस्य निवेशे उभयथैव रूपवान् पृथिवीत्वादित्यत्राव्याप्तिर्न तु वह्निमान् धूमादित्यादौ इति सूचनाय प्रसिद्धस्थलपरित्याग इति श्रीचरणाः ।

[४]प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे वह्निमान् धूमादित्यत्राऽव्याप्तिर्न सम्भवतीत्यतो रूपसाध्यकानुधावनमिति केचित् ।

[५]ननु समवायसबन्धेनैव जातेः स्वरूपतो भानाद् विषयित्वसम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वविरहात्कथमव्याप्तिरिति चेन्न । गोत्वेनेमं जानामीत्यनुव्यवसायानुरोधेन विषयितासम्बन्धेनापि जातेः स्वरूपतो भानस्याऽङ्गीकृतत्वात् ।

[६]अथ तद्रूपानुयोगिकसमवायेन रूपत्ववदभावमादायाऽव्याप्तिवारणाय पर्याप्तिनिवेशस्यावश्यकतया वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य साध्यतायामव्याप्तिरिति चेन्न । पारिभाषिकस्यैव तन्निवेशस्य करणात्, तथाहि साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावो विवक्षणीय इति । तथाच विषयित्वसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकातिरिक्तविषयित्वसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयोः सत्त्वाद्विषयितया रूपत्वविशिष्टाभाववारणम् । नच प्रमेयप्रतियोगिकतादात्म्येन प्रमेयविशिष्टस्य साध्यतायामव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकताव्यापकत्वघटितोभयाभावस्य निवेशेन घटाभावमादाय लक्षणसमन्वयात् । नच जातिमद्वा( घटत्वादित्यादौ विषयितया स्वरूपतो घटत्वावच्छिन्नाभावस्य सत्त्वावच्छिन्नाभावस्य )। लक्षणघटकतया तत्प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताव्यापकत्वाभावेन तादृशोभयाभावसत्त्वादव्याप्तिः, यत्किंचित्साध्यतावच्छेदकताव्यापकत्वनिवेशे चोक्तस्थलाऽव्याप्तितादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकव्यापकनिष्ठत्वघटितोभयाभावस्य विवक्षितत्वात्, घटत्वस्य साध्यतावच्छेदकव्यापकत्वाभावेन तादृशोभयाभावस्य तन्निष्ठावच्छेदकतायां सत्त्वेनाऽव्याप्तिविरहात्, सत्तायाश्च तादृशव्यापकत्वान्न तदवच्छिन्नाभावमादायाऽव्याप्तिरिति ।

[७] ननु व्यापकता केन रूपेण ? यदि प्रमेयत्वेनोच्यते तदा प्रमेयविशिष्टस्य साध्यतास्थले घटाभावीयप्रतियोगितावच्छेदकस्य घटत्वादेरपि प्रमेयत्वेन साध्यतावच्छेदकव्यापकत्वादभावाऽप्रसिद्धिर्जागरूकैव, यदि च तत्तद्व्यक्तित्वेन तदा तत्रैव साध्यतावच्छेदकव्यापकाप्रसिद्धिः । नच स्वसमानकालीनसाध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वस्वव्यापकनिष्ठत्वोभयसंबन्धेन साध्यत्वाभाववदवच्छेदकताकत्वस्य प्रतियोगितायां निवेशः, तथाच तत्तद्व्यक्तित्वेन व्यापकत्वाप्रसिद्धावपि स्वव्यापकनिष्ठत्वस्य व्यधिकरणसंबन्धतयोभयसंबन्धेन साध्यत्वाभावस्य घटत्वनिष्ठावच्छेदकतायां सत्त्वेन नाव्याप्तिरिति वाच्यम् । पूर्वोक्तप्रमेयविशिष्टसाध्यकस्थले विषयितया प्रमेयनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तितादवस्थ्यादिति चेत् ।

स्वापच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन साध्यताविशिष्टनिरूपकतासमानाधिकरणनिरूपकतावच्छेदकताव्यापकत्वघटितोभयाभावस्य विवक्षितत्वात्, तथाच घटत्वनिष्ठावच्छेदकतायां तादृशसम्बन्धेन साध्यताविशिष्टप्रमेयावच्छिन्ननिरूपकतासमानाधिकरणनिरूपकतावच्छेदकता प्रमेयनिष्ठैव, तद्व्यापकत्वविरहादेवोभयाभावसत्त्वान्नाव्याप्तिः । तादृशनिरूपकतासमानाधिकरणनिरूपकतेत्यनुक्तौ जातिमद्वान् घटत्वादित्यादौ विषयित्वसंबन्धावच्छिन्नसत्तानिष्ठनिरूपकतावच्छेदकतायां साध्यतावच्छेदकतायां साध्यताविशिष्टजात्यवच्छिन्ननिरूपकतावच्छेदकत्वव्यापकत्वघटितोभयाभावसत्त्वात्तामादायाव्याप्तितादवस्थ्यादिति तन्निवेशः ।

केचित्तु साध्यताविशिष्टनिरूपकतासमानाधिकरणनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वसाध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वोभयाभावस्य विवक्षितत्वात्, रूपवृत्तित्वं च स्वनिरूपकप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । वस्तुतस्तु भेदघटितैवात्र व्यापकता, तथाच साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकनिष्ठत्वोभयाभावस्य निवेशनीयत्वान्न कोऽपि दोष इति वदन्ति । तच्चिन्त्यम् ।

[८] परन्तु व्यापकता केन सम्बन्धेन ? साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकतावच्छेदकताघटकसम्बन्धेन वा ? नाद्यः, वह्नित्वप्रतियोगिकसमवायकालिकोभयसम्बन्धेन वह्नित्वविशिष्टसाध्यतास्थले तादृशसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्यैवाऽप्रसिद्धेः । नापि द्वितीयः, विषयितया रूपत्ववज्ज्ञानाभावस्यापि लक्षणघटकतया रूपवान् पृथिवीत्वादित्यादावव्याप्तितादवस्थ्यात् । नापि साध्यत्वप्रतियोगित्वान्यतरावच्छेदकताघटकसम्बन्धेन, वह्नित्वप्रतियोगिककालिकेन वह्नित्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतौ सर्वेषामेव धर्माणां साध्यतावच्छेदकताघटककालिकसम्बन्धेन तादृशव्यापकत्वादभावाप्रसिद्धेरिति विभावनीयम् ।

[९] अथात्र कालिकेन महानसानुयोगिकसंयोगविशिष्टः सन् समवायेन वह्नित्वविशिष्टो यस्तस्य संयोगेन साध्यतायां धूमादिहेतावव्याप्तिः, महानसानुयोगिकत्ववह्नित्वरूपसाध्यतावच्छेदकयोः धूमसमानाधिकरणस्य समवायेन महानसानुयोगिकसंयोगविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्याभावस्य प्रतियोगितावच्छेदकतायाः सत्त्वात्, साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वेनोभयाभाववत्त्वाच्च । नचोक्ताभावस्य कालिकेन महानसानुयोगिकसंयोगविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य सामानाधिकरण्यात्कथं साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वरूपप्रतियोगिवैयधिकरण्यसम्भव इति वाच्यम् । समवायेन महानसानुयोगिकसंयोगविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमादेहेतौ तुल्ययुक्त्याऽतिव्याप्तिवारणाय यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्य स्वप्रतियोगितावच्छेदकताविशिष्टावच्छेदकत्वानिरूपिका या प्रतियोगितावच्छेदकावच्छिन्ननिरूपकता तन्निरूपिताधिकरणत्वाभाववत्त्वमर्थः । वै० स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामा-

यदि च दण्डिमति तत्ताविनिर्मुक्तशुद्धदण्डव्यक्तेरवच्छेदकत्वादगाहि

नाधिकरण्योभयसम्बन्धेन । एवमपि घटत्वत्वेन घटत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानशुद्धघटत्वविषयकज्ञानान्यतरत्वेहेतावतिव्याप्तिः हेतुसमानाधिकरणस्यापि निरुक्तसाध्याभावस्य शुद्धघटत्वविशिष्टसमानाधिकरणतया लक्षणाघटकत्वादतः स्वप्रतियोगितावच्छेदकताविशिष्टान्याऽवच्छेदकत्वानिरूपकत्वं प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतायां विशेषणीयम् । वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन । तथाच निरुक्तानिरूपकतायाः स्ववृत्तित्वाभावान्नोक्तातिव्याप्तिः । अत्र च शुद्धघटत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानं घटत्वत्वेन घटत्वविशिष्टविषयकज्ञानान्यतरत्वहेतौ साध्याभावस्य शुद्धघटत्वविशिष्टसमानाधिकरणतया लक्षणाघटकत्वादतिव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वप्रवेशः, एवं चोक्ताव्याप्तिः स्थिरैवेति चेन्न ।

प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपकत्वस्य विशेषणीयत्वात् । वै० स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसमनियतत्वस्वसाजात्यैतत्त्रितयसम्बन्धेन, साजात्यं च किंचिदवच्छिन्नत्वनिरवच्छिन्नत्वान्यतररूपेण । नचैवमपि महानसीयवह्न्यभाववारणाऽसम्भवः । साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वस्य विशेषणीयत्वात् । वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसमनियतत्वस्वसाजात्यैतत्त्रितयसम्बन्धेन । अत्र स्वावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे यदर्थं परिष्कारस्तत्र विपरीताभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वस्य सत्त्वादव्याप्तिः स्यात् । समनियतत्वस्थाने च सामानाधिकरण्यस्य व्यापकत्वस्य वा निवेशे कालिकेन जातिविशिष्टस्य समवायेन धूमत्वविशिष्टस्य संयोगेन साध्यतायां साध्याभावस्य लक्षणाऽघटकत्वादतिव्याप्तिः स्यात् । एवं साजात्यानिवेशे कालिकेन धूमत्वत्वेन धूमत्वविशिष्टस्य समवायेन स्वरूपतो धूमत्वविशिष्टस्य संयोगेन साध्यतायां वह्न्यादिहेतावतिव्याप्तिरिति ध्येयम् । नचैवमपि रूपत्ववद्वान् पृथिवीत्यादित्यत्र विषयितया स्वरूपतो रूपत्वविशिष्टाभावमादायाव्याप्तिः स्थिरैवेति वाच्यम् । प्रतियोगितावच्छेदकतायामपि साध्यतावच्छेदकताघटकसम्बन्धेतरसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववत्त्वस्य विशेषणीयत्वात् । नन्वेवं प्रमेय प्रतियोगिकस्वरूपेण प्रमेयविशिष्टस्य संयोगेन धूमादिहेतावव्याप्तिः घटाभावयिप्रतियोगितावच्छेदकतायां तदुभयस्यैव सत्त्वादिति वाच्यम् । साध्यतावच्छेकनिष्ठत्वपदेन साध्यतावच्छेदकव्यापकत्वस्य विवक्षितत्वात् ।

जात्यखण्डोपाध्यतिरिक्तस्य स्वरूपतोभानस्याऽप्रामाणिकत्वात् केवलदण्डत्वादिविशिष्टस्याऽतिप्रसक्ततया तत्ताविशिष्टदण्डस्यैवाऽवच्छेदकत्वमित्याह यदि चेति । प्रत्ययान्तरासत्त्वादिति । दण्डो नास्तीतिप्रत्ययाभावादिति भावः । अनेन तत्त्वोपलक्षितस्यावच्छेदकत्वे बाधकं सूचितम् । अभावप्रतियोगितावच्छेदकतया भासमाने उपलक्षणतया धर्मान्तरस्याभानात् , अन्यथा तत्तद्दण्डावच्छिन्नप्रतियोगितावच्छेदकतया भासमाने तत्तद्दण्डांशे उपलक्षण-

प्रत्ययान्तरासत्त्वात् तद्दण्डी नास्तीत्यादिप्रतीत्या तत्ताविशिष्टदण्डव्यक्ते-रेवाऽवच्छेदकत्वं युक्तम्, दण्डी नास्तीत्यादिप्रतीत्यन्यथानुपपत्त्या दण्ड-स्याऽवच्छेदकत्वसिद्धौ प्रमेयदण्डवान्नास्तीत्यादावपि तन्मात्रावच्छेदकत्वे-नैव सामञ्जस्ये विशिष्टस्य तत्रावच्छेदकत्वाऽकल्पनात्, तथाच कथमुक्ताऽ-व्याप्तिरित्युच्यते, तदा रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादित्यादावव्याप्तिः, सर्वासामेव नीलत्वपीतत्वादिरूपत्वन्यूनवृत्तिजातीनां साधनवन्निष्ठाभावप्र-तियोगिताया निरवच्छिन्नाऽवच्छेदकत्वाद् रूपवति नीलो नास्ति पीतो नास्तीत्यादिप्रत्ययादित्याशयेन दण्ड्यादावित्यत्रादिपदमुपात्तम्, तथा च तत्रापि स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेन रूपत्वमेव साध्यतावच्छेदक-मिति नाऽव्याप्तिरिति भावः ।

साध्यतावच्छेदकमिति । अनुमितिविधेयतावच्छेदकमित्यर्थः । तथा चो-क्तव्याप्तिज्ञानाद् दण्ड्यंशे दण्डत्वप्रकारिका दण्डत्ववद्वानित्येवानुमितिः, नतु दण्डिमानिति दण्डप्रकारिकाऽपि, तस्य व्यापकतावच्छेदकत्वेनाऽग्र-

---

तथा दण्डत्वमात्रं विषयीकृत्य दण्डिमति दण्डी नास्तीति प्रत्ययस्य दुर्वारत्वात् । तद्दण्डी नास्तीतिप्रतीत्येति । सखण्डस्य दण्डादेः स्वरूपतोऽवच्छेदकत्वाऽसम्भवेन दण्डत्वादि-विशिष्टस्यैवाऽवच्छेदकत्वं वाच्यं, तथा च दण्डिमति तद्दण्डी नास्तीतिप्रतीत्युपपत्तिः स्यादिति । युक्तमिति । निरवच्छिन्नं तद्व्यक्तिमात्रनिष्ठमवच्छेदकत्वमसम्भवि जातीतरस्य स्वरूपतो भानानभ्युपगमात्, दण्डत्वस्याऽतिप्रसक्तत्वात्, अतस्तत्ताविशिष्टदण्डव्यक्तेरेवाऽवच्छेदकत्वं वाच्यमित्याशयः । दण्डस्यावच्छेदकत्वसिद्धौ—दण्डत्वमात्रावच्छिन्नदण्डस्यावच्छेदकत्वसिद्धौ । तन्मात्रावच्छेदकत्वेनैव दण्डत्वावच्छिन्नदण्डमात्रावच्छेदकतयैव । सामंजस्ये—निर्वाहे, दण्डत्वरूपेण दण्डमात्रस्यावच्छेदकत्वावगाहित्वेऽप्यतिप्रसङ्गाभावादिति भावः । तथाच, तत्तावि-शिष्टदण्डस्यावच्छेदकत्वे कथमुक्ताऽव्याप्तिः, दण्डनिष्ठावच्छेदकताया उभयावच्छेद्यत्वादिति भावः । निरवच्छिन्नेति । निरवच्छिन्नत्वोक्त्या सुतरां तादृशोभयानवच्छिन्नत्वं सूचितम् । रूपत्वन्यूनवृत्तीति । सत्ताजातेरनवच्छेदकत्वादुक्तम् रूपत्वन्यूनवृत्तीति । नच सत्तावद्-घटाभावमादाय तस्या अपि अवच्छेदकत्वेन गुरुतरसाध्यानुसरणं व्यर्थम्, जातिमद्वान् रूपा-दित्यस्यैवं सम्यक्त्वादिति वाच्यम् । तत्प्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छे-द्यत्वविरहात् । सत्त्वघटत्वयोर्जातित्वेन साध्यतावच्छेदकत्वेऽपि येन रूपेण साध्यतावच्छेदक-त्वमित्यादिपारिभाषिकमितरत्वमव्याहतमेव । न्यूनवृत्तित्वं च भेदघटितम्, तेन रूपत्वव्या-प्यत्वेऽपि रूपत्वस्य न क्षतिः । तच्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रति-योगितावच्छेदकत्वम् । कर्मत्वसंयोगत्वादेः साध्यतावच्छेदकत्ववारणाय सामानाधिकरण्य-दलम् । सत्त्वगुणत्वयोः साध्यतावच्छेदकत्ववारणाय विशेष्यदलम् । संयोगतद्रूपान्यतरत्व-वारणाय जातीति । स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेनेति । स्वं—रूपत्वम् । नच तथापि समवायेन रूपत्वस्य साध्यतावच्छेदकत्वसम्भवे परम्परासम्बन्धानुसरणं व्यर्थमिति वाच्यम् । तथासति साध्यहेत्वोरैक्येन परामर्शकाले साध्यनिश्चयादनुमित्यनुत्पत्तेरिति ।

द्दात्, कारणबाधेन तदवच्छिन्नविधेयकाऽनुमित्यसम्भवादिति भावः।

वस्तुतो दण्डत्वस्य साध्यतावच्छेदकत्वे दण्डिमानित्यनुमितिर्न स्यात् दण्डानां व्यापकतानवच्छेदकत्वादित्यस्वरसादेव दण्डत्वादिकमित्यत्राऽऽदिपदमुपात्तम्, तेन तत्तद्दण्डव्यक्तीनामेव स्ववृत्तिदण्डत्वजात्याश्रयाधिकरणत्वलक्षणपरंपरासम्बन्धेन साध्यतावच्छेदकत्वलाभात् दण्डिमानित्यनुमितेर्नानुपपत्तिरिति तत्त्वम्।

केचित्तु साध्यसाधनभेदेन व्याप्तिग्रहाऽनुमित्योः कार्यकारणभावमद्वात् यत्र दण्डत्वादिविशिष्टं साध्यतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताऽनवच्छेदको यो धर्मस्तद्विशिष्टावच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिः तद्विशिष्टावच्छिन्नविधेयकाऽनुमितिप्रयोजिका, यत्र तु परंपरया दण्डत्वादिकमेवाऽनुमितौ विधेयतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगिताऽनवच्छेदको यो धर्मः परम्परया तदवच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिः प्रयोजिकेति सामानाधिकरण्यांशे दण्डादेः प्रवेशाऽप्रवेशाभ्यां दण्डिमान् दण्डत्ववद्वानित्यनुमित्योर्दण्डादिविषयकत्वनियम इत्याहुः।

---

तस्य—दण्डस्य। कारणबाधेनेति। विधेयतावच्छेदकतासम्बन्धेनाऽनुमितिं प्रति विशेष्यतासंबन्धेन व्यापकतावच्छेदकत्वज्ञानं हेतुः, दण्डांशे तद्बाधेनेत्यर्थः। न च दण्डांशे व्यापकतावच्छेदकत्वभ्रमादेव दण्डिमानित्यनुमितिसम्भव इति वाच्यम्। अनुमित्यसम्भवादित्यस्य प्रमापरामर्शजन्यानुमित्यसम्भवादित्यर्थात् एवं चानुमितिर्विधेयतावच्छेदकमित्यत्र प्रमापरामर्शजन्यानुमितिविधेयतावच्छेदकमित्यर्थः। केचित्तु सल्लिङ्गकानुमितेर्भ्रमात्मकपरामर्शमात्रजन्यत्वं सिद्धान्तविरुद्धम्, कथमन्यथा ज्ञेयत्वादिलिङ्गकवाच्यत्वाद्यनुमितेः साध्याभाववदवृत्तित्वाद्यवगाहिभ्रमात्मकपरामर्शासम्भवेऽपि साध्याभाववदवृत्तित्वादेर्व्याप्तित्वानंगीकारश्चिन्तामणिकृतां सङ्गच्छत इति 'दण्डावच्छिन्नविधेयकानुमितेरसम्भवादि'ति यथाश्रुतमेव सम्यगित्याहुः। नानुपपत्तिरिति। तादृशसम्बन्धेन तत्तद्दण्डावच्छिन्नाभावस्य साधनवत्यसत्त्वेन दण्डानां व्यापकतावच्छेदकत्वं सुघटमिति भावः।

प्रतियोगितावच्छेदकतानवच्छेदको यो धर्म इति। नन्वेतावतापि तद्दण्डी नास्तीत्यभावप्रतियोगितावच्छेदकतावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदके दण्डत्वे सत्त्वादव्याप्तितादवस्थ्यम्। न च प्रतियोगितावच्छेदकतायामुक्तोभयानवच्छिन्नत्वस्य निवेशेन नायमभावो लक्षणघटक इति वाच्यम्। तथासति पूर्वोक्तरीत्या दण्डादेः साध्यतावच्छेदकत्वेऽपि अव्याप्तिवारणादेतादृशानुसरणस्य व्यर्थतापातादिति चेन्न। रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादित्यत्रैवाऽव्याप्तिवारणाय तादृशानुसरणादिति ध्येयम्।

सामानाधिकरण्यांशे दण्डादेः प्रवेशाप्रवेशाभ्यामिति। ननु प्रथमकल्पे विशेषणतया द्वितीयकल्पे संसर्गघटकतया सामानाधिकरण्यांशे दण्डस्य प्रवेशसत्त्वेन कथं प्रवेशाप्रवेशकथनं युक्तमिति चेन्न। सामानाधिकरण्यांशे इत्यनेन सामानाधिकरण्यघटकनिरूपकतावच्छेदकतया प्रवेशाप्रवेशाभ्यामित्यर्थविवक्षणादिति ध्येयम्। आहुरित्यस्वरसः।

इत्थं च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्ताधिकरण-

---

यत्तु दण्डत्वधर्मिकनिरुक्तानवच्छेदकत्वज्ञानस्यैव कार्यतावच्छेदकं द-ण्डित्वावच्छिन्नविधेयताकानुमितित्वमित्यनुमितेर्दण्डप्रकारकत्वं नानुपपन्न-मिति । तत्तुच्छम् । परम्परया दण्डत्वावच्छिन्नविधेयकानुमितित्वस्यापि तादृशज्ञानकार्यतावच्छेदकतया सर्वदैव दण्डिमान् दण्डत्ववदवानित्यु-भयाकारानुमित्यापत्तेः, उभयधर्मावच्छिन्नस्यैव सामग्रीसत्त्वादिति दिक् ।

अपरे तु नोक्तव्याप्तिज्ञानं दण्डिमान् दण्डिसंयोगादित्याद्यनुमितौ हेतुः किन्तु वक्ष्यमाणाऽन्योन्याभावघटितव्याप्तिज्ञानम्, अत एव यथायथ-मित्यादिग्रन्थोऽपि संगच्छते इत्याहुः ।

नव्यास्तु दण्डिमानित्यनुमितौ न संयोगेन दण्ड्यादेः प्रकारत्वम्, किन्तु स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसम्बन्धेन । न चैवमनुभवापला-पापत्तिरिति वाच्यम् । दीधितिकृन्मतेऽपि दण्डस्य साध्यतावच्छेदकधर्म-विधया संयोगस्य च साध्यताच्छेदकताघटकसंसर्गविधयाऽवगाहिताद्वया-पलापापत्तेरिति प्राहुः ।

यद्रूपविशिष्टेत्यस्य फलमाह इत्थंचेति । चोऽवधारणे । इत्यादौ—इत्या-दिन्यायस्थलीयहेतौ । तथाच न्यायः पक्षनिर्देशं विना न सम्भव(१)ती-

---

तद्वीजं तु द्विविधानुमितिस्वीकारे द्विविधकार्यकारणभावे च गौरवात् । अन्यथा दण्डिसंयो-गसाध्यकस्थले तत्तद्दण्डिसंयोगाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकतावच्छे-दके प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकत्वमपि विवक्षणीयम्, एवं विवक्षया च धा-राप्रवाहः स्यात् । किञ्च हेतौ दण्डिसामान्याभाववद्वृत्तित्वरूपव्यभिचारज्ञानदशायामपि त्वदु-क्तव्याप्तिज्ञानसम्भवेनाऽनुमित्यापत्तिः । न च दण्डिसामान्याभाव—निरुक्तसम्बन्धेन दण्डत्वाव-च्छिन्नाभावयोः समनियतोपस्थितिकत्वेन दण्डिसामान्याभाववद्वृत्तित्वग्रहकाले निरुक्तसम्ब-न्धेन दण्डत्वावच्छिन्नस्याभाववद्वृत्तित्वस्यापि ग्रहसत्त्वेनोक्तव्याप्तिज्ञानसम्भव इति वाच्यम् । संयोगेन दण्डप्रकारकज्ञान—निरुक्तसम्बन्धेन दण्डत्वप्रकारकज्ञानरूपसामग्रीभेदेनोक्ताभावयोः समनियतोपस्थितिकत्वाभावात् ।

किञ्चेति । ननु अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोगिनो घटादेरधिकरणाऽप्रसि-द्धिरिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगिता-वच्छेदकावच्छिन्नाधिकरणत्वाभावस्य हेत्वधिकरणे साध्यतावच्छेदकसम्बन्धान्यसम्बन्धाव-च्छिन्नत्वसाध्यनिष्ठत्वोभयाभावस्य वा प्रतियोगितायां निवेशेनैवोपपत्तेरिति ।

अवधारणे इति । यद्रूपविशिष्टेति विवक्षणे एवेत्यर्थः । यद्रूपपदं हेतुतावच्छेदकपरम् । पक्षनिर्देश इति । इदमित्यस्यानुपादाने द्रव्यं पक्षः तादात्म्येन गुणकर्मणोः साध्यत्वमिति

---

(१) प्रतिज्ञाघटितत्वान्न्यायस्य । प्रतिज्ञा च पक्षे साध्यबोधकवाक्यरूपा, अतः पक्षनिर्देशस्यावश्यक-त्वामिति भावः ।

गुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः, साधनस्य विशिष्टसत्तादेर्गुणादावबृत्तेः(१) ।

---

त्यत इदंपदेन तन्निर्देशः । एवमग्रेऽपि । यत्तु द्रव्ये धर्मिणि तादात्म्येन गुणकर्मणोः साध्यताभ्रमं निरसितुमदमिति पक्षनिर्देश इति । तन्मन्दम् । एवमपि इदन्त्वविशिष्टद्रव्ये गुणकर्मणोः साध्यताभ्रमस्याऽनिरासादिति ।

---

भ्रमस्य निवृत्तिः अन्यत्वे सति सत्त्वस्य व्यभिचारितयाऽव्याप्तेरनुपपत्त्या गुणकर्मान्यत्वे सति सत्त्वमेव हेतुः द्रव्यत्वमेव साध्यमित्येतावत्पर्यालोचनैव स्यात्, ततः साध्यवाचकपदत्वनिर्णयः, इदमिति पक्षनिर्देशे तु संमुखत एव पक्षनिर्णय इत्याशयः । तन्मन्दमिति । उक्तरीत्यैव भ्रमनिराससम्भवेन पक्षनिर्देशस्याऽनावश्यकत्वात्, अन्यथा इदमस्योपादानेऽपि तन्निरासाऽसम्भवादित्याह—एवमपीति । विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाऽभावान-

---

(१) केचित्तु अबृत्तेः असम्बन्धात्, तथा च गुणादौ विशिष्टसत्तासम्बन्धाभावादित्यर्थः । न च समवायात्मकविशिष्टसत्तासम्बन्धस्य गुणादौ सत्त्वेन कथं तदभाव इति वाच्यम् । वक्ष्यमाणरीत्या हेत्वधिकरणत्वस्य हेतुतावच्छेदकसम्बन्धेन हेतुसम्बन्धित्वरूपस्य विवक्षणीयतया यद्रूपविशिष्टोपादानेन हेतुतावच्छेदकविशिष्टप्रतियोगिकहेतुतावच्छेदकसम्बन्धात्मकस्य हेतुतावच्छेदकसम्बन्धेन हेतुसम्बन्धित्वरूपस्य हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नहेतुसम्बन्धित्वस्य लाभेन प्रकृतविशेषणावच्छिन्नसत्तासमवायस्यैव विशिष्टसत्तासम्बन्धत्वेन गुणादौ तदभाव इत्याशयात् । नचैवं यद्रूपविशिष्टेति व्यर्थम्, गुणादौ हेतुतावच्छेदकसम्बन्धाभावादेव विशिष्टसत्तादावव्याप्त्यभावादिति वाच्यम् । यद्रूपेण—हेतुतावच्छेदकविशिष्टसम्बन्धेन तद्रूपावच्छिन्नस्यैव हेतुतावच्छेदकसम्बन्धपदार्थत्वेन वह्निसंयोगादेः संयोगत्वादिनेव विशेषणावच्छिन्नसत्तासमवायस्यापि समवायत्वेनैव सम्बन्धतया तदवच्छिन्नस्य च गुणादौ सत्त्वेन यद्रूपविशिष्टपदोपादानं विनाऽव्याप्तेर्दुरुद्धरत्वात् । एतेन द्रव्यं विशिष्टसत्त्वादित्यादौ समवायस्य हेतुतावच्छेदकसम्बन्धत्वे व्यभिचारित्वम्, द्रव्यमात्रवृत्तिविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायास्तथात्वे : गुणादौ हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वाभावेनैवाऽव्याप्त्यभावे यद्रूपविशिष्टेति व्यर्थम्, एवमत्र हेतुतावच्छेदकसम्बधेन हेतुतावच्छेदकावच्छिन्नाधिकरणत्वाविवक्षणे विशिष्टाधिकरणताया अतिरिक्तत्वेन विशिष्टसत्तादावव्याप्त्यभावेऽपि तादात्म्यादिवृत्त्यनियामकसम्बन्धेन हेतुतायामव्याप्तिः, निरुक्तसम्बन्धित्वाविवक्षणे च विशिष्टसत्तादावव्याप्तिःदवस्थ्यम्, समवायात्मकस्य तस्य गुणादौ सत्त्वादिति निरस्तम् । समवायेन हेतुतायामपि सद्धेतुत्वात्, उक्तरीत्या निरुक्तसम्बन्धित्वस्य गुणादावभावाच्च । अत एव विशिष्टाधिकरणतावद्विशिष्टसम्बन्धित्वस्य गुणादिष्ववृत्तस्याऽतिरिक्तस्याभ्युपगमान्नाव्याप्तिरित्यपि हेयमेव उक्तरीत्यैवोपपत्तेरिति प्राहुः ।

अत्र च यद्रूपविशिष्टपदं विशिष्टहेतुके एवाऽव्याप्तिवारणाय न तूपलक्षितहेतुके तत्र शुद्धसमवायस्यैव हेतुतावच्छेदकसम्बन्धत्वेन गुणकर्मान्यत्वोपलक्षितसत्तावान् गुण इत्यादिप्रतीत्या गुणकर्मान्यत्वोपलक्षितसत्तासम्बन्धस्य गुणादौ सत्त्वेनाऽसद्धेतुत्वादिति ध्येयम् । यत्तु हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधस्यैवाऽनुमितिहेतुतया विशिष्टवैशिष्ट्यविषयतायाश्च विशेष्ये विशेषणमित्यादिविषयतावैलक्षण्याय विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकस्य विशेषणपारतन्त्र्येण पक्षे प्रकारत्वस्यावश्यकत्वेन विशेषणव्याप्त्यैव निर्वाहे किं विशिष्टव्याप्तिस्वीकारेण तदुपपादकयद्रूपविशिष्टपदोपादानेन वेति । तन्न । विशेष्ये विशेषणमितिविषयताशालिबोधादप्यनुमितेरुदयेन विशिष्टवैशिष्ट्यबोधस्यैवाऽनुमितिहेतुत्वाभावात् । अनुमितिलक्षणोक्तरीत्या विशिष्टवैशिष्ट्यविषयतायाः विशेष्ये विशेषणमितिविषयतावैलक्षण्यनिर्वाहेण विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकस्य विशेषणपारतन्त्र्येण विशेष्ये प्रकारत्वस्याऽनावश्यकत्वाच्च । विशेषणस्य व्याप्यज्ञानदशायामप्यनुमितेरानुभविकत्वाच्च । विशिष्टप्रयोगानुरोधेन विशिष्टव्याप्तिस्वीकारस्याऽऽवश्यकत्वाच्च ।

प्रतियोगित्वेऽपीति । प्रतियोगितावच्छेदकावच्छिन्नत्वेऽपीत्यर्थः । गुणादावव्रुत्तेरिति । गुणादावभावादित्यर्थः । तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भावः ।

---

प्रकारे सत्तात्मकविशिष्टसत्त्वस्य गुणादौ वृत्त्या गुणादाववृत्तेरित्यसङ्गतमत आह गुणादावभावादित्यर्थ इति । तदेव विवृणोति तथाचेति । आधेयत्वस्याऽनतिरिक्तत्वेऽपि अधिकरणताया अतिरिक्तत्वादिति यावत् । एतेन यद्रूपविशिष्टेत्युक्तावपि हेतुतावच्छेदकविशिष्टो हेतुस्तदधिकरणगुणादिकमादाय तद्दोषतादवस्थ्यमिति शङ्का निराकृता, विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणताया गुणेऽभावादिति ध्येयम् ।

अथात्र गुणकर्मान्यत्वविशिष्टस्य सामानाधिकरण्यात्मकवैशिष्ट्यवतः समवायेन हेतुत्वस्यैव सम्यक्त्वे सत्तापदं किमर्थमिति चेन्न । अनुयोगिवाचकपदसमभिव्याहृतसामानाधिकरण्यात्मकवैशिष्ट्यवाचकं पदं यत्र तत्राधिकरणताया वैलक्षण्यस्वीकारात्, केवलवैशिष्ट्यावच्छिन्नाधिकरणताया अवैलक्षण्यात् ।

ननु प्रमेयत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया जलह्रदादौ सत्त्वेन तत्र वह्न्यभावसत्त्वाद्वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे स्थलान्तरानुधावनं किमर्थमिति चेन्न । आधेयताया आधेयभेदेन भिन्नत्वे प्रमेयत्वावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणताया जलह्रदेऽसत्त्वात् प्रमेयत्वावच्छिन्नमीनशैवालादिनिष्ठाधेयताया हेतुनिष्ठत्वाभावादिति ।

अत्र द्रव्यं विशिष्टसत्त्वादित्यत्र हेतुतावच्छेदकीभूतकेवलसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः गुणे सत्त्वेन तत्र साध्याभावसत्त्वादव्याप्तिवारणाय न्यूनवारकपर्याप्तिर्निवेश्या, एवं वह्निज्ञानत्वसाध्यके विषयितया वह्निहेतौ महानसीयवह्नित्वावच्छिन्नाधिकरणत्वस्यापि हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतारूपत्वात्तस्य महानसीयवह्निविषयकज्ञाने एव सत्त्वेन तत्र साध्याभावमादायाव्याप्तिः, एवं द्रव्यं सत्त्वादित्यादौ विशिष्टसत्तात्वावच्छिन्नाधिकरणताया द्रव्ये एव सत्त्वेन तत्र साध्याभावविरहादतिव्याप्तिश्चेत्यत इतरवारकपर्याप्तिर्निवेश्या—हेतुतावच्छेदकेतरधर्मानवच्छिन्नहेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वमिति । तदर्थश्च हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वमिति । न च वह्निज्ञानत्वसाध्यकवह्निहेतौ वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वस्य महानसीयवह्नित्वावच्छिन्ननिरूपकतायां सत्त्वेन तन्निरूपिताधिकरणत्वस्य महानसीयवह्निविषयकज्ञाने सत्त्वेन तत्र साध्याभावसत्त्वादव्याप्तितादवस्थ्यमिति वाच्यम् । हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या निरूपकता तन्निरूपिताधिकरणत्वस्य विवक्षितत्वात् । रूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

अव्यासज्यवृत्तिएकत्वादेः पर्याप्त्यस्वीकारे हेतुताविशिष्टनिरूपकताकाधिकरणत्वं तदर्थः । निरूपकतायां वै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन ।

**यद्यप्येवमयं पक्षस्माभिः पर्वतत्व-चत्वरत्वादि-तत्तद्धर्मविशिष्टतत्तद्धूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानिति प्रत्ययोपपत्तौ धूमत्वा-**

उभयत्र वै० प्रसिद्धचतुष्टय(१)सम्बन्धेनेति ।

ननु पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिः, धूमत्वेतरधर्मानवच्छिन्नधूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वाऽप्रसिद्धेः, तथाहि पर्वतो धूमवानिति प्रात्यक्षिकप्रतीतेरधिकरणत्वावगाहित्वेऽपि न तया अधिकरणत्वसिद्धिः, तद्विषयकत्वेनाऽनुव्यवसीयमानतायाः सन्दिग्धत्वात्, नापि पर्वतो धूमवानित्यनुमितिस्तत्साधिका, तत्राधिकरणत्वावगाहित्वस्यैव विरहात् । नापि पर्वतो धूमवानिति (२)शाब्दप्रतीतिः, मतुबर्थाऽधिकरणत्वमवगाहमानापि सा आधिकरणत्वांशे निरूपितत्वसम्बन्धेन धूमत्वत्वविशिष्टस्यैव भासिका न तु धूमत्वावच्छिन्ननिरूपकताकत्वस्येति । न च गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतेरप्रामाण्याय मतुबर्थाधिकरणत्वे निरूपितत्वसम्बन्धेन प्रकृत्यर्थभाने धर्मिपारतन्त्र्येण प्रकृत्यर्थतावच्छेदकस्य अवच्छिन्ननिरूपकताकत्वसम्बन्धेन तत्र भानमंगीकार्यम्, एवं च धूमत्वावच्छिन्नाधिकरणतायां पर्वतो धूमवानिति शब्द एव प्रमाणमिति चेत्तत्राह यद्यपीति । तथाच पर्वतीयधूमवान् चत्वरीयधूमवानित्यादिप्रतीत्योः पर्वतीयत्वधूमत्वोभयधर्मावच्छिन्नाधेयतानिरूपिताधिकरणत्वावगाहित्वस्या-

---

(१) द्रव्यं विशिष्टसत्त्वादित्यत्र सत्तात्वावच्छिन्नाधिकरणतामादायाऽव्याप्तिवारणाय स्ववृत्तित्वनिवेशः । एवं द्रव्यं सत्त्वादित्यत्र विशिष्टसत्तात्वावच्छिन्नाधिकरणतामादायातिव्याप्तिवारणाय प्रथमसम्बन्धनिवेशः । अत्र केवलन्यूनवारकपर्याप्तिनिवेशात् हेतुताविशिष्टनिरूपकतेत्यादि । वै० स्ववृत्तित्वसम्बन्धेन । स्ववृत्तित्वं चोक्तसम्बन्धेन । केवलेतरवारकपर्याप्तिनिवेशस्तु हेतुताविशिष्टनिरूपकतेत्यादि । वै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसं० । प्रसिद्धचतुष्टयसम्बन्धश्च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वरूपः । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वरूपेणेति । अत्र न्यूनवारकपर्याप्तौ स्वसामानाधिकरण्यानिवेशे प्रतियोगितासम्बन्धेन तार्णवह्निहेतुकतदभावत्वसाध्यकस्थले वह्नित्वावच्छिन्ननिरूपकतामादायाऽव्याप्तिः स्यादतस्तदुपात्तम् । एवं समवायेन वह्नित्वविशिष्टत्वे सति तद्धर्म्यनुयोगिककालिकेन वह्नित्वविशिष्टं यत्तस्य प्रतियोगितासम्बन्धेन हेतुत्वे तदभावत्वसाध्ये प्रत्येकं समवायेन वह्नित्वावच्छिन्ननिरूपकतामादाय, एवं वह्नित्वत्वेन वह्नित्वविशिष्टस्य प्रतियोगितासम्बन्धेन हेतुतायां तदभावत्वसाध्यकस्थले स्वरूपतो वह्नित्वावच्छिन्ननिरूपकतामादाय, एवं प्रतियोगितासम्बन्धेन स्वरूपतो वह्नित्वविशिष्टहेतुकतदभावत्वसाध्यकस्थले वह्नित्वत्वेन वह्नित्वावच्छिन्ननिरूपकतामादायाव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वानां निवेशः ।

एवमितरवारकपर्याप्तौ वह्निहेतुके तज्ज्ञानत्वसाध्यके तार्णवह्नित्वावच्छिन्ननिरूपकतानिरूपिता वह्नित्वत्वेन वह्नित्वावच्छिन्ननिरूपकतानिरूपिता चाऽधिकरणतामादायाव्याप्तिवारणाय स्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वयोर्निवेशः । जातिमद्धेतुके तज्ज्ञानत्वसाध्यके जातिमद्वह्नित्वावच्छिन्ननिरूपकतानिरूपितामधिकरणतामादायाऽव्याप्तिवारणाय स्ववृत्तित्वनिवेशः । समवायेन वह्नित्वविशिष्टस्य विषयितया हेतुत्वे तज्ज्ञानत्वसाध्यकस्थले समवायेन वह्नित्वविशिष्टत्वे सति तद्धर्म्यनुयोगिकसमवायेन वह्नित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतामादायाऽव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश इति ।

(२) ननु धूमवानितिप्रतीतौ धूमः प्रकारः संयोगः संसर्गः, पर्वतश्च विशेष्यः अधिकरणत्वावगाहित्वं कुतः ? न चाऽधिकरणत्वं संयोगरूपमेवेति वाच्यम् । एवमपि तस्य प्रकारविधया भाने मानाभाव इति चेन्न । धूमोपलक्षितः पर्वतः, धूमविशिष्टः पर्वत इति प्रतीत्योर्वैलक्षण्यनिर्वाहाय विशिष्टप्रतीतौ मतुबर्थाधिकरणत्वस्य प्रकारविधया भानमावश्यकम्, उपलक्षितावगाहिप्रतीतौ च मतुबर्थस्याविवक्षया संयोगेन धूमस्यैव प्रकारत्वमिति ।

वश्यकतया तादृशाधिकरणताकूटावगाहितयैव धूमवानितिप्रतीत्युपपत्तौ तादृशाधिकरणताकूटातिरिक्ता सामान्यधर्मावच्छिन्नाधिकरणता न सिध्यतीति । पर्वतीयधूमवानितिप्रतीत्यन्यथानुपपत्त्या विशिष्टधर्मावच्छिन्नाधिकरणता तु अवश्यं स्वीकार्या । न च पर्वतीयधूमवानित्यत्र पर्वतीयत्वावच्छिन्नाधिकरणत्व(१)मेव विषयो न तु धूमत्वमवच्छेदककोटौ निवेशनीयमिति वाच्यम् । पर्वतीयत्वावच्छिन्नस्य दीर्घतृणादेः महद्द्रव्यादेश्च पर्वतीयधूमशून्यदेशेऽपि सत्त्वात्तत्र पर्वतीयधूमवानितिप्रतीतेः प्रमात्वापत्तेः । न चैतावतापि पर्वतीयधूमव्यक्तिनिष्ठनिरूपकताकाधिकरणत्वावगाहितयैव निर्वाहसम्भवेऽलं तादृशविशिष्टधूमत्वावच्छिन्नाधिकरणतास्वीकारेणेति वाच्यम् । एवमपि पर्वतान्यत्वविशिष्टधूमवानितिप्रतीतौ धूमत्वस्याऽवच्छेदककोटौ निवेश आवश्यकः, अन्यथा पर्वतान्यत्वविशिष्टधूमवन्महानसमितिवद् तादृशधूमवज्जलमिति प्रतीत्यापत्तेः पर्वतान्यत्वविशिष्टं यद्द्रव्यत्वं तादृशद्रव्यत्वावच्छिन्नाधिकरणतायास्तत्र सत्त्वात् । केवलधूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः प्रतीतिविषयत्वे पर्वतीयधूमवन्महानसमिति प्रतीत्यापत्तेः । एतेन पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वावगाहिप्रतीतौ पर्वतत्ववैशिष्ट्यं यदि धूमे भासते तदा पर्वतत्ववैशिष्ट्यस्यैवावच्छेदकत्वेनोपपत्तौ धूमत्वस्योपलक्षणताया एवोचितत्वेन धूमनिष्ठनिरूपकतानिरूपिताधिकरणताव्यक्तिभिरेव धूमवानितिप्रतीतेः प्रामाण्योपपत्तौ विशिष्टधूमत्वस्यावच्छेदकत्वकथनविरोध इति निरस्तम् । एकधर्मावच्छिन्ननिरूपकताया एकत्वे घटान्यत्वविशिष्टद्रव्यवानित्याकारकज्ञानविषयीभूतस्य घटान्यत्वावच्छिन्ननिरूपकत्वस्य निखिलद्रव्यनिष्ठत्वेन घटान्यत्वावच्छिन्नधूमनिष्ठनिरूपताकाधिकरणताया ह्रदे सत्त्वेन तमादाय पर्वतीयधूमवान् ह्रद इति प्रतीतेः प्रमात्वापत्तेः । यदि च पर्वतत्ववैशिष्ट्यं समानाधिकरणवृत्तित्वसम्बन्धेन धूमत्वे भासते तदा धूमत्वस्यावच्छेदकत्वमेव धूमत्वगतधर्मस्य पर्वतत्ववैशिष्ट्यस्य विशेषणत्वे धूमत्वस्योपलक्षणत्वाभावादिति ध्येयम् ।

न च धूमवानिति प्रतीतौ धूमनिष्ठनिरूपकताकाधिकरणत्वस्य प्रकारत्वे एकधर्मावच्छिन्नाधेयताया ऐक्यमते द्रव्यत्वावच्छिन्ननिरूपकतामादाय ह्रदेपि तथा प्रत्ययापत्तिरिति वाच्यम् । धूमत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्यैव प्रकारत्वोपगमात्, न तु धूमत्वेतरधर्मानवच्छिन्ननिरूपकताकाधिकरणत्वस्येत्याशयात् । एतेन पर्वतीयत्वविशिष्टधूमत्वावच्छिन्ननिरूपकतायां धूमत्वावच्छिन्नत्वस्य सत्त्वेन धूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेरित्ययुक्तमिति निरस्तम् । धूमत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकताकाधिरणत्वस्याऽस्वीकारे तात्पर्यादिति ध्येयम् ।

[१] ननु तत्पर्वतीयधूमवान्पर्वतः एतत्पर्वतीयधूमवानित्यादिप्रतीत्याऽवश्यक्लृप्ततत्पर्वतीयत्वादिविशिष्टधूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेव पर्वतीयधूमवानित्यादिप्रतीतेरप्युपपत्त्या पर्वतीयत्वादिविशिष्टधूमत्वावच्छिन्नाधिकरणतायामपि प्रमाणविरहः, एवं पूर्वक्षणादिवृत्तित्वविशिष्टपर्वतीयधूमवानित्यादिप्रतीतिसिद्धाधिकरणताव्यक्तिभिरपि पर्वतीयधूमवानितिप्रतीत्युपपत्तिश्चेति कथं 'पर्वतत्वचत्वरत्वादिविशिष्टे'त्यादिग्रन्थसङ्गतिरिति चेन्न ।

---

(१) एवं च पर्वतीयत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वावगाहित्वस्याऽनावश्यकत्वाद् धूमवानितिप्रतीत्यनुरोधेन धूमत्वावच्छिन्नाधिकरणत्वमवश्यमभ्युपेयमिति भावः ।

**वच्छिन्नाधिकरणतायां मानाभावाद्वह्निमान् धूमादित्यादावव्याप्तिः हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेः,**

---

तत्रैव तात्पर्यात् । अथवा पर्वतस्य नानात्वेन पर्वतीयधूमत्वावच्छिन्नाधिकरणतायाः नानात्वेन एतत्पर्वततत्पर्वतनिष्ठाधिकरणताया अपरपर्वतेऽसत्त्वात्तदंशे तद्भाने च प्रतीतेर्भ्रमत्वमेव स्यादिति न पर्वतीयधूमवानितिप्रतीतेरन्यथोपपत्तिरिति ।

**धूमवानितिप्रतीत्युपपत्ताविति** । धूमवानिति शाब्दप्रतीतौ प्रमात्वोपपत्तावित्यर्थः। प्रमात्वन्तु अधिकरणताघटितम्, तच्च धूमत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वविशिष्टविशेष्यतानिरूपितधूमत्वनिष्ठावच्छेदकताकप्रकारताकत्वरूपम्, तथा चाऽधिकरणताया असत्त्वे प्रमात्वानुपपत्तिः, अतोऽधिकरणत्वमावश्यकम्, परन्तु पर्वतत्ववैशिष्ट्यधूमत्वोभयधर्मावच्छिन्नाधिकरणतामादाय धूमवानितिप्रतीतिनिष्ठप्रमात्वोपपत्तौ धूमत्वरूपसामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावादिति जगदीशार्थः ।

**धूमत्वावच्छिन्नाधिकरणतायां मानाभावादिति** । तथाच धूमवानितिप्रतीतिः तत्तद्धूमत्वावच्छिन्नाधिकरणताकूटातिरिक्ताधिकरणताविषयकत्वाभाववती सामग्र्यप्रयोज्यत्वादिति फलितार्थः । [१]नन्वत्र सिद्ध्यसिद्धिभ्यां व्याघातः, यदि सामान्यधर्मावच्छिन्नाधिकरणता नास्ति तदा 'मानाभावादि'त्यादिना तत्खण्डनस्यानौचित्यम्, सत्यां च सुतरामेव । न च धूमत्वे अधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्यान्यत्र प्रसिद्धस्याभावः साध्यते, तथाच नाऽप्रसिद्ध्याद्यवकाश इति वाच्यम् । विशिष्टस्य केवलानतिरिक्ततया विशिष्टधूमत्वे तादृशावच्छेदकत्वेन शुद्धधूमत्वे तादृशावच्छेदकत्वाभावविरहात् । न च धूमत्वगतैकत्वेऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावसाधने तात्पर्यमिति वाच्यम् । सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य द्वित्वे यावत्त्वे वा सत्त्वेन तदभावस्य धूमत्वगतैकत्वे सामान्यधर्मावच्छिन्नाधिकरणतावादिनापि स्वीकारेण सिद्धसाधनापत्तेः । न च पर्वतादिरूपतद्व्यक्तिनिष्ठाधिकरणताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभाव एव साधनीय इति वाच्यम् । पर्वते नानाधर्मावच्छिन्नाधिकरणत्वस्य सत्त्वात्पूर्वोक्तरीत्या सिद्धसाधनस्य दुर्वारत्वात् । न च तन्निष्ठयत्किञ्चिदधिकरणताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावसाधने न सिद्धसाधनावकाश इति वाच्यम् । यत्किञ्चित्त्वस्याननुगततया तन्निष्ठपर्वतीयतृणाद्यधिकरणतानिरूपिततद्व्यक्तिनिष्ठनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावमादाय सिद्धसाधनादिति चेन्न ।

धूमत्वगतैकत्वे अधिकरणताविशिष्टान्यत्वसाधनान्न कोपि दोष इति । वै० स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व(१)सम्बन्धेनेति ।

---

(१) तद्व्यक्तिनिष्ठाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्ननिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावकूट, तद्व्यक्तिनिष्ठाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नतद्व्यक्तिनिष्ठावच्छेदकतानिरूपितनिरूपक

**तथापि हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधहेतुतावच्छेदकाश्रयाधिकरणमेव हेतुतावच्छेदकावच्छि-**

तथापीति । स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य चेत्यर्थः । स्वं—हेतुतावच्छेदकम् । तथा च वह्निमान् धूमादित्यत्र हेतुतावच्छेदकीभूतधर्मे धूमत्वे धूमत्वाश्रयाधिकरणीभूतपर्वतादिनिष्ठाधिकरणतानिरूपितानिरूपकतावच्छेदकत्वस्य पर्वतीयत्वविशिष्टधूमत्वे प्रसिद्धस्याभावसत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वविरहेणोभयाभावसत्त्वात् तादृशधूमत्वाश्रयाधिकरणं यत्पर्वतादिकं तदेव हेत्वधिकरणमिति नाऽप्रसिद्धिः ।

[१] अत्र स्वाश्रयाधिकरणीभूतेत्यस्यानुपादाने वह्निमान् धूमादित्यादावव्याप्तिः, यत्पदेन ह्रदादेरप्युपादातुं शक्यत्वेन ह्रदादेरपि पारिभाषिकहेत्वधिकरणत्वात् । स्वाश्रयत्वं चात्र

---

तानिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकताकप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीत्याकारकसामान्याभावो वा तत्र साधनीय इति विभावनीयम् ।

तथाच मानं, मितिकरणम्, भावप्रधाननिर्देशान्मितिकरणत्वं मानपदार्थः, अधिकरणतायामित्यत्र सप्तम्यर्थो विशेष्यताकत्वम्, तस्य अनुमितावन्वयः । तथाच पदार्थमात्रे धूमत्वगतैकत्ववृत्तित्वप्रकारतानिरूपिता याऽधिकरणतानिष्ठा विशेष्यता तन्निरूपकानुमितिजनकत्वाभाव इति समुदितार्थः । जनकत्वाभावश्च प्रमितिजनकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन भ्रमात्मकधूमत्वगतैकत्ववृत्तित्वव्याप्यतद्व्यक्तिमदधिकरणत्वमित्याकारकज्ञाने जनकतासत्त्वेऽपि न क्षतिः । स्वनिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितधूमत्वगतैकत्वनिष्ठविशेष्यताशालिप्रमाजनकत्वस्वरूपसम्बन्धावच्छिन्नामितिजनकत्वाभाव इति सारम् । अथवा तादृशसम्बन्धावच्छिन्नाधिकरणत्वनिष्ठविषयताशालिमितिजनकं यन्मानं तज्जन्यमितीयाधिकरणतानिष्ठविशेष्यतायां धूमत्वगतैकत्वनिष्ठतादृशाधेयतासम्बन्धावच्छिन्नप्रकारतानिरूपितत्वाभावो विवक्षितः । प्रकारतानिरूपितत्वाभावश्च प्रमीयप्रकारतानिरूपितत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, एवं च नासंगतिरिति । तथाच मानपदं मितिपरं, मित्यभावादित्यर्थः । अधिकरणतायामित्यत्र सप्तम्यर्थ आधेयत्वम्, मित्यभावश्च प्रमितीयधूमत्वगतैकत्वनिष्ठविशेष्यतानिरूपिता या स्वनिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिता तत्पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतात्वसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । प्रमितिप्रकारतावद् धूमत्वगतैकत्वमित्याकारकतादृशैकत्वस्य च तादृशसम्बन्धेन धूमत्वावच्छिन्नप्रकारतायां सत्त्वेन तदभावस्य चाधिकरणतायां सत्त्वादिति ध्येयम् । वस्तुतस्तु प्राचीनमतसिद्धसामान्यधर्मावच्छिन्नाधिकरणत्वस्य स्वीकारे प्रयोजनाभावादित्येवार्थः ।

वस्तुतस्तु सामान्यधर्मावच्छिन्नाधिकरणताङ्गीकारपक्ष एव श्रेयान् । प्रमात्वं हि प्रकारताविशिष्टप्रकारताकज्ञानत्वम् । वै० स्वतादात्म्यस्वावच्छेदकमात्रावच्छिन्नाधिकरणतावन्निष्ठविशेष्यताकत्वोभयसम्बन्धेन । ईदृशप्रमात्वं च सामान्यधर्मावच्छिन्नाधिकरणतासत्त्वे एव सम्भवति । न चाऽधिकरणतायां धूमत्वमात्रावच्छिन्नत्वकल्पने गौरवमिति वाच्यम्। अनेकाधिकरणतासु धूमवानिति प्रतीतिविषयतासम्बन्धकल्पनापेक्षयाऽतिरिक्ताधिकरणताकल्पनाया एव लघुत्वात्, सामान्याभावस्वीकर्तृभिरतिरिक्तान्वयित्वस्वीकर्तृभिश्चेदृशमेव लाघवादिकं स्वीकर्तव्यम्, अन्यथा तत्सिद्धिरपि न स्यात् विशेषाभावकूटावगाहित्वस्य विलक्षणसंयोगवद्वयकत्वस्य च सामान्याभावप्रतीतिघटादिप्रतीत्योः सम्भवात् प्रतिबध्यप्रतिबन्धकभावस्य तद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वादिघटितरूपादिभिरुपपादनेन दोषासम्भवादित्यन्यत्र विस्तरः ।

हेतुतावच्छेदकताघटकसम्बन्धेन, अन्यथा कालिकेन धूमत्वाश्रयघटाधिकरणे भूतलादेरपि हेत्वधिकरणतापत्त्या तद्दोषतादवस्थ्यम्। एवं कालिकसमवायान्यतरसम्बन्धेन कालिकत्वसमवायत्वान्यतरवत्सम्बन्धेन वा साक्षात्परंपरासाधारणावच्छेदकतास्वीकारे समवायकालीनकालिक सम्बन्धेन वा धूमत्वविशिष्टं तृणादिकं संयोगेन तदधिकरणह्रदादिकमादाय तथैवाऽव्याप्तिः। एवं समवायकालिकोभयसम्बन्धेन धूमत्वविशिष्टस्य हेतुतायां कालिकसम्बन्धेन धूमत्वाश्रयतृणाधिकरणह्रदादिकमादायाऽव्याप्तिः, अत इतरवारकन्यूनवारकपर्याप्ती निवेश्ये, तथाच हेतुतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिहेतुतावच्छेदकनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य स्वाश्रयाधिकरणेत्यनेन विवक्षितत्वान्नोक्ताव्याप्ती। अवच्छेदकतायां रूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन।

[२]स्वाश्रयाधिकरणत्वं च हेतुतावच्छेदकसम्बन्धेन ग्राह्यम्, तेन वह्निमान् धूमादित्यत्र कालिकेन धूमत्वाश्रयधूमाधिकरणह्रदादिनिष्ठाधिकरणतानवच्छेदकत्वघटितोभयाभावस्य धूमत्वे सत्वेऽपि न क्षतिः। एवं पर्वताद्यन्यतमानुयोगिककालिकसम्बन्धेन धूमादेर्हेतुत्वे वह्नेः साध्यत्वे कालिकेन स्वाश्रयाधिकरणघटादिकमादाय, एवं कालिकेन धूमादेर्हेतुत्वे पर्वताद्यन्यतमानुयोगिककालिकेन स्वाश्रयाधिकरणं यत्पर्वतादि तत्र वह्न्यभावविरहेणाभावान्तरमादायाव्याप्त्यतिव्याप्तिवारणाय न्यूनेतरवारकपर्याप्ती निवेश्ये, तथाच स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वं तदर्थः।

[३] यन्निष्ठाधिकरणतानिरूपितनिरूपकतापि हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, तेन ज्ञानाभावविषयकज्ञानत्वस्य साध्यत्वे विषयितया ज्ञानाभावहेतौ ज्ञानाभावत्वनिष्ठावच्छेदकता निरूपिता या घटत्वज्ञानाभावत्वोभयधर्मावच्छिन्नविषयितासम्बन्धावच्छिन्ननिरूपकता तन्निरूपिताधिकरण यद् घटज्ञानाभावोभयाविषयकं ज्ञानं तन्निष्ठप्रतियोगितासम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वस्य हेतुतावच्छेदकेऽसत्त्वेनोभयाभावस्याक्षततया यत्पदेन तादृशज्ञानस्यापि धर्तुं शक्यतया तद्वृत्तिसाध्याभावप्रतियोगितावच्छेदकत्वमादायापि नाव्याप्तिः, उभयविषयकज्ञाने विषयितासम्बन्धावच्छिन्नज्ञानाभावत्वमात्रावच्छिन्ननिरूपकताधिकरणत्वस्यासत्त्वेन तादृशोभयविषयकज्ञाननिष्ठाधिकरणतानिरूपितविषयितासम्बन्धावच्छिन्ननिरूपकतानवच्छेकत्वस्याधिकरणतावच्छेदकत्वस्य च सत्त्वेनोभयाभावविरहाद् यत्पदेन तस्य धर्तुमशक्यत्वात्, शक्यते च धर्तुं ज्ञानाभावविषयकज्ञानमेव तत्र च साध्याभावस्यासत्त्वादिति। यत्तु द्रव्यं विशिष्टसत्वादित्यत्र स्वाश्रयाधिकरणीभूतविशिष्टसत्ताविषयकज्ञानरूपगुणादिनिष्ठविषयितासम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वस्य हेतुतावच्छेदकीभूतधर्मे विरहेण तद्घटितोभयाभावस्य सत्त्वेन यत्पदेन गुणस्यापि धारणसम्भवे तन्निष्ठसाध्याभावमादायाऽव्याप्तिवारणाय तन्निवेश इति। तदसत्। हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य यत्पदेन विवक्षणीयत-

यां तादृशनिरूपकताकाधिकरणताया गुणादावसत्त्वेन गुणादेर्यत्पदेन धर्तुमशक्यत्वात् ।

एवमवच्छेदकतावच्छेदकसाधारणाऽवच्छेदकत्वस्वीकारे द्रव्यं विशिष्टसत्त्वादित्यत्र स्वाश्रयाधिकरणं यद् ज्ञानादि तन्निरूपितसमवायकालीनविषयितासम्बन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वविरहेणोभयाभावसत्त्वात् यत्पदेन ज्ञानस्यापि धर्तुं शक्यतया तत्र साध्याभावमादाय, एवं कालिककालीनसमवायेन विशिष्टसत्त्वहेतौ च स्वाश्रयाधिकरणं यद् गुणादि तन्निष्ठकेवलकालिकसम्बन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वविरहेणोभयाभावसत्त्वात् यत्पदेन गुणादेरपि धर्तुं शक्यतया तत्र साध्याभावमादायाव्याप्तिवारणाय इतरवारकन्यूनवारकपर्याप्ती निवेश्ये ।

[४] एवं सामान्यतोऽधिकरणतावच्छेदकेत्यत्रापि निरूपकता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा विषयितासम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य धूमत्वे सत्त्वाद् पारिभाषिकावच्छेदकाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः । एवमितरवारकपर्याप्त्यनिवेशे उक्तस्थले एव धूमत्वे स्वाश्रयाधिकरणपर्वतनिष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतः संयोगकालीनविषयितासम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य च सत्त्वात्पारिभाषिकावच्छेदकाप्रसिद्ध्याऽव्याप्तिः स्यात् । एवं विषयिताकालीनसंयोगेन हेतुतायां स्वाश्रयाधिकरणपर्वतनिष्ठाधिकरणतानवच्छेदकत्वसामान्यतः-केवलविषयितासम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वोभयसत्त्वेन पारिभाषिकावच्छेदकाप्रसिद्ध्याऽव्याप्तिरतो न्यूनवारकपर्याप्तिनिवेशः ।

[५] यन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वघटकीभूतावच्छेदकत्वमपि हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यम्, अन्यथाऽऽत्मभेदस्य साध्यतायामात्मान्यत्वविशिष्टसत्त्वस्य हेतुतायामव्याप्तिः, आत्मान्यत्वविशिष्टसत्तात्वे स्वाश्रयाधिकरणं यदात्मादिकं तन्निष्ठा या विषयितासम्बन्धेन सत्तात्वविशिष्टस्य समवायसम्बन्धावच्छिन्नाधिकरणता तन्निरूपितनिरूपकतानवच्छेदकत्वविरहेणोभयाभावसत्त्वात् । इतरवारकपर्याप्त्यनिवेशे समवायसम्बन्धेन धूमत्वविशिष्टाभावनिष्ठतद्व्यक्तित्वस्य साध्यत्वे समवायसम्बन्धेन धूमत्वविशिष्टस्य प्रतियोगितासम्बन्धेन हेतुतायामव्याप्तिः, स्वाश्रयाधिकरणं यो धूमत्वप्रतियोगिकसमवायसम्बन्धेन धूमत्वविशिष्टाभावस्तन्निष्ठधूमत्वप्रतियोगिकसमवायसम्बन्धेन धूमत्वविशिष्टस्य प्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्व-सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावसत्त्वात् । न्यूनवारकपर्याप्त्यनिवेशे धूमत्वप्रतियोगिकसमवायेन धूमत्वविशिष्टाभावनिष्ठतद्व्यक्तित्वस्य साध्यतायां धूमत्वप्रतियोगिकसमवायसम्बन्धेन धूमत्वविशिष्टस्य प्रतियोगितासम्बन्धेन हेतुतायामव्याप्तिः, स्वाश्रयाधिकरणं यो धूमाभावस्तन्निष्ठसमवायसम्बन्धेन धूमत्वविशिष्टस्य प्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्व—सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावसत्त्वात् ।

[६] सामान्यतोऽधिकरणतावच्छेदकत्वघटकीभूतावच्छेदकत्वमपि हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यम्, अन्यथा धूमावयवत्ववान् धूमादित्यादावव्याप्तिः, स्वाश्रयाधिकरणं यो धूमावयवस्तन्निष्ठाधिकरणतानवच्छेदकत्व—सामान्यतोविषयित्वसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणतावच्छेदकत्वोभयसत्त्वात्पारिभाषिकावच्छेदकाप्रसिद्धेः । इत-

न्नाधिकरणेत्यनेन विवक्षितम् , वह्निमान् धूमादित्यादौ तादृशहेत्वधिकरणं धूमस्याधिकरणमात्रम् , द्रव्यं विशिष्टसत्त्वादित्यादौ च तादृशं हेत्वधिकरणं द्रव्यमेव न तु गुणादि विशिष्टसत्तात्वे तन्निष्ठाधिकरणताऽनवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वादिति ध्येयम् ।

त्वारकपर्याप्त्यनिवेशे घटभेदाधिकरणे स्वरूपकालिकोभयसम्बन्धेन वृत्तिताविशिष्टप्रमेयत्वस्य कालिकसम्बन्धेन तद्विशिष्टस्य स्वरूपसम्बन्धेन हेतुतायां जन्यत्वस्य साध्यतायामव्याप्तिः, स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्व-सामान्यतोऽधिकरणतानिरूपितनिरूपकता-निरूपितस्वरूपकालिकोभयसम्बन्धावच्छिन्नावच्छेदकत्वोभयसत्त्वात् पारिभाषिकावच्छेदका-प्रसिद्धेः । न्यूनत्वारकपर्याप्त्यनिवेशे समवायकालीनपर्वतत्वविशिष्टधूमत्वविशिष्टस्य संयोगेन हेतुतायां वह्न्यादिसाध्यत्वेऽव्याप्तिः, स्वाश्रयाधिकरणं यत्पर्वतादिकं तन्निष्ठाधिकरणता-नवच्छेदकत्व–सामान्यतः समवायसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वोभयसत्त्वात्पारिभा-षिकावच्छेदकाप्रसिद्धेरिति ।

एवं च 'हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वविशिष्ट-सामान्यतोऽधिकरणतावच्छेदकत्वाभाव एव निवेश्यतां किमुभयाभावनिवेशेनेति पूर्वपक्षोऽपि' समाहितः । तद्धूमप्रतियोगिकसंयोगेन धूमस्य हेतुतायां वह्नेः साध्यत्वे तद्धूमप्रतियोगिकसंयो-गसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविशिष्टनिरूपकतावच्छेदकत्वस्याऽप्रसिद्ध्याऽव्याप्तिः स्यादिति । उभयाभावनिवेशे च तद्धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्ननिरूपकतानवच्छेद-कत्वस्यापरधूमत्वे प्रसिद्ध्या तद्धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य तद्धूमत्वेऽप्रसिद्ध्या उभयाभावस्य च हेतुतावच्छेदके सत्त्वाल्लक्षणसमन्वयः ।

केचित्तु महाकालभिन्नं कालिकेन कार्यत्वादित्यादौ महाकालनिष्ठाधिकरणतानिरूपितका-लिकसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविशिष्टकालिकेन अधिकरणतावच्छेदकत्वस्याप्र-सिद्ध्या यत्पदेन महाकालस्य धर्तुमशक्यत्वात्, जन्यमेव धर्तव्यम्, तत्र साध्यस्य सत्त्वेन साध्याभावस्य लक्षणाऽघटकत्वादभावान्तरमादायाऽतिव्याप्तिरतस्तन्निवेशः, तथाच महाकालनि-ष्ठाधिकरणतानवच्छेदकत्वस्याऽवृत्तिगगनादिवृत्तिगगनत्वादावेव सौलभ्येन यत्पदेन महाका-लस्यापि धर्त्तव्यतया नातिव्याप्तिः । किञ्च महाकालानुयोगिककालिकसम्बन्धेन हेतुतास्थले तत्र विशिष्टस्याऽप्रसिद्ध्याऽव्याप्तिरतस्तदुपेक्षितमिति प्राहुः ।

द्रव्यमेवेति । विशिष्टसत्तात्वे स्वाश्रयाधिकरणीभूतद्रव्यनिष्ठाधिकरणतानवच्छेदकत्ववि-रहेणोभयाभावसत्त्वात् इत्यर्थः ।

[१]अथ गुणकर्मान्यत्वविशिष्टसत्तावानितिप्रतीतौ अवश्यक्लृप्तघटादिवृत्तित्वविशिष्टगुण-कर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणताव्यक्तिभिरेवोपपत्तौ गुणकर्मान्यत्वविशिष्टसत्तात्वे-तरधर्मानवच्छिन्नाधिकरणताया अप्यनावश्यकत्वात् विशिष्टसत्तात्वावच्छिन्नाधिकरणताया मानाभावेन विशिष्टसत्तात्वे गुणनिष्ठाधिकरणतानवच्छेदकत्वसत्त्वेऽपि सामान्यतोऽधिकरणता-वच्छेदकत्वविरहेणोभयाभावसत्त्वाद्यत्पदेन गुणस्य धर्तुं शक्यतया तन्निष्ठाभावप्रतियोगित्वस्य साध्ये सत्त्वादव्याप्तिरिति चेन्न ।

हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतात्वस्य यत्पदार्थे स्वाश्रयाधिकरणेत्यनेन विवक्षितत्वान्नाव्याप्तिः। न च 'द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ तादृशहेत्वधिकरणं द्रव्यमेव न तु गुणादि विशिष्टसत्तात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वादि'ति ग्रन्थाऽसङ्गतिः, हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतात्वस्याऽसत्त्वेन गुणादेर्यत्पदेन धर्तुमशक्यत्वादिति वाच्यम्। हेतुहेतुमद्भावेन ग्रन्थसङ्गतेः सुवचत्वात्। तथाहि न गुणादीत्यत्र अधिकरणतानवच्छेदकत्वं हेतुः अधिकरणतावच्छेदकत्वं द्रव्यमेवेत्यत्र हेतुः, एवं च यतो गुणादिनिष्ठाधिकरणतानिरूपकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं वैशिष्ट्यसत्तात्वगताद्वित्वम् अतो न गुणादिः, यतो द्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं तादृशद्वित्वमतः स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्द्रव्यमेवेति सङ्गतिरिति भावः।

[२]वस्तुतस्तु घटवृत्तित्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणताव्यक्तिभिर्घटो गुणकर्मान्यत्वविशिष्टसत्तावानितिप्रतीत्युपपत्तावपि गुणो कर्मान्यत्वविशिष्टसत्तावानिति भ्रमात्मकशाब्दप्रतीतौ गुणवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहित्वे प्रमात्वापत्तिरिति न तद्विषयः, किन्तु गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतैव तद्विषय इति तादृशाधिकरणताया अवश्यं स्वीकार्यतया यथाश्रुतस्यैव सम्यक्त्वादिति ध्येयम्।

[३]न च वैशिष्ट्यावच्छिन्नाधिकरणतामादाय विशिष्टसत्तावानितिं प्रतीत्युपपत्तौ वैशिष्ट्यसत्तात्वोभयधर्मावच्छिन्नाधिकरणतायां मानाभावेनाऽव्याप्तितादवस्थ्यम्, स्वाश्रयाधिकरणगुणनिष्ठाधिकरणतानवच्छदकत्वसत्त्वेपि सामान्यतोऽधिकरणतावच्छेदकत्वविरहेणोभयाभावसत्त्वादिति वाच्यम्। हेतुतावच्छेदकताव्यापकत्वस्योभयाभावे विवक्षणात्। हेतुघटकीभूतं यद्वैशिष्ट्यं तत्रोभयसत्त्वेन तादृशोभयाभावे व्यापकत्वविरहादिति ध्येयम्।

[४]न च तथापि द्रव्यं विशिष्टसत्त्वादित्यादौ हेतुतावच्छेदकीभूतसत्तात्वे स्वाश्रयाधिकरणगुणनिष्ठाधिकरणतानवच्छेदकत्वसत्त्वेऽपि सामान्यतोऽधिकरणतावच्छेदकत्वविरहेणोभयाभावसत्त्वाद् गुणोपि तथाविधहेत्वधिकरण इत्यव्याप्तिरिति वाच्यम्। हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वाश्रयाश्रयवयन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व-सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयाभावस्य विवक्षितत्वात्। अव्यासज्यवृत्तिएकत्वादेः पर्याप्त्यस्वीकारे तु हेतुतावच्छेदकत्वसमनियतसंख्यायां स्वाश्रयाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतावच्छेदकतासमनियतसंख्यातादात्म्याभावसामान्यतोऽधिकरणतावच्छेदकतासमनियतसंख्यातादात्म्योभयव्यतिरेको निवेश्य इति।

[५] ननु हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानवच्छेदकत्व—सामान्यतोऽधिकरणतावच्छेदकत्वान्यतरमस्तीत्यस्यैव सम्यक्त्वेऽलमुभयाभावपर्यन्तानुधानेन। न च द्रव्यं विशिष्टसत्त्वादित्यादौ अन्यतरान्तर्गतगुणनिष्ठाधिकरणतानवच्छेदकत्वस्य

विशिष्टसत्तात्वे सत्त्वेन यत्पदेन गुणस्यापि धर्तुं शक्यतयाऽव्याप्तिरिति वाच्यम् । यन्निष्ठाधिकरणतावच्छेदकत्वसामान्यतोऽधिकरणतानवच्छेदकत्वान्यतरस्यैव विवक्षणात् । यत्पदेनेदानीं न गुणो धर्तुं शक्यते, गुणनिष्ठाधिकरणतावच्छेदकत्वसामान्यतोऽधिकरणतानवच्छेदकत्वान्यतरस्यैव हेतुतावच्छेदकेऽसत्त्वात् । न च सत्तात्वे अन्यतरान्तर्गतसामान्यतोऽधिकरणतानवच्छेदकत्वसत्त्वेन यत्पदेन गुणस्यापि धर्तुं शक्यत्वेनाव्याप्तिः, वह्निविषयकज्ञानत्ववान् वह्नेरित्यादौ वह्नित्वे महानसीयवह्निविषयकज्ञाननिष्ठाधिकरणतावच्छेदकत्वस्य महानसीयवह्नित्वे सत्त्वेन वह्नित्वेऽपि सत्त्वात् यत्पदेन महानसीयवह्निविषयकज्ञानस्यापि धर्तुं शक्यतया तत्र साध्याभावमादायाऽव्याप्तिश्चेति वाच्यम् । स्वाश्रयाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वैतदन्यतरवद्धेतुतावच्छेदकगतरूपं तथाविधहेत्वधिकरणस्य प्रवेशात् ।

स्वाश्रयाश्रयाधिकरणत्वमपहाय स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकानिरूपकताकाधिकरणत्वं विवक्षणीयम् , तेन द्रव्यं विशिष्टसत्वादित्यादौ नाव्याप्तितादवस्थ्यम् । तद्ज्ञानत्ववान् वह्नेरित्यादौ विषयितासम्बन्धेन हेतुतास्थले हेतुताघटकविषयितासम्बन्धावच्छिन्ननिरूपकत्वस्य केवलान्वयितया सामान्यतोऽधिकरणतानवच्छेदकत्वाऽप्रसिद्ध्या तादृशानवच्छेदकत्वघटितान्यतराऽप्रसिद्धिरिति नाशङ्कनीयम् । सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य ज्ञानान्यत्वविशिष्टघटत्वगतरूपादौ प्रसिद्धत्वादिति चेन्न ।

भेदद्वयावच्छिन्नप्रतियोगिताकभेदरूपाऽन्यतरत्वापेक्षयाऽसमवेतसंख्यारूपस्योभयत्वस्यैव लघुत्वादिति ।

[६] ननु तथापि तादृशोभयत्वस्य स्वरूपेण पर्याप्त्योभयत्रेव प्रत्येकमपि सत्त्वात् (१)तादृशोभयत्वाश्रयवद्धेतुतावच्छेदकगतरूपे तथाविधहेत्वधिकरणविवक्षयैव सामञ्जस्ये उभयाभावनिवेशोऽनर्थकः । नच (२)विषयितया वह्निहेतुके हेतुतावच्छेदकविषयितासम्बन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव सर्वत्र सत्त्वेन तादृशानवच्छेदकत्वस्यैवाऽप्रसिद्धिः ज्ञानान्यत्वविशिष्टघटस्यापि विषयितासम्बन्धेन सत्त्वात् , घटादौ तत्प्रसिद्धिस्तु न सम्भवति, घटादिव्यक्तिविशिष्टवन्निष्ठविषयितासम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य तत्रापि सत्त्वादिति वाच्यम् । हेतुतावच्छेदकतात्वावच्छिन्नप्रति

---

(१) हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे यन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-अधिकरणतानिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वैतदगतद्वित्वाश्रयवदित्यर्थः ।

(२) नच सिद्धान्तेऽपि तज्ज्ञानत्ववान् विषयितया प्रमेयवत् इत्यादौ यत्पदेन प्रमेयाश्रयविषयकज्ञानस्य धर्तुं शक्यतया तन्निष्ठाधिकरणतानिरूपिता या प्रमेयावच्छिन्ननिरूपकता तन्निरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं प्रमेयप्रमेयत्वगतसमुदायत्वे वर्त्तते, एवं च तादृशावच्छेदकताया निखिलपदार्थे सत्त्वेनाऽनवच्छेदकत्वस्य कुत्राप्यसत्त्वात्तादृशोभयाभावाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । तादृशानुयोगितावच्छेदकत्वस्य प्रमेयत्वे स्वीकारेणैव तत्प्रसिद्धिसम्भवादिति विभावनीयम्

योगितावपर्याप्त्यनुयोगितावच्छेदकत्वे स्वाश्रयावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावन्निष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वसामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वोभयत्वाश्रयवत्त्वस्यैव विवक्षितत्वात् । उभयत्र वृत्तित्वं च स्वरूपसम्बन्धेन, तथाच तादृशरूपवृत्तित्वस्य हेतुतावच्छेदकवह्नित्वगतैकत्वानिष्ठावच्छेदकतायां सत्त्वेन तदभावस्य घटादावेव प्रसिद्धेः, प्रमेयवद्विषयकज्ञानत्वस्य साध्यतायां विषयितया प्रमेयवतो हेतुतास्थले प्रमेयनिष्ठहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य प्रमेयत्वरूपतया जगद्वृत्तित्वेन यत्पदेन घटविषयकज्ञानमादाय तन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वेनोभयत्वाश्रयवत्त्वात् घटविषयकज्ञानस्यापि हेत्वधिकरणतापत्त्याऽव्याप्तिरिति चेन्न ।

हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतात्वे तादृशरूपवृत्तितावच्छेदकत्वतादृश[illegible]तितानवच्छेदकत्वगतोभयत्वाश्रयत्वस्य विवक्षितत्वात् । न च शुद्धावच्छेदकतात्वे वृत्तितावच्छेदकत्वसत्त्वे तादृशावच्छेदकतात्वेऽपि तत्सत्त्वमक्षतं, तयोरनतिरेकादिति वाच्यम् । हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वाश्रयाश्रयरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपनिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व–सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वगतोभयत्वाश्रयवत्त्वस्य विवक्षितत्वात् । वह्निमान् धूमादित्यादौ हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतात्वावच्छिन्ननिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य धूमत्वगतैकत्वानिष्ठावच्छेदकत्वगतैकत्वे तादृशवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेनोभयवत्त्वसत्त्वाल्लक्षणसमन्वयः । प्रमेयवतो हेतुतायां घटविषयकज्ञानस्य धारणाऽसम्भवात् निरुक्तरीत्या तादृशरूपे तादृशोभयस्य सत्त्वाल्लक्षणसमन्वयः । न च निरूपकताप्रतियोगिकपर्याप्त्यस्वीकारात्तादृशनिवेशाऽसम्भव इति वाच्यम् । सत्प्रतिपक्षग्रन्थे भट्टाचार्येण तत्स्वीकारादिति केचित् । तन्न । गौरवात्तादृशोभयाभावनिवेशस्यैवोचितत्वादिति ध्येयम् ।

[८]अथात्र द्रव्यं घटत्वपटत्वोभयस्मात् इत्यादौ विरुद्धव्यभिचारिणि अतिव्याप्तिः तादृशोभयत्वाश्रयाधिकरणं घटः पटश्च तन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य तादृशोभयत्वे सत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वविरहेण उभयाभावस्याऽक्षतत्वात् यत्पदेन घटस्यापि धर्तुं शक्यतया तथाविधघटवृत्त्यभावप्रतियोगितानवच्छे-

दकत्वस्य साध्यतावच्छेदके सत्त्वात्(१) इति । न च द्रव्यं विशिष्टसत्त्वादित्यादौ प्रागुक्तक्रमेणाऽव्याप्तिवारणाय स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावत्त्वस्य यत्पदार्थे निवेशेनैवाऽतिव्याप्तेरपि वारणात्, हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद् घटत्वपटत्वगतसमुदायत्वम् तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाऽप्रसिद्धेः । वह्निमान् धूमादित्यत्र धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकता तत्त्वधूमत्वधर्मद्वयावच्छिन्ना भवति इति न कोऽपि दोष इति वाच्यम्। तथापि महानसीयवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्नेर्हेतुत्वे वाच्यत्वसाध्यकविरुद्धव्यभिचारिणि अतिव्याप्तिः, वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकमहानसीयत्ववह्नित्वधर्मद्वयावच्छिन्ननिरूपकताकाधिकरणतायाः प्रसिद्धत्वात् तथाविधमहानसीयवह्न्यभाववृत्त्यभावप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वादिति चेन्न ।

हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्व्यक्तिनिष्ठविशेष्यतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यापि यद्रूपे विशेषणीयत्वात्। एवं च महानसीयवह्न्यभावस्तादृशप्रतियोगितासम्बन्धेन वह्निमानिति प्रतीतेर्भ्रमत्वनियमेन तादृशाभावनिष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तादृशवह्नित्वगतैकत्वेऽसत्त्वात् यत्पदेन महानसीयवह्न्यभावस्य धर्तुमशक्यतया नातिव्याप्तिः ।

[१]नन्वेतादृशरीत्या तात्पर्यवर्णने यन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं भवति तदेव हेत्वधिकरणेत्यनेन विवक्षणीयम्, अलमुभयाभावनिवेशेन, तेनैवोक्तस्थले द्रव्यं घटत्वपटत्वोभयस्मादित्यादौ चाऽतिव्याप्तिविरहादिति चेन्न ।

गुणो गुणकर्मान्यत्वोपलक्षितसत्तावानिति प्रतीतेः प्रमात्वेन गुणनिष्ठविशेष्यतानिरूपिता या उपलक्षितसत्तावगाहिप्रमात्मकज्ञानीयविशिष्टसत्तात्वावच्छिन्ना प्रकारता तन्निरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वगतद्वित्वे सत्त्वेन यत्पदेन गुणस्यापि धर्तुं शक्यतया द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः, उपलक्षिता(२)वगाहिप्रत्ययेऽपि विशिष्टसत्तात्वे प्रकारतावच्छेदकत्वावगाहनात्। न च तत्र किं मानमिति वाच्यम्। उपलक्षितावगाहिगुणो विशिष्टसत्तावानितिप्रतीतेः गुणः सत्तावानितिप्रतीतेश्चाविशेषापत्तिवारणाय तथा स्वीकारात्। न च यन्निष्ठविशेष्यतानिरूपितविशिष्टवैशिष्ट्यावगाहिप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविवक्षणान्नैष दो-

---

(१) न च साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यम् । व्यापकत्वलक्षणाऽतिव्याप्तेर्दुर्वारत्वात्, व्यभिचारज्ञानकाले व्याप्तिज्ञानाद्दनुमित्यापत्तेश्च।

(२) उपलक्षणत्वं च प्रकारतावच्छेदकत्वे सति निरूपकतानवच्छेदकत्वम्, विशेषणत्वं च प्रकारतावच्छेदकत्वे सति निरूपकतावच्छेदकत्वमित्यनयोर्भेदः ।

षं इति वाच्यम् । द्रव्यं विशिष्टसत्त्वादित्यत्रैवाऽव्याप्तेः, उपलक्षितावगाहिप्रत्ययेऽपि सत्तात्ववि-शिष्टवैशिष्ट्यावगाहित्वात् । अत्र यद्यपि हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावद्यन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छे-दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाविवक्षणान्नोक्तदोषः, रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तथापि वह्निमान् धूमादित्यादौ पुनरप्रसिद्ध्याऽव्याप्त्यापत्तेः । न च तथापि तादृशरूपे स्वावच्छिन्नानु-योगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यन्निष्ठविशेष्यतेत्यादिनिवेशेनैव गु-णादेर्वारणसम्भवान्न कोपि दोष इति वाच्यम् । तथासति वह्न्यभावत्वसाध्यकप्रतियोगित-या वह्निहेतुकस्थले महानसीयवह्न्यभावस्यापि हेत्वधिकरणतापत्त्याऽव्याप्तिरिति तत्परि-त्यक्तम्(१) ।

---

(१) केचित्तु वन्ह्यभाववद्ह्रदविषयकं ज्ञानमभाववद्ह्रदविषयकमित्याकारकविशिष्टवैशिष्ट्यावगाहिज्ञा-नस्य भ्रमत्वम्, उपलक्षितावगाहिज्ञानस्य प्रमात्वम् । तत्रायं विशेषः यदाऽभाववद्ह्रदत्वगतसमुदायत्ववृत्ति-निरूपकताकाधिकरणतावगाहित्वं तदा प्रमात्वम्, यदि च तादृशरूपवृत्तिविषयितात्मकविषयितासम्बन्धेना-ऽभाववद् ह्रदावगाहित्वं तदा भ्रमत्वम्, तस्यैव यदा तदनवगाहित्वं तदोपलक्षितावगाहित्वेन प्रमात्वमिति । तथाच विषयितासम्बन्धेनाऽभाववद्ह्रदस्य हेतुतायां तज्ज्ञानत्वसाध्यके अभाववद्ह्रदत्वगतसमुदायत्वे स्वावच्छिन्ना-नुयोगिताकपर्याप्तिकावच्छेदकताकाभाववद्ह्रदत्वावच्छिन्ननिरूपकताकाधिकरणतावद् यद् वन्ह्यभाववद्-ह्रदविषयकं ज्ञानं तन्निष्ठा या उपलक्षितावगाहितादृशज्ञानमभाववद्ह्रदवादित्याकारकज्ञानीयाभाववद्ह्रदत्वा-वच्छिन्नप्रकारता तादृशप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वेन यत्पदेन वन्ह्यभाववद्ह्रदविषयकज्ञानस्य धर्तुं शक्यतया तत्र साध्याभावसत्त्वेनाऽव्याप्त्यापत्तेरिति तादृशो-भयाभावपर्यन्तानुधावनम् । एवंच वन्ह्यभाववद्ह्रदविषयकज्ञाननिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदक-तात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छे-दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य च सत्त्वेन निरुक्तोभयाभाववत्त्वविरहाद् यत्पदेन वन्ह्यभाववद्ह्रदविषयकज्ञानस्य धर्तुमशक्यतया तत्र लक्षणसमन्वयसम्भवान्न दोषः पदमा-दधाति । तथाच हेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मे स्वावच्छिन्नानुयोगिताकपर्या-प्तिकावच्छेदकताकनिरूपकताकाधिकरणतावन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतात्वावच्छिन्नपर्या-प्त्यनुयोगितावच्छेदकत्वे सति स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यं-यद्व्यक्तिनिष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वाधिकरणतानिरूपकता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयाभावः, तथाविधाधिकरणं यत्तन्निष्ठाभावप्र-तियोगितावच्छेदकं साध्यतावच्छेदकमित्यादि पर्यवसितार्थो बोध्यः । अस्यानुगमस्तु—हेतुतावच्छेदकतात्वाव-च्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टं यदधिकरणं तद्विशिष्टाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदका-वच्छिन्नसामानाधिकरण्यम् । अधिकरणे वैशिष्ट्यं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपक-ताकाधिकरणताकत्वस्ववृत्तित्वोभयसम्बन्धेन । स्वपदं धर्मपरम् । वृत्तिता च स्वनिष्ठविशेष्यतानिरूपितप्रमीय-प्रकारतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्व—स्वनिष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छि-न्नपर्याप्त्यनुयोगितावच्छेदकत्व—स्वकालीनाधिकरणतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वैतत्त्रित-यसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वोभयसम्बन्धेन, स्वमत्राधिकरणम्, अधिकरणवैशिष्ट्यं चाभावे स्ववृत्तित्व—स्ववृत्तिभेदीयप्रतियोगितानिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकता-निरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरू-पितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन, स्वपञ्चापि

[१०] अथ हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वाव-च्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकहेतुतावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाधिकरण-तावन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताव-च्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभावस्य सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकता-

---

अधिकरणमेव, स्ववृत्तिभेदश्च तद्व्यक्तिनिरूपितप्रतियोगितानिरूपितावच्छेदकतावद्धर्मावच्छिन्ननिरूपकता-काधिकरणतावानित्याकारको माद्य इति प्राहुः।

केचित्तु हेतुतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकीभूतयत्किंचिद्धर्मावशिष्टस्य यत्पदेन विवक्षितत्वात् वै० स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व सम्बन्धेन, अवच्छेदकता च स्वनिष्ठाधिकरणतानिरूपिताधेयत्वसम्बन्धेन, तथा च घटत्वपटत्वपर्याप्तावच्छेद कीभूतं यदुभयत्वं तादृशभेदवत्त्वसम्बन्धेन तद्विशिष्टधर्मस्याऽप्रसिध्या नातिव्याप्तिः। अथवा हेतुतावच्छेदक-विशिष्टाधिकरणमेव वा हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितम्। वै० स्वाश्रयाधिकरणत्व–आधेय-त्वैतदुभयसम्बन्धेन। आधेयत्वं च स्वनिष्ठाधिकरणतावत्त्वसम्बन्धेन, अधिकरणतावत्ता च स्वविशिष्टाभावव त्तासम्बन्धेन, वै० अधिकरणतावच्छेदकताःवावच्छिन्नउभयत्वावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रति-योगिताकाभावत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्याहुः।

यथाश्रुतस्यानुगमस्तु–प्रकृतहेतुतावच्छेदकावशिष्टत्वम्। वै० स्वनिष्ठभेदप्रतियोगितावच्छेदकत्व–स्वाश्रया धिकरणत्वोभयसम्बन्धेन। अवच्छेदकता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व–स्वसमानकालीनाधि-करणतानिरूपितनिरूपकतावच्छेदकत्वैतदुभयसम्बन्धेन, स्वनिष्ठावच्छेदकता च स्वनिष्ठाधिकरणतानिरूपित-निरूपकतावच्छेदकत्वसम्बन्धेन।

यद्वा स्वनिष्ठात्यन्ताभावप्रतियोगित्व–स्वाश्रयाधिकरणत्वोभयसम्बन्धेन हेतुतावच्छेदकविशिष्टत्वम्। प्रति-योगिता च निरुक्तोभयसम्बन्धेन बोध्या। तेन धूमीयसंयोगेन धूमहेतुकस्थले निरुक्तोभयसम्बन्धावच्छिन्ना-वच्छेदकत्वाप्रसिद्धावपि न क्षतिरिति ध्येयम्।

हेतुतावच्छेदकं च नित्यज्ञानावृत्तिविषयितासम्यग्ज्ञानवृत्तिहेतुतावच्छेदकावच्छिन्नप्रकारतावच्छेदकत्वेन विवक्षणीयमित्यतो द्रव्यं घटत्वपटत्वोभयस्मादित्यादौ नातिव्याप्तिरिति कश्चित्।

हेतुतावच्छेदकावृत्तिधर्म एव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितः। वृत्तिता च स्ववृत्त्य-भावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेत्यपि कश्चित्।

अपरे तु महानसीयवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निहेतुकमहानसीयवह्न्यभावत्वसाध्यकविरुद्ध-हेतौ वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकमहानसीयवह्नित्वावच्छिन्ननिरूपकताकाधि-करणतावन्महानसीयवह्न्यभावनिष्ठविशेष्यतानिरूपिततादृशसम्बन्धावच्छिन्नप्रमेयावच्छिन्नप्रकारतावच्छेदकता-त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सर्वत्र स्वीकारेण महानसीयत्ववह्नित्वगतद्वित्ववृत्ति-प्रतियोगितासम्बन्धेनापि एकत्वादिवृत्तिप्रमेयावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितावच्छेदकत्वस्य वह्नित्वगतैकत्वे सत्त्वेन तथाविधमहानसीयवह्न्यभाववृत्त्यभावप्रतियोगितानवच्छेदक त्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तिरत उभयाभावप्रवेशः। ननूभयाभावघटितकल्पेऽपि वह्निमान् धूमा-दित्यादावव्याप्तिः तत्र धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रमेयावच्छिन्ननिरूपकतानि-रूपिताधिकरणतावत्त्वस्य ह्रदेऽपि सत्त्वेन ह्रदस्यापि हेत्वधिकरणतापातात्। नच स्वावच्छिन्नानुयोगिताक-पर्याप्तिकावच्छेदकताभिन्ना किञ्चिन्निष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितत्वं निरूपकतायां निवे-शनीयमिति वाच्यम्। एवं सति प्रमीयप्रकारताघटितास्मदीयकल्पेऽपि प्रकारतायामेव तथानिवेशसम्भवादिति चेन्न। द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तेः, तत्र विशिष्टसत्त्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेद-कताकोपलक्षितविशिष्टसत्तावद्गुणावगाहिप्रमीयप्रकारताकविशेष्यतायाः गुणेऽपि सत्त्वेन तस्यापि हेत्वधि-करणत्वापत्तेः। प्रकारतास्थाने निरूपकतानिवेशे तु वह्न्यभावत्वसाध्यकप्रतियोगितया वह्निहेतुकस्थलेऽव्या-प्त्यापत्तिरिति वदन्ति।

यत्र(१) साधनतावच्छेदकं नाऽधिकरणतावच्छेदकं तत्र तदाश्रयसामानाधिकरण्यमेव निवेश्यमित्यपि वदन्ति ।

ननु सामानाधिकरण्यस्य व्याप्तित्वे तस्य प्रतिधूमं भिन्नत्वेन धूमसामान्ये वह्निसामान्यस्यैका व्याप्तिरिति व्यवहारोऽनुपपन्न इत्यत आह सामानाधिकरण्येति । तथा च वह्नित्वधूमत्वाद्यनुगमादेव तत्र व्याप्तेरैक्यव्यवहारो नतु वस्तुगत्या व्याप्तेरैक्यमिति भावः ।

नन्वेवं सामान्यलक्षणाया अस्वीकारे महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्तिधूमादावसत्त्वात् पर्वतीयवह्निसामानाधिकरण्य-

---

त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीत्यभावस्य निवेशेनैव सामञ्जस्ये उभयाभावनिवेशो व्यर्थ इति चेन्न ।

तदुक्तेः स्वरूपतो भानाङ्गीकारे वह्निज्ञानत्वसाध्यकविषयितया वह्निहेतुके महानसीयवह्निविषयकज्ञानस्यापि यत्पदेनोपादातुं शक्यतयाऽव्याप्तिस्तत्र सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीत्यभावसत्त्वादुभयाभावनिवेशः कृत इति ।

[११] अथ प्रतियोगितासंयोगान्यतरसम्बन्धेन वह्निहेतौ वह्न्यभावत्वसाध्यकव्यभिचारिणि-यत्पदेन पर्वतस्य धारणाऽसम्भवात्तन्निष्ठाधिकरणतावच्छेदकत्वस्य वह्नित्वपर्याप्तत्वाद्यत्पदेन वह्न्य-भावस्यैव वर्त्तव्यतया साध्याभावस्य तत्राऽवृत्तित्वेनान्यादृशाभावमादायातिव्याप्तिरिति चेन्न ।

हेतुतावच्छेदकवह्नित्वगतैकत्वे यथा पर्वतनिष्ठाधिकरणतानिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्ति तथाऽन्यतरसम्बन्धावच्छिन्नसामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वमपि नास्ति, तादृशान्यतरसम्बन्धेन वह्निमान् वह्न्यभाव इति प्रतीतौ गुरुप्रतियोगित्वसम्बन्धावच्छिन्ननिरूपकताकाधिकरणताया एव स्वीकारात्, तथाचान्यतरसम्बन्धावच्छिन्नाधिकरणताप्यप्रसिद्धैवेति ध्येयम् ।

यत्र-वह्निमान् धूमादित्यादौ, साधनतावच्छेदकं-धूमत्वं, नाधिकरणतावच्छेदकं-नाधिकरणतानिरूपितनिरूपकतावच्छेदकं, तत्तद्धूमत्वादेरेव तत्त्वेन निर्वाहे इति शेषः । तत्र-उक्तस्थलीयव्याप्तौ इति यावत्, तदाश्रयसामानाधिकरण्यमेव-हेतुतावच्छेदकाश्रय-सामानाधिकरण्यमेव, एवकारेण हेतुतावच्छेदकावच्छिन्नत्वस्य व्यवच्छेदः । निवेश्यमिति । साध्यसाधनभेदेन व्याप्तेर्भेदादिति भावः । तथाच पारिभाषिकहेत्वधिकरणनिवेशोऽकिञ्चित्कर इति ध्येयम् ।

तस्य—सामानाधिकरण्यस्य, दीधितौ निरूपकतावच्छेदकस्य—साध्यतावच्छेदकस्य, अधिकरणतावच्छेदकस्य—हेतुतावच्छेदकस्य, तथाच "एकैव द्वी" त्यादिग्रन्थस्थैकपदमेकधर्मावच्छिन्ननिरूपकताक--एकधर्मावच्छिन्नानुयोगिताकपरम्, एवं

---

(१) साध्यसाधनभेदेन व्याप्तेर्भेदात् यत्रेति चौ० पु० पाठः ।

सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्य अधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यम् । वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वात् धूमत्वादिमति तादृशसामानाधिकरण्यं, तद्वति धूमत्वादिकं वा व्याप्तिः आद्या भिन्ना, द्वितीया त्वभिन्नैवेति ध्येयम् ।

---

स्य च प्रागननुभवात्कुतः परामर्श इत्याशङ्कायामेकैव हि सा व्याप्तिरिति परामर्शीयसिद्धान्तग्रन्थोऽसङ्गत इत्यत आह वस्तुतस्त्विति । रासभादीति । तथाच धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति भावः ।

---

चैकनिरूपकतावच्छेदक--एकाधिकरणतावच्छेदकावच्छिन्ना व्याप्तिरित्यर्थः । अननुभवादिति । सामान्यस्याऽप्रत्यासत्तित्वे महानसीयवह्निसामानाधिकरण्यग्रहकाले लौकिकसन्निकर्षाभावात्प्रत्यक्षासम्भवेन उपनायकज्ञानविरहेण पर्वतीयधूमे उपनयासम्भव इति भावः । सामान्यलक्षणायाः प्रत्यासत्तित्वानभ्युपगमे 'एकैव ही'त्यादिग्रन्थस्य वह्निधूमत्वादिनिरूपकतावच्छेदकादेरैक्यप्रतिपादकत्वेऽपि व्याप्तिज्ञानोपपादकत्वाभावादिति बोध्यम् । न च महानसीयधूमनिष्ठवह्निसामानाधिकरण्यस्य स्वसमानाधिकरणधूमत्ववत्तासम्बन्धेन पर्वतीयधूमे भानम्, तथाच 'एकैव ही'त्यादिग्रन्थस्य धूमत्वादिघटितसम्बन्धेन दृष्टान्तीयहेतुनिष्ठसाध्यसामानाधिकरण्यस्य पक्षीयहेतुवृत्तित्वप्रतिपादनेन पक्षीयहेतौ व्याप्तिज्ञानोपपादकत्वान्नासङ्गतिरिति वाच्यम् । साक्षात्सम्बन्धेन व्याप्तिप्रकारकज्ञानस्याऽनुमितिहेतुत्वादन्यथाऽतिप्रसङ्गादिति ध्येयम् । तथाचेति । धूमलिङ्गकानुमित्यौपयिकव्याप्तिर्यदि धूमव्यापकवह्निसामानाधिकरण्यरूपा तदाऽतिप्रसङ्गमाह रासभादिसाधारणत्वादिति । अनुमितिः स्यादिति । अनुमित्यापत्तिरित्यर्थः । तथाचोक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वरूपकारणतावच्छेदकावच्छिन्नस्य रासभपरामर्शस्थलेऽपि सत्त्वेन तत्रानुमित्यनुत्पत्त्याऽन्वयव्यभिचार इति भावः । नच तद्धर्मावच्छिन्नव्यापकसाध्यसमानाधिकरण्यविशिष्टतद्धर्मावच्छिन्नवत्ताज्ञानत्वेनानुमितिहेतुत्वोक्तौ नोक्तापत्तिरिति वाच्यम् । पक्षधर्मतांशे यद्धर्मप्रकारकज्ञानत्वेनाऽनुमितिहेतुता तस्यैव व्याप्तित्वेन निरुक्तसामानाधिकरण्यमात्रस्य व्याप्तित्वे पक्षधर्मतांशे तत्प्रकारकज्ञानत्वेनैवानुमितिहेतुतया तस्य धूमव्यापकवह्निसमानाधिकरणधूमवानिति ज्ञाने इव धूमव्यापकवह्निसमानाधिकरणरासभवानिति ज्ञानेऽपि सत्त्वेन ततोऽनुमित्यापत्तेर्दुरुद्धरत्वात् । सामानाधिकरण्यमात्रस्य व्याप्तित्वस्वीकारेऽपि सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वेन न परामर्शस्य कारणत्वम्, तादृशज्ञानाविरोधितया स्वरूपासिद्धेर्हेत्वाभासत्वानुपपत्तेः, किन्तु तादृशसामानाधिकरण्यात्मकव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वघटितधर्मेणैव, तथाच रासभपरामर्शान्नानुमित्यापत्तिः । नचैवं रासभे वह्निव्याप्यत्वव्यवहारापत्तिरिति वाच्यम् । तद्रूपविशिष्टस्येत्यादिनिर्देशेन समभिव्याहृतविशेष्यपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नव्यापकसामानाधिकरण्यस्यैव तद्धर्मावच्छिन्ने व्याप्यत्वव्यवहारप्रयोजक-

नच धूमादिव्यापकवह्निसमानाधिकरणधूमादिमत्त्वानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितौ हेतुत्वादुक्तव्याप्तेः रासभादिसाधारण्येऽपि न क्षतिरिति वाच्यम् । पक्षधर्मांशे विषयतयाऽनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र निवेशे तद्घटितस्यैव व्याप्तित्वादिति

त्वादित्याशयेन शङ्कते नचेति । विषयतयेति अभेदे तृतीया, तथाच पक्षधर्मविशेषणत्वाभिन्नविषयतासम्बन्धेनेत्यर्थः । तत्र–पक्षधर्मविशेषणतया कारणतावच्छेदककोटौ । तद्घटितस्यैवेति । एवकारेण सामानाधिकरण्यमात्रस्य व्यवच्छेदः, तथाच सामानाधिकरण्यमात्रस्य व्याप्तित्ववादिभिर्हेतुव्यापकसामानाधिकरण्यमात्रप्रकारकज्ञानस्य कारणत्वं वाच्यम्, एवं चानुमित्यापत्तिरिति । इदमुपलक्षणम् । अत्र सामानाधिकरण्यमात्रस्य व्याप्तित्वे वह्निव्याप्यो धूम इति व्यवहारो न स्याद्, व्यवहारं प्रति व्यवहर्त्तव्यतावच्छेदकप्रकारकज्ञानस्य हेतुतया तादृशसामानाधिकरण्यस्य रासभादिवृत्तित्वेनाऽतिप्रसक्ततया व्यवहर्त्तव्यतानवच्छेदकत्वादिति ध्येयम् ।

[१] ननु तथापि धूमत्वविशिष्टधूमव्यापकवह्निसामानाधिकरण्यस्य व्याप्तित्वे धूमनिष्ठं यद्धूमव्यापकवह्निसामानाधिकरण्यं तद्विशिष्टवान्पर्वत इति ज्ञानस्य निष्ठत्वसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपिततादृशसामानाधिकरण्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्वोक्तौ "नचे"त्यादिकल्पापेक्षया गौरवम्, तत्र हि धूमव्यापकसाध्यसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणतया आधेयत्वसम्बन्धावच्छिन्नधूमनिष्ठविषयताया अनिवेशेन लाघवमिति चेन्न ।

अवच्छिन्नत्वसम्बन्धावच्छिन्नधूमत्वप्रकारतानिरूपितसामानाधिकरण्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिनिश्चयत्वेन पारतन्त्र्यविषयतामादाय धूमनिष्ठसामानाधिकरण्यघटितपरामर्शस्य कारणत्वे लाघवात् । न च स्वावच्छिन्नत्वमवच्छेदकतानिरूपकत्वम्, अवच्छेदकता च हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा रासभादिनिष्ठसामानाधिकरण्यस्यापि कालिकसम्बन्धेन धूमत्वावच्छिन्नतया तद्वारणाऽसम्भवाद्, तथाच गौरवं दुर्वारमेवेति वाच्यम् । रासभो वह्निव्याप्य इति व्यवहारवारणाय धूमनिष्ठसामानाधिकरण्यकथने ग्रन्थतात्पर्यात्, एवं चाऽऽधेयतासम्बन्धेन धूमविशिष्टसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव धूमनिष्ठसामानाधिकरण्यघटितपरामर्शस्य कारणत्वमतो न गौरवम् ।

एतेन धूमत्वादिमतीत्यादिना धूमत्वस्य धूमत्वसामानाधिकरण्यापन्नस्य सामानाधिकरण्यसम्बन्धेन धूमत्वविशिष्टस्य वा सामानाधिकरण्यस्य धूमत्वत्वप्रवेशप्रयुक्तगौरवेण विषयतया न जनकतावच्छेदकत्वमित्यपि निरस्तम् ।

[२] नन्वत्र धूमव्यापकवह्निरासभवान् पर्वत इति ज्ञानादनुमितेरलीकतया नानुमित्यापत्तिरिति चेन्न ।

भावः। धूमत्वादिमतीति। **तथाच तस्येति मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्रैवान्वितमिति भावः।**

**ननु साधननिष्ठसामानाधिकरण्यस्य व्याप्तित्वे "पक्षे वह्नी"त्यादिग्रन्थानुपपत्तिस्तदवस्थैव, तथा विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद् गुणेऽपि द्रव्यत्वानुमितिः प्रमा स्यादत आह** तद्वतीति। **तादृशसामानाधिकरण्यवतीत्यर्थः। तथाच तादृश-**

रासभो वह्निव्याप्य इति व्यवहारापत्तावेव जगदीशतात्पर्यात्। नच यद्धर्मावच्छिन्नं व्यापकतावच्छेदकं तद्धर्मावच्छिन्नस्य तादृशव्यवहारप्रयोजकत्वान्नैष दोष इति वाच्यम्। एतदस्वरसेनैव विशिष्टसत्त्वव्यापकेत्यादि दोषान्तरमिति दिक्।

**तथाचेति**। धूमनिष्ठत्वोपादाने चेत्यर्थः। **तत्पद(१)मिति**। तस्य सामानाधिकरण्यं, तस्य व्याप्तिरिति योजना। लक्ष्ये–इतरभेदानुमित्युद्देश्ये, लक्षणे–इतरभेदानुमापके हेतौ, तथाच धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यं स्वेतरभिन्नं धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यादिति फलितम्। अत्र पक्षांशे धूमनिष्ठत्वानुपादाने रासभनिष्ठधूमव्यापकवह्निसामानाधिकरण्यस्य पक्षान्तर्गततया तत्र हेतोरभावेन भागासिद्धिः स्यात्। एवं हेत्वंशे तदनुपादाने रासभनिष्ठधूमव्यापकवह्निसामानाधिकरण्येऽपि तदात्म्येन हेतोः सत्त्वात् तत्र च साध्याभावेन व्यभिचारः स्यादिति।

**परामर्शादिति**। विशिष्टसत्तानिष्ठविशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इति परामर्शादिति भावः।

[१] ननु तादृशद्रव्यत्वसामानाधिकरण्यवैशिष्ट्यावच्छिन्नाधिकरणत्वस्य द्रव्ये एव सत्त्वात्तादृशपरामर्शस्य भ्रमत्वसम्भवेन नाऽनुमितेः प्रमात्वसम्भवः। न च किञ्चिद्धर्मं धर्मितावच्छेदकीकृत्य यत्र वैशिष्ट्यादिकं पतति तत्रैवाऽधिकरणत्वस्य विलक्षणत्वम्, अत एव द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र व्यभिचारवारणाय सत्तापदोपादानं कृतम्, एवं च तादृशसामानाधिकरण्यावच्छिन्नाधिकरणतायाः गुणेपि सत्त्वान्न प्रमात्वहानिरिति वाच्यम्। कूटघटितलक्षणे आधेयतासम्बन्धेन घटावच्छिन्नाभावधारणासम्भवात्, तत्र किञ्चिद्धर्मस्य धर्मितानवच्छेदकत्वेऽपि वैलक्षण्यात्। द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र सत्त्वोपादानं तु समवायेन हेतुलाभायेति चेन्न।

पक्षे साध्यसामानाधिकरण्यविशिष्टहेतुमत्तानिश्चयस्य(२) पक्षे साध्यनिश्चयं विनाऽसम्भवेन साध्यसामानाधिकरण्योपलक्षितहेतुमत्तानिश्चयस्यैवानुमितिजनकत्वस्य वाच्यतया तादृशसामानाधिकरण्योपलक्षितस्य गुणे प्रमापरामर्शसम्भवादिति ध्येयम्। इदमुपलक्षणम्—धूम-

---

(१) तथाच तद्रूपविशिष्टस्य तादृशसामानाधिकरण्यं तद्रूपावच्छिन्नहेतुकानुमित्योपायिकमिति पर्यवसितम्।

(२) नच सामानाधिकरण्यविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वेनैव कारणत्वेनोक्तानुमितेः प्रमात्वसम्भव इति वाच्यम्। अयमालोको धूमो वेति सन्देहे तादृशनिश्चयाऽसम्भवोऽतः साध्यसामानाधिकरण्यावच्छेदकत्वेन हेतुतावच्छेदकस्य व्याप्तित्वमिति ध्येयम्।

**सामानाधिकरण्यविशिष्टं धूमत्वं व्याप्तिः, तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुः, तत्र च नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु धूमत्वत्वेन यतो गौरवमिति भावः। आद्येति। तथाच**

---

त्वादिमति तादृशसामानाधिकरण्यस्य व्याप्तित्वे तादृशसामानाधिकरण्यविशिष्टधूमत्वादेर्व्याप्तित्वमादाय विनिगमनाविरहोऽपि बोध्यः।

**गुणेपि द्रव्यत्वानुमितिः प्रमा स्यादिति।** [१]ननु एतावता यत्र यत्र प्रमापरामर्शजन्यत्वं तत्र तत्र प्रमात्वमित्यापाद्यापादकयोर्व्याप्तिर्लभ्यते तत्र च व्यभिचारः, वह्निव्याप्यधूमवान्पर्वत इति प्रमापरामर्शादपि वह्नित्वेन घटावगाह्यनुमितेरुत्पादात् इति चेन्न।

यत्र प्रमापरामर्शजन्यत्वं तत्र प्रमासजातीयत्वमित्येवाऽऽपाद्यापादकयोर्व्याप्तिः। प्रमासजातीयत्वं च प्रमीयविधेयताविशिष्टविधेयताकत्वम्, वै० स्वावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितोद्देश्यतावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वैतत्रितयसम्बन्धेन। वह्नित्वेन घटावगाह्यनुमितावपि तत्सत्त्वान्न व्यभिचारः। गुणे द्रव्यत्वानुमितिर्न कदापि प्रमा, तत्र प्रमासजातीयत्वविरहात्।

[२] परे तु वह्निव्याप्यधूमवान् पर्वत इति ज्ञाने वह्नित्वेनैव घटो यत्रावगाह्यते तदैव वह्नित्वेन घटावगाह्यनुमितिः, अन्यथा सामग्र्यभावात्तादृशानुमित्यनुपपत्तेः, तथाच तादृशपरामर्शस्याऽप्यप्रमात्वेन न व्यभिचार इति वदन्ति।

[३] केचित्तु आपाद्यापादकव्याप्तौ प्रमात्वं तद्धर्मावच्छिन्नवति तद्धर्मावच्छिन्नप्रकारकत्वमेव, तथाच वह्नित्वेन घटावगाह्यनुमितौ एतादृशप्रमात्वसत्त्वान्न व्यभिचार इति वदन्ति।

**सामानाधिकरण्यविशिष्टमिति।** वै० सामानाधिकरण्यसम्बन्धेन। सामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वे विशेषणतावच्छेदकप्रकारकज्ञानविधया धूमत्वविशेष्यकसाध्यसामानाधिकरण्यप्रकारकज्ञानस्य हेतुत्वमित्याशयेनाह **तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुरिति।** व्यक्तिं विना जातिभानस्याऽसम्भवाद् धूमत्वविशेष्यकसामानाधिकरण्यप्रकारकज्ञानस्यापि धूमो वह्निसमानाधिकरण इति ज्ञान एव पर्यवसानम्। धूमत्वविशिष्टे सामानाधिकरण्यस्य प्रकारतया भाने सामग्रीसमवधानेन धूमत्वेऽपि सामानाधिकरण्यसम्बन्धेन सामानाधिकरण्यस्य प्रकारतया भानमिति भावः। **तत्प्रकारिकैवेति** एवकारेण धूमत्वावच्छिन्ने तादृशसामानाधिकरण्यप्रकारकत्वव्यवच्छेदः। नन्वेवं तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवान् पर्वत इति ज्ञानस्य कारणत्वं पर्यवसितम्। तन्न युज्यते। लाघवेन तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति ज्ञानस्यैव कारणत्वौचित्यात्। सामानाधिकरण्यविशिष्टधूमत्ववद्वानितिज्ञानस्य कारणत्वन्तु धूमत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववद्ह्रदादिरूपस्वरूपासिद्धिज्ञानस्य प्रतिबन्धकत्वानुपपत्त्याऽसम्भवि, हेतुतावच्छेदकावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदककोटौ निवेशादेव न गुणे द्रव्यत्वानुमितेः प्रमात्वप्रसङ्गः। सामान्यप्रत्यासत्त्यभावेऽपि तादृशसामानाधिकरण्योपलक्षितधूमत्वस्य स्मृतस्य पर्वतीयधूमे विशेषणत्वसम्भवात्। नचैवं विरोधस्य हेत्वाभासतानुपपत्तिः। अनुमितावेव तस्य विरोधित्वात् इत्याशङ्कामिष्टापत्त्या परिहरति **तत्र च नीलघटत्वेत्यादिना। स्वरूपत एव**

भावः। धूमत्वादिमतीति। **तथाच तस्येति मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्रैवान्वितमिति भावः।**

**ननु साधननिष्ठसामानाधिकरण्यस्य व्याप्तित्वे "पक्षे वह्नी"त्यादिग्रन्थानुपपत्तिस्तदवस्थैव, तथा विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद् गुणेऽपि द्रव्यत्वानुमितिः प्रमा स्यादत आह** तद्वतीति। **तादृशसामानाधिकरण्यवतीत्यर्थः। तथाच तादृश-**

रासभो वह्निव्याप्य इति व्यवहारापत्तावेव जगदीशतात्पर्यात्। नच यद्धर्मावच्छिन्नं व्यापकतावच्छेदकं तद्धर्मावच्छिन्नस्य तादृशव्यवहारप्रयोजकत्वान्नैष दोष इति वाच्यम्। एतदस्वरसेनैव विशिष्टसत्त्वव्यापकेत्यादि दोषान्तरमिति दिक्।

**तथाचेति**। धूमनिष्ठत्वोपादाने चेत्यर्थः। **तत्पद(१)मिति**। तस्य सामानाधिकरण्यं, तस्य व्याप्तिरिति योजना। लक्ष्ये–इतरभेदानुमित्युद्देश्ये, लक्षणे–इतरभेदानुमापके हेतौ, तथाच धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यं स्वेतरभिन्नं धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यादिति फलितम्। अत्र पक्षांशे धूमनिष्ठत्वानुपादाने रासभनिष्ठधूमव्यापकवह्निसामानाधिकरण्यस्य पक्षान्तर्गततया तत्र हेतोरभावेन भागासिद्धिः स्यात्। एवं हेत्वंशे तदनुपादाने रासभनिष्ठधूमव्यापकवह्निसामानाधिकरण्येऽपि तदात्म्येन हेतोः सत्त्वात् तत्र च साध्याभावेन व्यभिचारः स्यादिति।

**परामर्शादिति**। विशिष्टसत्तानिष्ठविशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इति परामर्शादिति भावः।

[१] ननु तादृशद्रव्यत्वसामानाधिकरण्यवैशिष्ट्यावच्छिन्नाधिकरणत्वस्य द्रव्ये एव सत्त्वात्तादृशपरामर्शस्य भ्रमत्वसम्भवेन नाऽनुमितेः प्रमात्वसम्भवः। न च किञ्चिद्धर्मं धर्मितावच्छेदकीकृत्य यत्र वैशिष्ट्यादिकं पतति तत्रैवाऽधिकरणत्वस्य विलक्षणत्वम्, अत एव द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र व्यभिचारवारणाय सत्तापदोपादानं कृतम्, एवं च तादृशसामानाधिकरण्यावच्छिन्नाधिकरणतायाः गुणेपि सत्त्वान्न प्रमात्वहानिरिति वाच्यम्। कूटघटितलक्षणे आधेयतासम्बन्धेन घटावच्छिन्नाभावधारणासम्भवात्, तत्र किञ्चिद्धर्मस्य धर्मितानवच्छेदकत्वेऽपि वैलक्षण्यात्। द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र सत्त्वोपादानं तु समवायेन हेतुलाभायेति चेन्न।

पक्षे साध्यसामानाधिकरण्यविशिष्टहेतुमत्तानिश्चयस्य(२) पक्षे साध्यनिश्चयं विनाऽसम्भवेन साध्यसामानाधिकरण्योपलक्षितहेतुमत्तानिश्चयस्यैवानुमितिजनकत्वस्य वाच्यतया तादृशसामानाधिकरण्योपलक्षितस्य गुणे प्रमापरामर्शसम्भवादिति ध्येयम्। इदमुपलक्षणम्—धूम-

(१) तथाच तद्रूपविशिष्टस्य तादृशसामानाधिकरण्यं तद्रूपावच्छिन्नहेतुकानुमित्यौपयिकमिति पर्यवसितम्।

(२) नच सामानाधिकरण्यविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वेनैव कारणत्वेनोक्तानुमितेः प्रमात्वसम्भव इति वाच्यम्। अयमालोको धूमो वेति सन्देहे तादृशनिश्चयाऽसम्भवोऽतः साध्यसामानाधिकरण्यविषयतावच्छेदकत्वेन हेतुतावच्छेदकस्य व्याप्तित्वमिति ध्येयम्।

**स्वामानाधिकरण्यविशिष्टं धूमत्वं व्याप्तिः, तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुः, तत्र च नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु धूमत्वत्वेन यतो गौरवमिति भावः। आद्येति। तथाच**

स्वादिमति तादृशसामानाधिकरण्यस्य व्याप्तित्वे तादृशसामानाधिकरण्यविशिष्टधूमत्वादेर्व्याप्तित्वमादाय विनिगमनाविरहोऽपि बोध्यः ।

**गुणेपि द्रव्यत्वानुमितिः प्रमा स्यादिति** । [१]ननु एतावता यत्र यत्र प्रमापरामर्शजन्यत्वं तत्र तत्र प्रमात्वमित्यापाद्यापादकयोर्व्याप्तिर्लभ्यते तत्र च व्यभिचारः, वह्निव्याप्यधूमवान्पर्वत इति प्रमापरामर्शादपि वह्नित्वेन घटावगाह्यनुमितेरुत्पादात् इति चेन्न ।

यत्र प्रमापरामर्शजन्यत्वं तत्र प्रमासजातीयत्वमित्येवाऽऽपाद्यापादकयोर्व्याप्तिः । प्रमासजातीयत्वं च प्रमीयविधेयताविशिष्टविधेयताकत्वम् , वै० स्वावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितोद्देश्यतावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वैतत्त्रितयसम्बन्धेन । वह्नित्वेन घटावगाह्यनुमितावपि तत्सत्त्वान्न व्यभिचारः । गुणे द्रव्यत्वानुमितिर्न कदापि प्रमा, तत्र प्रमासजातीयत्वविरहात् ।

[२] परे तु वह्निव्याप्यधूमवान् पर्वत इति ज्ञाने वह्नित्वेनैव घटो यद्यवगाह्येत तदैव वह्नित्वेन घटावगाह्यनुमितिः, अन्यथा सामग्र्यभावात्तादृशानुमित्यनुपपत्तेः, तथाच तादृशपरामर्शस्याऽप्यप्रमात्वेन न व्यभिचार इति वदन्ति ।

[३] केचित्तु आपाद्यापादकव्याप्तौ प्रमात्वं तद्धर्मावच्छिन्नवति तद्धर्मावच्छिन्नप्रकारकत्वमेव, तथाच वह्नित्वेन घटावगाह्यनुमितौ एतादृशप्रमात्वसत्त्वान्न व्यभिचार इति वदन्ति ।

**सामानाधिकरण्यविशिष्टमिति** । वै० सामानाधिकरण्यसम्बन्धेन । सामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वे विशेषणतावच्छेदकप्रकारकज्ञानविधया धूमत्वविशेष्यकसाध्यसामानाधिकरण्यप्रकारकज्ञानस्य हेतुत्वमित्याशयेनाह **तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुरिति** । व्यक्तिं विना जातिभानस्याऽसम्भवाद् धूमत्वविशेष्यकसामानाधिकरण्यप्रकारकज्ञानस्यापि धूमो वह्निसमानाधिकरण इति ज्ञान एव पर्यवसानम् । धूमत्वविशिष्टे सामानाधिकरण्यस्य प्रकारतया भाने सामग्रीसमवधानेन धूमत्वेऽपि सामानाधिकरण्यसम्बन्धेन सामानाधिकरण्यस्य प्रकारतया भानमिति भावः। **तत्प्रकारिकैवेति** एवकारेण धूमत्वावच्छिन्ने तादृशसामानाधिकरण्यप्रकारकत्वव्यवच्छेदः। नन्वेवं तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवान् पर्वत इति ज्ञानस्य कारणत्वं पर्यवसितम् । तन्न युज्यते । लाघवेन तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति ज्ञानस्यैव कारणत्वौचित्यात् । सामानाधिकरण्यविशिष्टधूमत्ववद्वानितिज्ञानस्य कारणत्वन्तु धूमत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववद्ह्रदादिरूपस्वरूपासिद्धिज्ञानस्य प्रतिबन्धकत्वानुपपत्त्याऽसम्भवि, हेतुतावच्छेदकावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदककोटौ निवेशादेव न गुणे द्रव्यत्वानुमितेः प्रमात्वप्रसङ्गः । सामान्यप्रत्यासत्त्यभावेऽपि तादृशसामानाधिकरण्योपलक्षितधूमत्वस्य स्मृतस्य पर्वतीयधूमे विशेषणत्वसम्भवात् । नचैवं विरोधस्य हेत्वाभासतानुपपत्तिः । अनुमितावेव तस्य विरोधित्वात् इत्याशङ्कामिष्टापत्त्या परिहरति **तत्र च नीलघटत्वेत्यादिना** । **स्वरूपत एव**

तामुपादायैव पर्वतीयवह्निधूमयोरसन्निकर्षात् तयोः कथं व्याप्तिग्रह इति परामर्शीयपूर्वपक्षग्रन्थ इति भावः। द्वितीयेति। तथाच तामभिप्रेत्यैव "एकैव हि सा व्याप्तिरि"ति परामर्शीयसिद्धान्तग्रन्थ इति भावः। यत्र एकमेव साध्याधिकरणं तत्र एतद्रूपवान् एतद्रसादित्यादौ आद्याऽव्यभिन्नैव, यत्र च द्रव्यत्वादौ साध्ये रूपत्वव्याप्यजातिमतो हेतुत्वं तत्र हेतुतावच्छेदकी-भूतनीलत्वादिजातीनां नानात्वेन द्वितीयापि कचिद्भिन्नैवेति मन्तव्यम्।

धूमत्वस्य भानमिति। तथाच नीलो घट इति बुद्धौ पारतन्त्र्येण नीलविशिष्टघटत्वस्य प्रकारत्वेऽपि यथा घटत्वस्य स्वरूपतो भानं तथा धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानेऽपि सामानाधिकरण्यसम्बन्धेन तादृशसामानाधिकरण्यविशिष्टधूमत्वस्य स्वरूपत एव भानमित्याशयः(१)।

---

(१) [१] अथात्र धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानत्वया स्वरूपसम्बन्धावच्छिन्नहेतु-व्यापकसाध्यसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यता तन्निरूपितावच्छेदकत्वाव-च्छिन्नसामानाधिकरण्यसम्बन्धावच्छिन्ननिरुक्तसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितधूमत्वनिष्ठानिरवच्छि-न्नविशेष्यता तदवच्छिन्नावच्छेदकतानिरूपितप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन का-रणत्वं ध्वनितम्, तच्च न सम्भवति सामानाधिकरण्यं हि धूमांशे भासमानं सद् धूमत्वांशे भासते, एवं च पर्वतीयधूमे तादृशसामानाधिकरण्यग्रहासम्भवात्। न वा तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्वान् पर्वत इति ज्ञानस्य कारणत्वं सम्भवति, धूमत्वस्य स्वरूपतो भानाऽसम्भवादिति चेत्।

अत्र केचित्—स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन सामानाधिकरण्यं धूमांशे भासमानं सद् धूमत्वांशे समवायस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वघटितसामानाधिकरण्यसम्बन्धेन भासते न तु स्वरूपसमवायघटितसामानाधिकरण्यसम्बन्धेन येन तादृशी शंका स्यात्।

[२] नन्वेवं गोत्वासामानाधिकरण्यनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिताऽश्वत्वत्वावच्छिन्न-विशेष्यताशालिज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वानुपपत्तिः, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वप्रकारता-शालिज्ञानं प्रति स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशसामानाधिकरण्याभावरूपविरोधिज्ञानस्य प्रति-बन्धकत्वाभावात्, नहि अन्यसम्बन्धावच्छिन्नप्रकारताशालिज्ञानं प्रति अन्यसम्बन्धावच्छिन्नप्रतियोगिताका-भावप्रकारताकनिश्चयस्य प्रतिबन्धकत्वमिति चेन्न। प्राचां मते तद्धर्मावच्छिन्नहेतुकानुमितौ तद्धर्मावच्छिन्न-धर्मिकविरोधनिश्चयस्य प्रतिबन्धकत्वात्।

[३] केचित्तु धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानस्य लाघवात् सामाना-धिकरण्यसम्बन्धावच्छिन्नतादृशसामानाधिकरण्यप्रकारतानिरूपितधूमत्वनिष्ठानिरवच्छिन्नविशेष्यत्वावच्छिन्नाव-च्छेदकताकप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्वम्, पूर्वशंकावारणन्तु वन्हि-सामानाधिकरण्यत्वेन सामान्यलक्षणया सकलवन्हिसमानाधिकरण्योपस्थितिसम्भवेन पर्वतीयवन्हि-सामानाधिकरण्यस्यापि ज्ञानेन तस्य च पर्वतीयधूमेऽन्वये बाधकाभावात्। न चैवं 'महानसीयवन्हिसामाना-धिकरण्यस्य स्मृतस्ये'त्यादिग्रन्थासंगतिरिति वाच्यम्। सामान्यलक्षणामस्वीकृत्य तदुक्तेः। नचैवं तादृश-सामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वाभ्युपगमो निरर्थक इति वाच्यम्। पक्षधर्मांशे विषयतयाऽनुमि-तिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया तादृशविशिष्टधूमत्वस्यैव व्याप्तिपदार्थत्वादित्याहुः।

[४] अपरे तु धूमव्यापकवह्निसमानाधिकरणवृत्तिमद्धूमवान् पर्वत इति ज्ञानमेव हेतुः नीलघटत्वप्र-कारकबुद्धौ घटत्वस्येवेत्यत्र च नीलरूपवद्वृत्तिमानिति ज्ञानं दृष्टान्त इति वदन्ति।

[५] नन्वेवं धूमो वह्नेर्व्याप्य इत्यादावन्वयबोधानुपपत्तिः। तथाहि विषयतया अनुमितिजनकतावच्छे-दकस्यैव व्याप्तिपदार्थत्वेन [illegible] सम्भवति प्राचीनमतदण्डो

अयं कपिसंयोगी एतद्वृक्षत्वादिसङ्ग्रहायासमानाधिकरणान्तम् ।

कपिसंयोगिन्येतत्पदार्थस्य साध्यताभ्रमनिरासार्थमयमिति पक्षनिर्देशः

साध्यताभ्रमनिरासार्थमिति । अयमित्यस्यानुपादाने कपिसंयोगी पक्षः एत

रक्तदण्ड इत्यादाविव निराकाङ्क्षतया धूमत्वविशिष्टे विशिष्टधूमत्वान्वये निराकाङ्क्षत्वात् । अथ तत्र तादृशसामानाधिकरण्यमेवाऽऽप्धात्वर्थो, न तु सामानाधिकरण्यविशिष्टधूमत्वमिति नान्वयानुपपत्तिः, तादृशसामानाधिकरण्यमात्रस्यैवान्वयात् । न च तत्रानुमित्यनुपपत्तिः, निरुक्तव्याप्तिप्रकारकज्ञानाभावादिति वाच्यम् । शाब्दबोधानन्तरं निरुक्तव्याप्तेर्मानसाभ्युपगमेनाऽनुमित्युपपत्तेः । यद्वा विधेयकोटावधिकभानेन निराकाङ्क्षत्वमिति नवीनमताश्रयणान्न दोषः । तन्मते दण्डो रक्तदण्ड इत्यादाविवात्रापि अन्वयबोधसम्भवादिति चेन्न । तथाप्याप्धातोः साध्यसाधनतावच्छेदकान्तर्भावेण शक्तौ नानार्थतापत्तिः, तदनन्तर्भावेण शक्तौ च तद्घटितव्याप्त्यवगमबोधानुपपत्तिरिति दोषस्य दुर्वारत्वादिति चेत् ।

मैवम् । तदन्तर्भावेणैव शक्तेः । न च नानार्थतापत्तिः, समभिव्याहृतसाध्यसाधनवाचकपदोपस्थाप्यतावच्छेदकत्वस्योपलक्षणतया तदनुगमकतया अनुगततद्रूपेणानुगतसाध्यसाधनतावच्छेदकघटितानुगतसामानाधिकरण्यत्वेन सामानाधिकरण्यस्य शक्यतावच्छेदकतया शक्यतावच्छेदकनानात्वप्रयुक्तनानार्थत्वासम्भवात् ।

यद्वा तदादिपदवत् बुद्धिस्थत्वमेव शक्यतावच्छेदकम् , बुद्धिविशेषविषयतावच्छेदकत्वं वोपलक्षणतया शक्यतावच्छेदकानुगमकम् । वस्तुतस्तु नानार्थत्वे इष्टापत्तिरेव, व्याप्तिपदादनुगतरूपेण बोधाभावेनानुगतशक्तौ मानाभावात् । धातूनामनेकार्थत्वस्य स्वरसतयाऽऽप्धातोर्नानार्थत्वे बाधकाभावाच्च । साध्यसाधनवाचकपदविशेषसमभिव्याहारस्य नियामकत्वं च सर्वपक्षेऽप्यविशिष्टम्, एवं च धूमो वह्नेर्व्याप्य इत्यादौ षष्ठ्यर्थो निरूपकत्वं निरूपितत्वं वा, तस्य चाप्धात्वर्थेऽन्वयः, कर्मकृदर्थश्चाश्रयस्तस्य धूमेऽन्वयस्तथाच धूमो वह्निनिरूपितव्याप्त्याश्रय इत्याद्यन्वयबोधः । वह्निर्धूमस्य व्यापक इत्यादौ च षष्ठ्यर्थो वृत्तित्वं, कर्तृकृदर्थश्च निरूपकत्वम्, शेषम् पूर्ववत्, तथाच वह्निर्धूमनिष्ठव्याप्तिनिरूपक इत्याद्यन्वयबोधः ।

नवीनास्तु अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थत्वमिति नियमे मानाभावेन निरुक्तव्याप्तेरनुमितिजनकपक्षधर्मताज्ञानप्रकारत्वमेव, न व्याप्तिपदार्थत्वमस्याप्धातोर्व्यापकतामात्रमेवार्थः लाघवेन धातोर्व्यापकतामात्रार्थकत्वात् , भावविहितक्तिन्प्रत्ययस्य च निरर्थकत्वमेव, एवं च धूमस्य व्यापको वह्निरित्यादौ तत्तद्धेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मरूपव्यापकता हेतुवाचकधूमादिपदसमभिव्याहारेण धातुना प्रत्याय्यते, कर्तृकृता चाश्रयरूपः कर्ता, अन्यलभ्यधूमादिकमनन्तर्भाव्यैव व्याप्धातोः शक्तिः, धूमादिपदोत्तरकर्मविहितषष्ठ्यादेः प्रतियोगित्वरूपं सामानाधिकरण्यान्वयि कर्मत्वमर्थः । न च धात्वर्थव्यापकतायां धूमादेरनन्तर्भावे समानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावस्य वह्नित्वादौ बाधः, तादृशावच्छेदकत्वप्रतियोगिकाभावस्य च व्याप्यतानवच्छेदकसाधारण्यमिति वाच्यम् । सामानाधिकरण्यादिपदार्थेषु विशकलितेषु शक्तिस्वीकारेण धूमप्रतियोगिकत्वादेः सामानाधिकरण्यादावन्वयेनावच्छेदकत्वपर्यन्तानां शक्तिमिलितभस्य धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नस्य तदवच्छिन्नप्रतियोगिताकत्वसंबन्धेन शक्यान्तराभावेऽन्वयेन धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावलाभेनादोषात् । तथाच धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभाववद्धर्माश्रयो वह्निरित्याकारकोऽन्वयबोधः । वह्नेर्व्याप्यो धूम इत्यादौ च कृतः प्रतियोगिरूपं कर्मार्थः, प्रतियोगितायां च धात्वर्थकूटप्रविष्टसामानाधिकरण्यस्य निरूपकतया विशेषणत्वेन तत्रावच्छेदकत्वस्य तत्राभावान्तरस्य तत्र धर्मस्य तत्र षष्ठ्यर्थाधेयत्वस्य तत्र वह्न्यादेर्विशेषणत्वेनाऽन्वयः, कर्तृप्रत्ययस्थले यादृशविशेषणविशेष्यभावेनान्वयबोधः, कर्मप्रत्ययस्थले तद्विपरीतविशेषणविशेष्यभावेनान्वयबोधस्य व्युत्पत्तिसिद्धत्वात् । तथाच वह्निवृत्तिधर्मनिष्ठाभावप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगिताकाभाववृत्तिसामानाधिकरण्यप्रतियोगी धूम इत्याद्याकारकोऽन्वयबोध इति प्राहुः ।

यत्तु-इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्, संयोगस्य शाखा-द्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाववृत्तावविरोधात् ।

साम्प्रदायिकमते संयोगसामान्याभावस्य द्रव्येऽभावात् कपीति । वृक्ष-मात्रे कपिसंयोगाभावादेतदिति । न चाभावे हेतुसामानाधिकरण्यस्यैव

दिति साध्यमिति भ्रमस्य, वृक्षत्वस्य व्यभिचारितयाऽव्याप्तेरनुपपत्त्या एतद्वृक्षत्वमेव हेतुः, तथाच कपिसंयोगीत्येव साध्यमित्येतावत्पर्य्यालोचनयैव निवृत्तिः, ततः साध्यवाचकपदत्वनि-र्णयः । अयमित्यस्योपादाने तु संमुखत एव तन्निर्णय इत्याशयः ।

ननूक्तरीत्यैव भ्रमनिराससम्भवेन पक्षनिर्देशोऽनावश्यकः, अन्यथाऽयमित्यस्योपादाने-ऽपि उद्देश्यविधेयभावस्थले समानलिङ्गकत्वस्यातन्त्रत्वात् वृक्षा नौका भवतीतिवद् अयं क-पिसंयोगी एतत्वृक्षत्वादिति भ्रमनिरासासम्भवादिति चेन्न । इदमेतदोः प्रत्यक्षविषयत्वाव च्छिन्नवाचकतया नीलघटो घट इतिवद् अयं कपिसंयोगी एतदित्यत्रापि शाब्दबोधो न स्यात्, उद्देश्यकोटावेवाऽधिकावगाहित्वादिति ध्येयम् ।

दीधितौ-असमानाधिकरणान्तम् प्रतियोग्यसामानाधिकरणमिति भावः । तथाच हेत्वधिकरणे एतद्वृक्षे कपिसंयोगाभावस्य प्रतियोगिसमानाधिकरणतया नाव्याप्तिः । हेत्वधिक रणनिरूपितवृत्तितायां निरवच्छिन्नत्वनिवेशादेवोक्ताव्याप्तिवारणे गुरुतरप्रतियोग्यसामानाधि करण्यनिवेशोऽनुचित इत्याशङ्कते नचेति । अग्रे समाधास्यमानत्वादिति । तथाच प्रतियोगिवैयधिकरण्यस्य वैयर्थ्यमेवेति सूचितम् ।

केचित्तु वह्नेर्व्याप्यो धूम इत्यादौ धूमपदोत्तरपञ्चम्याः प्रतियोगित्वमर्थः, मुख्यविशेष्यतया प्रतियोगित्व-विशेषणतया च धूमस्य द्विधाऽन्वयः, धातोः समानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽभावे च शक्तिद्वयम्, प्रथमप्रविष्टसामानाधिकरण्ये प्रतियोगित्वरूपप्रथमाया अन्वयः । स्वप्रतियोगिकसामानाधिकरण्य-वदभावप्रतियोगितावच्छेदकत्वस्य च तादृशावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेनान्वयः, तादृशाभाव एव वह्न्यन्वितस्य षष्ठ्यर्थस्याश्रितवृत्तित्वात्मकपरंपरासम्बन्धस्यान्वयः, तादृशविशेष्यतया च धूम-न्वयः, तथाच वह्न्याश्रितवृत्तिस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनिरूपको धूम इत्याद्याका-रकोऽन्वयबोधः । धूमस्य च स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनिरूपकत्वं प्रतियोगितावच्छे दकत्वेन, धूमस्य व्यापको वह्निरित्यादौ च धूमपदोत्तरषष्ठ्याः प्रतियोगित्वमर्थः, धूमस्य च तद्विशेषणतये-वान्वयः, तस्य च धात्वर्थैकदेशसामानाधिकरण्येऽन्वयः । धात्वर्थश्चोक्तरीत्या तादृशाभाव एव, तादृशाभाववि शेष्यतया च कर्तृकृदर्थाश्रयैकदेशस्याश्रयत्वस्यान्वयः । आश्रयत्वं चोक्तपरम्पराविपरीतपरंपरासम्बन्धेन बोध्यम्, तस्य च वह्नावन्वयः, तथा च धूमप्रतियोगिकसामानाधिकरण्यवदभावप्रतियोगितावच्छेदकत्वत्वा वच्छिन्नप्रतियोगिताकाभावाश्रयाश्रयो वह्निरित्याद्याकारकोऽन्वयबोधः । न च वह्निव्याप्यधूमरूपमित्यादौ धूम-पदोत्तरं प्रथमाविरहेण सामानाधिकरण्ये धूमीयत्वालाभप्रसङ्ग इति वाच्यम् । तत्र सामानाधिकरण्ये धूमस्यैव प्रतियोगितयाऽन्वयाभ्युपगमात् । न च नामार्थधात्वर्थयोर्भेदेनान्वयासम्भव इति वाच्यम् । नामार्थैकदेशधात्वर्थैक-देशयोः तथान्वयाङ्गीकारात्, तत्पुरुषे पूर्वपदस्य सम्बन्धिलाक्षणिकत्वनियमेन प्रकृते धूमपदस्य धूमसम्बन्धि-लाक्षणिकतया धूमस्य नामार्थैकदेशत्वात् । नचैवं धूमसम्बन्धिलाक्षणिकधूमपदार्थैकदेशस्य धूमस्य धात्वर्थै-कदेशसामानाधिकरण्ये विशेषणतयाऽन्वये व्युत्पत्तिविरोधः एकविशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्व-यबोधस्याऽव्युत्पन्नत्वादिति वाच्यम् । व्युत्पत्तिवैचित्र्येण तथान्वयबोधाङ्गीकारेणादोषादित्याहुरिति संक्षेपः ।

हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपस्य निवेशादुक्ताव्याप्तिव्युदाससम्भवात् प्रतिवैयधिकरण्यनिवेशो मूलकृतामनुचित इति वाच्यम् । अग्रे समाधास्यमानत्वादिति (१)भावः ।

न च विशिष्टसत्ताभाववान् गुणत्वादित्यादौ साध्याभावस्य सत्तारूपतया गुणे निरवच्छिन्नवृत्तित्वेन लक्षणघटकत्वेन तमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यप्रवेश आवश्यक इति वाच्यम् । साध्याभावस्य द्रव्यत्वरूपत्वकल्पने तस्य हेत्वधिकरणावृत्तित्वात् । न चाभावस्य कालिकेन योऽभावस्तस्य स्वरूपेण साध्यतायां गगनत्वहेतावव्याप्तिः साध्यभावस्याऽभावस्वरूपत्वेन हेत्वधिकरणे वर्त्तमानतया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् । हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकतया साध्यतावच्छेदके विवक्षणेनैवाऽव्याप्तिवारणसम्भवात् साध्याभावस्य जन्य एव सत्त्वेन साध्याभावत्वरूपानुयोगितायां तादृशवृत्तितावच्छेदकत्वस्यासत्त्वेन लक्षणघटकत्वात् । न च धूमाभावत्वाभावसाध्यकवह्निहेतौ साध्याभावस्य धूमाभावत्वरूपतया तत्र च हेत्वधिकरणायोगोलकनिरूपितवृत्तितावच्छेदकत्वसत्त्वात् धूमाभावत्वनिरूपितत्वस्य धूमाभावत्वाभावनिष्ठप्रतियोगितायां सत्त्वादव्याप्तिरिति वाच्यम् । तादृशानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्०, वै० स्वनिरूपितत्व–स्वाश्रयनिरूपितत्वोभयसम्बन्धेन, तथाच साध्यनिष्ठप्रतियोगितायां धूमाभावत्वरूपानुयोगितानिरूपितत्वसत्त्वेऽपि स्वाश्रयधूमाभावनिरूपितत्वविरहात् साध्याभावस्य लक्षणाघटकत्वेनाऽव्याप्त्यभावात् । न च धूमाभावत्वधूमाभावान्यतरस्य कालिकेनाभावस्य स्वरूपेण साध्यतायामात्मत्वहेतावव्याप्तिः साध्यनिष्ठप्रतियोगितायास्तथात्वादिति वाच्यम् । पूर्वोक्तसम्बन्धमपहाय स्वनिरूपितत्व–स्वभिन्नानुयोगितानिरूपितत्वोभयसम्बन्धेनानु

---

(१) न च वन्हिमान् धूमादित्यादौ अव्याप्तिः हेत्वधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितावच्छेदकीभूतानुयोगितया वह्न्यभावे सत्त्वाद्, निरवच्छिन्नवृत्तित्वस्वीकारे तु कालिकसम्बन्धावच्छिन्नगोत्वाभावस्य स्वरूपसम्बन्धेन साध्यत्वे गोत्वादिहेतावव्याप्तिः गोत्वनिष्ठसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नवृत्तितावच्छेदकत्वस्य साध्याभावत्वे सत्त्वादिति वाच्यम् । साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन हेत्वधिकरणनिरूपितवृत्तितायां निवेशनीयत्वात् । न च तथापि समवायसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य साध्यतायां धूमादिहेतावव्याप्तिः, वन्हित्वस्वरूपसाध्याभावस्य स्वीयसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावरूपप्रतियोगिमत्ताबुद्धिविरोधिताघटकसंयोगसम्बन्धावच्छिन्नायाः पर्वतनिरूपितवृत्तितायाः अवच्छेदकत्वस्य साध्याभावत्वे सत्त्वात्, एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगगनाभावाभावस्य स्वरूपसम्बन्धेन साध्यत्वे आत्मत्वहेतावव्याप्तिश्च, हेतुसमानाधिकरणस्य पूर्वक्षणवृत्तित्वविशिष्टगगनाभावस्याऽभावरूपप्रतियोगिमत्ताबुद्धिविरोधिताघटकस्वरूपसम्बन्धावच्छिन्नाऽऽत्मनिरूपितवृत्तितावच्छेदकीभूतगगनाभावत्वनिरूपितप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् । स्वीयप्रतियोगिताश्रयवत्ताबुद्धिविरोधिताघटकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वमभावत्वे तत्प्रतियोगितानवच्छेदकत्वञ्च साध्यतावच्छेदके निवेशनीयमतो न प्रागुक्तदोषावकाशः । नच तथापि घटवृत्तिवृत्तिअनुयोगित्वाभाववान् घटत्वादित्यादौ घटवृत्तिवृत्तिअनुयोगित्वाभावस्य घटवृत्तिवृत्तिअनुयोगितास्वरूपतया तस्याश्च हेतुमद्वृत्तितानवच्छेदकतया तन्निरूपितप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् । हेतुमद्वृत्तितानवच्छेदकीभूतानुयोगिताविशिष्टान्यप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् । वै० स्वनिरूपितत्वस्वाश्रयनिरूपितत्वोभयसम्बन्धेनेति विभावनीयम् । अधिकमग्रे वक्ष्यते ।

तत्र च अतिन्द्रियस्य संयोगस्यसत्वात् परितः प्रतियोग्युपलब्धेर्दोषाद्वा

तत्–असमानाधिकरणान्तम् । ननु शाखामूलादिसर्वावयवावच्छेदेन सर्वत्र द्रव्ये गगनादिसंयोगस्य सत्त्वात्कुतस्तत्सामान्याभावस्य द्रव्ये सम्भव इत्यत आह संयोगस्येति । शाखाद्यवच्छेदेन तत्तत्संयोगसत्त्वेऽपि वृक्षत्वावच्छेदेन कस्याश्चिदपि संयोगव्यक्तेरसत्त्वात्तदवच्छेदेनैव संयोगसामान्याभावसम्भवः, अवच्छेदकभेदेनैकत्र भावाभावयोः समावेशादिति भावः ।

नन्वेवं वृक्षे संयोगसामान्याभावस्य सत्त्वे कुतो नाध्यक्षमित्यत आह तत्र चेति । तत्र संयोगसामान्याभावे । सत्त्वादित्यस्य प्रतियोगितासम्बन्धेनेत्यादिः, तथाच संयोगसामान्याभावस्य अतीन्द्रियप्रतियोगिकत्वान्नाध्यक्षमिति । ननु प्रतियोगितावच्छेदकाविशिष्टस्य यत्किञ्चित्प्रतियोगिनो योग्यत्वं अत्यन्ताभावग्रहे तन्त्रं नतु योग्यमात्रप्रतियोगिकत्वम् , अन्यथा गुणेऽपि संयोगसामान्याभावस्य तादृशप्रत्यक्षं न स्यादत आह परित इति । परितः–स

योगिताविशिष्टप्रतियोगितया निवेशेनैव तद्वारणात् । वस्तुतस्तु हेत्वधिकरणवृत्तित्वं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नं भवति तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके विवक्षणे सार्वदोषाणामनवकाशः, तथाच विशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ने न गुणनिरूपितवृत्तित्वमिति । अस्य निवेशस्तु–हेत्वधिकरणनिरूपितवृत्तितानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मभिन्नत्वं साध्यतावच्छेदके विवक्षणीयम् । अनुगमस्तु–हेत्वधिकरणवृत्तितावृत्तिधर्मभिन्नं यत्साध्यतावच्छेदकमित्यादि । वृत्तितावृत्तित्वं च स्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वसम्बन्धेनेति ।

दीधितौ यत्त्विति । अस्यायमभिप्रायः । संयोगसामान्याभावो वृक्षावृत्तिः प्रतियोग्यधिकरणावृत्तित्वादित्यनुमानात्संयोगसामान्याभावस्य हेत्वधिकरणावृत्तित्वेन लक्षणाऽघटकत्वात्कुतोऽव्याप्तिरित्याशंक्य पूर्वानुमाने स्वरूपासिद्धिं दर्शयति संयोगस्येत्यादिना । तथाच संयोगसामान्याभावः प्रतियोग्यधिकरणवृत्तिः एककालावच्छेदेनैकदेशावच्छेद्यप्रतियोग्यधिकरणवृत्तिताशून्यत्वादित्यनुमानपरोऽयं ग्रन्थः ।

गगनादिसंयोगस्येति । यत्र च द्रव्ये यदवयवावच्छेदेन च न संयोगान्तरस्य सम्भवस्तत्रापि तदवच्छेदेनापि च गगनादिसंयोगस्यैव सम्भव इति सूचयितुम्—संयोगस्येत्यत्र एकत्वमविवक्षितम् , तत्तदवच्छेदेन तत्तत्संयोगानां सत्त्वस्यैव विवक्षितत्वात् ।

प्रतियोगितावच्छेदकविशिष्टस्येति । अत्यन्ताभावप्रत्यक्षे प्रतियोगितावच्छेदकस्य तद्विशिष्टस्य योग्यत्वं कारणम् , तेन गुरुत्ववान्नास्ति पिशाचवद्घटो नास्ति शब्दवान्नास्तीत्याद्यभावानां न प्रत्यक्षत्वापत्तिः । अन्यथा—प्रतियोगिमात्रे योग्यतायास्तन्त्रत्वे । तादृशप्रत्यक्षं न स्यादिति । यावत्प्रतियोगिनो योग्यत्वाभावेनाऽनुपलब्धेर्योग्यत्वाभावात् । तथाच यत्किञ्चित्प्रतियोगिनो योग्यतायास्तन्त्रत्वे वृक्षे संयोगो नेत्याकारकप्रत्यक्षापत्तिः सुदृढैवेति

वृक्षे न संयोग इत्यादि नाध्यक्षमिति, तत्र द्रव्ये संयोगसामान्याभावे मा-
नाभावात् ।

र्वावयवावच्छेदेन प्रतियोगिग्रहात्मकदोषाद्वा इत्यर्थः । नचैवं प्रतियोगिग्रहो
त्पत्तिदशायां तत्प्रत्यक्षं दुर्वारम् । प्रतियोग्युपलम्भकसामग्र्या एव दोष

भावः । ननु वृक्षत्वावच्छेदेन संयोगसामान्याभावप्रत्यक्षं प्रति शाखाद्यवच्छेदेन प्रतियोगिम
त्ताज्ञानस्याऽप्रतिबन्धकत्वात्कुतो "वृक्षे न संयोगः" इत्याकारकं नाध्यक्षमित्यत आह दो-
षादिति । दोषविधया(१) प्रतिबन्धकत्वादित्यर्थः । नन्वत्र किमापाद्यम्, कश्चापादकः ?
यदि च द्रव्यत्वावच्छिन्नविशेष्यकसंयोगाभावप्रकारकलौकिकप्रत्यक्षस्याऽऽपत्तिर्दीयते तदाऽऽपा-
द्याऽऽप्रसिद्धिरिति चेन्न । द्रव्यं यदि प्रत्यक्षविषयत्वे सति संयोगाभाववत्स्यात् तदा संयोगा
भावप्रकारकलौकिकप्रत्यक्षनिरूपितविशेष्यतावत्स्यात्, लौकिकप्रत्यक्षविषयत्वं च गुणादौ प्रसि-
द्धमेवेति नापाद्याप्रसिद्धिः । आपाद्यापादकयोर्व्याप्तिश्च–यत्प्रत्यक्षविषयत्वे सति यदभावाश्रयः
तत्तदभावप्रकारकलौकिकप्रत्यक्षविषयतावदिति वाच्या । तादृशविषयताप्रयोजकत्वं च तत्तदभा-
वाधिकरणतत्त्वकेलौकिकप्रत्यक्षयोग्यत्वमेवेति ध्येयम्(२) ।

नचैवमपीति । अस्य दुर्वारमित्यनेनाऽन्वयः । तत्प्रत्यक्षं–संयोगाभावप्रत्यक्षम् । दुर्वा-
रमिति । पूर्वं प्रतियोग्युपलब्धिरूपप्रतिबन्धकविरहादिति यावत् ।

[१]अथ कीदृशः प्रतिबध्यप्रतिबन्धकभावः ? न तावत्संयोगाभावप्रत्यक्षं प्रति संयोगज्ञान-

(१) सामान्याभावबुद्धिं प्रति यत्किञ्चित्प्रतियोगिमत्तानिश्चयस्यापि विरोधितया नातिरिक्तदोषस्य
विरोधित्वमिति दोषादित्यस्य प्रतिबन्धकादित्यर्थ इत्यपि कश्चित् ।

(२) केचित्तु एकशाखावच्छेदेन कपिसंयोगोपलब्धावपि शाखान्तरावच्छेदेन कपिसंयोगाभावप्रत्यक्षद-
र्शनात् तदवच्छेदेनाऽभावप्रत्यक्षे तदवच्छेदेन प्रतियोग्युपलब्धेः प्रतिबन्धकत्वस्य स्वीकरणीयतया वृक्षत्वाव-
च्छेदेन संयोगसामान्याभावप्रत्यक्षप्रतिबन्धकस्य वृक्षत्वावच्छेदेन संयोगोपलब्धेरसत्त्वाद्वृक्षे संयोगसामान्याभाव-
प्रत्यक्षापत्तिरतः शाखामूलादिसर्वावयवावच्छेदेन प्रतियोग्युपलब्धेर्दोषविधयैव प्रतिबन्धकत्वं युक्तमित्याह--
सर्वावयवावच्छेदेनत्यादि ।

केचित्तु विषयतासम्बन्धेन रूपविशेष्यकसंयोगाभावप्रकारकप्रत्यक्षं प्रति चक्षुःसंयुक्तसमवेतरू-
पविशेषणतायाः विशिष्यैव कारणत्वं वाच्यम्, अन्यथा रूपे संयोगाभावप्रत्यक्षकाले रसादावपि सन्निकर्ष-
मन्तरेण संयोगाभावप्रत्यक्षापत्तेः । एवं च चक्षुःसंयुक्तसमवेतविशेषणतात्वेनानुगतकारणताविरहे द्रव्ये
संयोगसामान्यभावप्रत्यक्षस्यालीकतया संयोगसामान्याभावप्रत्यक्षे चक्षुःसंयुक्तविशेषणतायाः कारणत्वाक-
ल्पनात्कथमापत्तिः आपादकाभावात्, यदि च प्रकारतासम्बन्धेन संयोगसामान्याभावचाक्षुषे चक्षुःसंयुक्तसम-
वेतविशेषणतात्वेनैवानुगतकारणत्वम्, विशेष्यविधया रूपरसादेर्भाने तत्तल्लौकिकप्रत्यक्षसामग्र्या अपेक्षि-
तत्वेन नोक्तप्रत्यक्षापत्तिः, एवं च चक्षुःसंयुक्तशाखादिसमवेतवृत्तिविशेषणत्वरूपसंयोगाभावप्रकारकप्रत्यक्ष-
प्रयोजकसामग्र्याः द्रव्यभासकस्य चक्षुःसंयोगस्य च सत्त्वेनाऽऽपत्तिसम्भव इत्युच्यते, तदापि द्रव्यसमवेतवृत्ति-
अभावचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतविशेषणतायाः कारणत्वेऽपि अन्यत्र दर्शितरीत्या कार्यतावच्छेदककोटै
संयुक्तांशे समवेतांशे च योग्यत्वनिवेशस्याऽऽवश्यकत्वम्, एवमपि त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारवारणाय
कार्यतावच्छेदककोटौ द्रव्यसमवेतांशे द्रव्यान्यत्वं निवेशनीयम्, तथा चाऽऽपादकाभावादापत्तिविरहेऽपि द्रव्य-
निष्ठविशेष्यतानिरूपिताभावीयप्रकारतासम्बन्धेन घटाद्यभावचाक्षुषोपपत्तये चाक्षुषत्वावच्छिन्नं प्रत्येव लाघवेन
चक्षुःसंयुक्तविशेषणतायाः कारणत्वस्य वाच्यतया संयोगाभावे उक्तसम्बन्धेन प्रत्यक्षापत्तेर्दुर्वारत्वादिति ध्येयम् ।

त्वोपगमात्, प्रतियोगिन उपलब्धिर्यया इति व्युत्पत्त्या तस्या एव वा प्रस्तुतत्वादिति भावः।

---

त्वेन, वृक्षे संयोगोपलब्धिदशायां गुणेऽपि संयोगसामान्याभावप्रत्यक्षं(१) न स्यात्, नापि द्रव्यत्वावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रकारकप्रत्यक्षं प्रति द्रव्यत्वावच्छिन्नविशेष्यकसंयोगवत्तानिश्चयत्वेन द्रव्यत्वावच्छिन्नविशेष्यकसंयोगाभावप्रकारकप्रत्यक्षस्याऽलीकतयाऽऽपत्तिदानासङ्गतेरिति चेन्न।

लौकिकसन्निकर्षप्रयोज्यविशेष्यतासम्बन्धेन संयोगाभावप्रकारकप्रत्यक्षं प्रति लौकिकसन्निकर्षप्रयोज्यविशेष्यतासम्बन्धेन संयोगोपलब्धेः प्रतिबन्धकत्वात्। एवं चोक्तापत्तेर्दुर्वारतापत्तिः। न च तादृशतादृशोपलब्धित्वस्येश्वरप्रत्यक्षसाधारणतया तस्य सर्वदैव सर्वत्रैव च द्रव्ये सत्त्वेन कथं प्रत्यक्षापत्तेर्दुर्वारत्वमिति इति वाच्यम्। जन्यप्रत्यक्षनित्यज्ञानसाधारणानुगतविषयितानिरूपकत्वस्य विशेष्यत्वस्य मानाभावेन संसर्गत्वाऽसम्भवात्, लौकिकसन्निकर्षप्रयोज्यविशेष्यत्वस्य तु सर्वथापीश्वरज्ञाननिरूपकत्वाऽसम्भवान्नेश्वरज्ञानसंसर्गत्वसम्भव इति भवत्येवोक्तापत्तिरिति ध्येयम्।

यद्वा द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षे चक्षुःसंयुक्तविशेषणतारूप कारणबलादेव संयोगाभावे तादृशप्रत्यक्षस्यापादिततया तद्वारणाय तदन्तर्भावेणैव प्रतिबन्धकत्वं कल्पनीयम्, तथाहि उक्तविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षे द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकावच्छिन्नप्रतियोगित्वकत्वसंसर्गेण प्रत्यक्षस्य प्रतिबन्धकत्वम्, तत्रैकस्य दोषविशेषात्प्रतियोगिविशेषग्रहेऽन्यस्य तदभावप्रत्यक्षोपपत्तये तत्पुरुषीयत्वनिवेशस्यावश्यकतया न कश्चिद्विरोध इति।

केचित्तु तत्पुरुषीयसंयोगाभावत्वावच्छिन्नलौकिकप्रकारताशालिप्रत्यक्षं प्रति तत्पुरुषीयसंयोगत्वावच्छिन्नलौकिकप्रकारताशालिज्ञानत्वेन प्रतिबन्धकत्वमनुभवसिद्धम्, प्रतिबन्धकत्वस्य विशेष्यत्वं, प्रतिबध्यत्वस्य च स्वविषयीभूतसंयोगवत्त्वं सम्बन्ध इति प्राहुः।

[२] ननु तादात्म्येन द्रव्यत्वेन प्रतिबन्धकत्वे प्रतियोगिग्रहदशायां नापत्तिः लाघवमपि, एवमीश्वरज्ञानसाधारणज्ञानत्वादिना प्रतिबन्धकत्वेऽपीति चेत्।

अननुभवात्(२), द्रव्येऽभावमात्रस्याऽप्रत्यक्षत्वापत्तेश्च। स्वप्रयोज्यविषयतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन सामग्र्याः प्रतिबन्धकत्वमाह **प्रतियोग्युपलम्भकसामाग्र्या इति**। दोषविशेषासहकृतचक्षुःसंयुक्तसमवायादि सन्निकर्षः। व्यधिकरणबहुव्रीहेरसार्व

---

(१) केचित्तु दोषाद्वेऽन्यत्र वाकारोऽनास्थायाम्, तथाचाऽतीन्द्रियस्येत्यादिसमाधाने एव निर्भर इति प्राहुः।

(२) अथान्धकारवायुपरमाण्वादौ घटाभावचाक्षुषस्य वारणाय अन्धकारे तेजोभावप्रत्यक्षस्य वायौ उद्भूतरूपाभावप्रत्यक्षस्य परमाणौ महत्त्वाभावप्रत्यक्षस्य चोपपत्तये प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वलक्षणयोग्यत्वविशिष्टानुपलब्धेः कारणत्वस्य वाच्यतया कथं गुणे संयोगसामान्याभावस्य प्रत्यक्षत्वम्, अत्र यदि संयोगः स्यात्तदा उपलभ्येतेत्यापादनाऽसम्भवात् संयोगस्याऽतीन्द्रियस्य सत्त्वेऽपि तदुपलम्भकाभावादिति चेन्न। गुणे संयोगसत्त्वे योग्यसंयोगस्यापि सत्त्वस्यावश्यकत्वेन कदाचिदपि कुत्रापि गुणे कस्याप्युपलब्धिः स्यादित्येवं योग्यतायाः सम्पादनीयत्वादिति।

न च यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तेः (संयोग)यावद्विशेषाभावा एव मानम् ।

प्रतियोग्युपलम्भरूपदोषाभावस्य संयोगसामान्याभावप्रत्यक्षे कार्यसहभावेन हेतुत्वोपगमान्नोक्तदोष इत्यपि वदन्ति ।

न चेति । मानमिति परेणाऽन्वयः । यो यदीयेति । यो यज्जातिसमानाधि-

---

त्रिकत्वे त्वाह प्रतियोग्युपलम्भरूपेति । [१]अथ कार्यसहभावेनेतिशब्दात्कार्याधिकरणवृत्तितयेत्येव लभ्यते, तच्च प्राक्कालवृत्तितया हेतावप्यस्तीति उक्तप्रत्यक्षस्य दुर्वारतापत्तिः । यदि च कार्यकालमात्रवृत्तितयेत्यर्थः, तदा कार्यसहभावेन हेतौ पूर्ववर्तिनि अनुपपत्तिरिति चेन्न ।

कार्यसहभावेन हेतुत्वमित्यस्य कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकतत्तद्धर्मवत्त्वरूपेण हेतुत्वमित्यत्र तात्पर्यात् । कारणत्वं चोभयसाधारणं स्वाधिकरणत्व-स्वपूर्वत्वाधिकरणक्षणद्वयावच्छिन्नस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति दोषाभाववदिति ।

द्रव्ये संयोगसामान्याभावे मानाभावादिति दीधितिः । न चात्र सिद्ध्यसिद्धिभ्यां मानस्य व्याघात इति वाच्यम् । प्रमितिजनकत्वीयस्वरूपेण मितिजनकत्वाभावस्य साधनीयत्वात् । यद्वा प्रमितिकरणत्वावच्छिन्नप्रतियोगिकस्वरूपेण मितिजनकत्वाभावः साधनीयः । यत्तु संयोगाभावं पक्षीकृत्य स्वजन्यप्रमितिविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकमानाभावहेतुना द्रव्यवृत्तित्वाभावं साधयतीति । तन्न । संयोगाभावस्य प्रमितिविशेष्यतासम्बन्धेन केवलान्वयित्वादभावाऽप्रसिद्धिरिति ।

दीधितौ यो यदीयेति । वाक्यार्थबोधश्च व्याप्तेरित्यत्र षष्ठ्यर्थो विषयत्वम्, यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानित्युदाहरणवाक्यम्, तस्य बोधेऽन्वयः, मानपदं मितिकरणपरम्, तच्च व्याप्तिज्ञानरूपोऽर्थः, तत्रैव वाक्यस्य जन्यतासम्बन्धेनाऽन्वयः, मानपदोत्तरद्वितीयार्थश्च विषयत्वम्, तस्य यावत्संयोगविशेषाभावेऽन्वयः, तथाच तादृशोदाहरणवाक्यजन्यव्याप्तिविषयकबोधीयविषयतावन्तः संयोगीययावद्विशेषाभावा इति शाब्दबोधः । किंवा मानपदं संयोगीययावद्विशेषाभावलिङ्गकानुमितिजनकतावच्छेदकत्वपरम्, तत्रैवोदाहरणवाक्यस्य प्रयोज्यतासम्बन्धेनाऽन्वयः, व्याप्तेरित्यत्र षष्ठ्यर्थो निष्ठत्वम्, तथाच संयोगीययावद्विशेषाभावलिङ्गकानुमितिजनकतावच्छेदकत्वमेतादृशोदाहरणवाक्यप्रयोज्यव्याप्तिनिष्ठमिति शाब्दबोधः । अत्र च यत्पदं यद्धर्माश्रयपरम्, यदीय इत्यत्र छप्रत्ययार्थो वृत्तित्वम्, विशेषपदं चोभयावृत्तिधर्मपरम्, एवं च यज्जातिसमानाधिकरणेत्याद्यर्थलाभः ।

तथाच वृक्षः समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नप्रतियोगिताकाभाववान् संयोगत्वजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नसमवायसम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववत्त्वादित्यनुमानम् । संयोगत्वजातिसमानाधिकरणः अथ च उभयावृत्तियों धर्मः तत्तत्संयोगत्वं, तदवच्छिन्नप्रतियोगिताकयावदभावस्य वृक्षे सत्त्वात्तत्र च संयोगसामान्याभावस्य साधनीयत्वात् । यो यज्जातीति सामान्यव्याप्तिरियम् । निर्घटभूतलं दृष्टान्तः । नन्वत्र

करणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नप्रतियोगिताकाभाववानित्यर्थः, तेन न स्वरूपा

वृक्षः संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादित्येव कुतो नोक्तं जगदीशेनेति चेन्न। विपरीतबाधकतर्काभावान्नोक्तम्। सामान्यव्याप्तौ तु प्रकृतसाधने प्रकृतसाध्यव्याप्तिग्रहासत्त्वेऽपि साधनसजातीये साध्यसजातीयव्याप्तिग्रहे प्रकृतपक्षे प्रकृतहेतुमत्तानिश्चयोत्तरमनुमितिर्भवतीति नियमः। तेन—उभयावृत्तिपदोपादानेन।

(१) न स्वरूपासिद्धिरिति। अन्यथा संयोगत्वसमानाधिकरणो यो धर्मः सत्तागुणत्वादिकं तदवच्छिन्नसमवायसम्बन्धावच्छिन्नप्रतियोगिताकयावदभावस्य वृक्षेऽसत्त्वात्स्वरूपासिद्धिः स्यात्। धर्मे उभयावृत्तित्वविशेषणसत्त्वे तु सत्तायाः गुणत्वस्य चोभयवृत्तित्वान्न दोषः।

[१] नन्वत्र उभयावृत्तित्वं धर्मे विशेषणं परित्यज्य प्रतियोगितायामेव विशेषणमस्तु, एवं च यज्जातिसमानाधिकरणत्वे सति उभयावृत्तिर्या प्रतियोगिता तन्निरूपकयावदभाववान् इत्येवास्तु किं धर्मावच्छिन्नत्वनिवेशेन, एवं च तत्तत्संयोगाभावीयप्रतियोगितायामुभयावृत्तित्वसत्त्वात्तामादाय लक्षणं सङ्गमनीयम्। न च प्राचीनमते तत्संयोगाभावीयप्रतियोगितायां तत्संयोगध्वंसादिवृत्तित्वेनोभयावृत्तित्वं नास्त्येवेति वाच्यम्। प्रतियोगिभेदेन प्रतियोगितावच्छेदकभेदेन च प्रतियोगिताया भिन्नत्वादिति चेन्न।

स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः प्रत्याश्रयभेदेन भिन्नतया संयोगाभावीयप्रतियोगितायामुभयावृत्तित्वसत्त्वेन तादृशप्रतियोगिताकाभावस्यापि हेत्वन्तर्गततया पक्षेऽसत्त्वेन स्वरूपासिद्धेः। न च तथापि उभयावृत्तित्वस्य स्वावच्छेदकवत्त्वसम्बन्धेन प्रतियोगितायां निवेशे न दोषः, संयोगसामान्याभावीयप्रतियोगितायाः प्रतिव्यक्तिभेदेन भिन्नत्वेऽपि स्वावच्छेदकसंयोगत्ववत्त्वसम्बन्धेनोभयवृत्तित्वात्स्वरूपासिद्धेरनवकाशादिति वाच्यम्। तथासति लाघवानवकाशादिति। न चाभावे एव स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेनोभयावृत्तित्वं निवेशनीयम्, एवं च यज्जातिसमानाधिकरणोभयावृत्तियावदभाववानित्येव हेतुः, तावतापि संयोगसामान्याभावस्य निखिलसंयोगेषु तादृशसम्बन्धेन सत्त्वेनोभयावृत्तित्वविरहेण न स्वरूपासिद्धिरिति वाच्यम्। पूर्वक्षणवृत्तित्वविशिष्टतत्संयोगाभावस्यापि तत्संयोगाभावानतिरिक्ततया स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेन पूर्वक्षणवृत्तित्वविशिष्टतत्संयोगाभावाभावेऽपि तत्संयोगाभावस्य सत्त्वेनोभयावृत्तित्वविरहादभावाऽप्रसिद्धेः। न चाऽभावत्वरूपानुयोगितायामेव स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेनोभयावृत्तित्वं निवेश्यं, तथाच तत्संयोगाभावत्वरूपानुयोगिताया भिन्नत्वेन तत्रोभयावृत्तित्वसत्त्वादिति वाच्यम्। तत्संयोगाभावत्वाभावाभावस्य तत्संयोगाभावत्वरूपतया तन्निरूपितप्रतियोगितायास्तत्संयोगाभावत्वाभावेपि सत्त्वेन तत्संयोगाभावत्वरूपानुयोगितायामुभयावृत्ति-

---

(१) ननु प्रथमोपात्तजातिपदस्य व्यावृत्तिमनुक्त्वा उभयावृत्तिपदादेर्व्यावृत्त्युपन्यासोऽनुचित इति चेन्न। उभयावृत्तिपदासत्त्वे जातिपदस्य व्यावृत्तिर्न सम्भवति। यद्धर्मसमानाधिकरणीभूततद्घटान्यप्रमेयत्वएतद्घटान्यप्रमेयत्वादिरूपधर्मावच्छिन्नप्रतियोगिताकयावदभावस्याऽवृत्तितया तादृशयावदभावरूपहेतौ व्यभिचाराऽसम्भवात्। एवं हेतुघटकसाध्यघटकसम्बन्धयोरैक्याकरणेऽपि तथैव विषयित्वसम्बन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमत्त्वावच्छिन्नाभावस्य तत्साध्यक व्यभिचाराऽसम्भवादतः प्रथममुभयावृत्तिपदादेर्व्यावृत्तिर्दत्तेति ध्येयम्।

सिद्धिः, न वा सिद्धसाधनम् । जात्युपादानाद् गुरुधर्मस्य कम्बुग्रीवादिमत्त्वस्य प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धावपि न व्यभिचारः ।

---

त्वाविरहेण पुनरप्रसिद्धेः । न च स्वविशिष्टप्रतियोगितावत्त्वसम्बन्धेनानुयोगितायां तन्निवेश्यम्, वै० स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन, तथाच तत्संयोगाभावीयतत्संयोगनिष्ठप्रतियोगितैवतादृशीति नाप्रसिद्धिरिति वाच्यम् । एतादृशपरिष्कारे लाघवानवकाशादिति ध्येयम् ।

[२] नन्वत्रोभयावृत्तित्वं यदि उभयत्वाश्रयनिरूपितवृत्तित्वाभावः, तदा तत्संयोगत्वे तत्संयोगघटोभयत्वाश्रयनिरूपितवृत्तित्वस्यैव सत्त्वेन तदभावस्याऽसत्त्वप्रसङ्गादिति चेन्न ।

आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकोभयत्वावच्छिन्नाभावस्तदर्थः, तथा चाधेयतासम्बन्धेनोभयवत्तायाः तत्संयोगत्वेऽसत्त्वेनोभयत्वावच्छिन्नाभावस्य सत्त्वान्न काप्यनुपपत्तिरिति केचित् । स्ववृत्तित्व स्वेतरवृत्तित्वोभयसम्बन्धेन वस्तुमदन्यत्वमेव तदर्थं इति वदन्ति ।

परे तु भेदविशिष्टान्यत्वमेव तत् । वै० स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन । न च घटतत्संयोगोभयभेदस्य केवलान्वयितया तद्विशिष्टत्वस्यैव तत्संयोगत्वे सत्त्वेन तदन्यत्वाऽसम्भव इति वाच्यम् । भेदविशिष्टान्यत्वमित्यत्र भेदे प्रतियोगिताविशिष्टान्यत्वनिवेशात्, वै० स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्वोभयसम्बन्धेन, तथा चोभयभेदस्य तथात्वाभावेन धर्तुमशक्यत्वादिति ध्येयम् ।

यत्सम्बन्धावच्छिन्नतत्सम्बन्धावच्छिन्नेति सम्बन्धैक्यविवक्षायाः फलमाह **नवेति** । तथाच सम्बन्धैक्याविवक्षायां संयोगसम्बन्धावच्छिन्नप्रतियोगिताकसंयोगसामान्याभावस्य केवलान्वयितया सिद्धसाधनं स्यात् । **न व्यभिचार इति** । जातिपदानुपादाने कम्बुग्रीवादिमत्त्वरूपगुरुधर्मसमानाधिकरणोभयावृत्तितद्घटत्वावच्छिन्नप्रतियोगिताकयावद्विशेषाभाववति भूतलादौ साध्यासत्त्वाद्व्यभिचारः, तादृशधर्मस्य गुरुतयाऽनवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेरिति भावः । न चात्र साध्याऽप्रसिद्ध्या साध्याभाववद्वृत्तिरूपव्यभिचारस्याप्यप्रसिद्धिरिति कथं व्यभिचारः सङ्गच्छते इति वाच्यम् । यो यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तद्धर्मवानित्यत्रैव तात्पर्यात् । तद्धर्मवत्ता च स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन, तथाचैतादृशसम्बन्धेन कम्बुग्रीवादिमत्त्वरूपधर्मस्य कुत्राप्यसत्त्वेन तदभावस्य केवलान्वयितया तदधिकरणे निर्घटभूतले हेतोः सत्त्वाद्व्यभिचार इति ध्येयम्(१) । नियमभङ्गोऽत्र व्यभिचारपदार्थः न तु साध्याभाववद्वृत्तित्वम्, इति कश्चित् । वस्तुतस्तु साध्याप्रसिद्धिरेवात्र व्यभिचार इति दिक् ।

---

(१) केचित्तु व्याप्यतासम्बन्धेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकत्वेन यावत्त्वस्य निवेशात्, व्याप्यता च स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपा, तथा च तादृशाभावाऽप्रसिद्धावपि तादृशनिखिलाभाववृत्तित्वसमुदायत्वस्य तादृशाभावत्वव्यापकत्वेन गृहीतुं शक्यतया यद्धर्मपदेन कंबुग्रीवादिमत्त्वमादाय व्यभिचारवारणाय तत्सार्थक्यादित्याहुः ।

परे तु यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वानुयोगिताकपर्याप्तिक-

[१] न च तथापि कम्बुग्रीवादिमत्त्वं कम्बुग्रीवादिव्यक्तिरेव, स चावयवसंयोगविशेषः कपाले एव वर्त्तते, एवं च कम्बुग्रीवादिमत्त्वसामानाधिकरण्यस्य तद्घटत्वेऽभावात्कथं व्यभिचार इति वाच्यम्। स्वसमवायिसमवेतत्वसम्बन्धेन कम्बुग्रीवादिमत्त्वसामानाधिकरण्यस्य तद्-घटत्वेसत्त्वात्।

[२] अथैवं धर्मपदस्य जातिपरत्वेऽपि कम्बुग्रीवात्वरूपसंस्थानगतजातिमेव जातिपदेनोपादाय स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन तज्जात्यधिकरणवृत्त्युभयावृत्तितद्घटत्वावच्छिन्न-प्रतियोगिताकयावदभाववति तज्जात्यवच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्या व्यभिचारः पुनस्तदवस्थ एव, तत्र कम्बुग्रीवात्वमपेक्ष्य घटत्वे तथात्वकल्पनस्य संसर्गलाघवप्रयोज्यत्वात्, कम्बुग्रीवात्वस्य तथात्वे स्वाश्रयसमवायिसमवेतत्वरूपपरम्परासम्बन्धस्य तथात्वेन गौरवात्, समवायस्य तथात्वे लाघवात्। नच जातिपदं गुणविभाजकजातिपरम्, गुणविभाजकत्वं च गुणत्वव्याप्यत्वे सति गुणत्वव्याप्याव्याप्यत्वम्, तथाच कम्बुग्रीवात्वस्य गुणत्वव्याप्यत्वेऽपि गुणत्वव्याप्यसंयोगत्वव्याप्यत्वेन तदव्याप्यत्वविरहात्तस्य धारणाऽसम्भव इति वाच्यम्। संयोगत्वस्य जातिपदेन धर्तव्यतया तस्य स्वव्याप्यकम्बुग्रीवात्वाश्रयसमवायिसमवेतत्वसम्बन्धेन घटे सत्त्वेन तद्वृत्तिउभयावृत्तितद्घटत्वावच्छिन्नप्रतियोगिताकयावदभावस्यापि हेत्वन्तर्गततया तादृशसम्बन्धेन संयोगत्वावच्छिन्नाभावाऽप्रसिद्ध्या व्यभिचारतादवस्थ्यात्, तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य घटत्वे एव कल्पनादिति चेन्न।

समवायेन यद्धर्मसामानाधिकरण्यलाभा(१)र्थमेव जातिपदोपादानादिति ध्येयम्।

---

यावत्त्वावच्छिन्नाभाववान् स तद्धर्मावच्छिन्नाभाववानित्यर्थः। न्यूनवृत्तिधर्मस्य पर्याप्त्यनुयोगितावच्छेदकत्वाभ्युपगमान्न कोपि दोषः। अथवा यः स्वनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यावृत्तियज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वकः स तद्धर्मावच्छिन्नाभाववानित्यर्थे तात्पर्यान्न कोपि दोष इत्याहुः।

अथवा यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभावाधिकरणकं तत्तदधिकरणनिष्ठतादृशाभावप्रतियोगितावच्छेदकमिति व्याप्तौ कंबुग्रीवादिमत्त्वादौ व्यभिचारो दर्शितो न साध्याप्रसिद्धिरित्यपि वदन्ति।

अत्रेदं बोध्यम्। संयोगि द्रव्यत्वादित्यादौ लक्षणघटकप्रतियोगिवैयधिकरण्यदलव्यावृत्त्यर्थं संयोगाभावस्य प्रत्यक्षाऽसम्भवेन एतादृशव्याप्त्या संयोगसामान्याभावोऽनुमीयते। तत्र यद्यपि तादृशव्याप्त्या संयोगसामान्याभावानुमितिरपि तदीयव्याप्तौ प्रतियोगिवैयधिकरण्यनिवेशं विना न सम्भवति संयोगसामान्याभावाभावस्य यावद्विशेषाभावाधिकरणे वृक्षादौ सत्त्वेन संयोगसामान्याभावत्वरूपसाध्यतावच्छेदकस्य व्यापकतानवच्छेदकत्वात्, अतस्तदर्थं प्रतियोगिवैयधिकरण्यनिवेश आवश्यकः, तथाच येन रूपेण तस्य सङ्गतिस्तेनैव तस्य प्रयोजनसत्त्वेन सन्दर्भविरोधः स्यात्। तथापि सामान्यव्याप्तौ प्रसिद्धस्थले व्यापकसामानाधिकरण्यरूपव्याप्तेरनुमानाङ्गत्वम्। वृक्षादौ संयोगाभावसाधने साध्यसाधनसहचारमात्रस्यैवेति मिश्रादिभिरप्युक्तमतो न सन्दर्भविरोध इत्यास्ताम् विस्तरः।

(१) एतेन जात्यधिकरणत्वं यदि समवायेन विवक्ष्यते तदा जातिपदोपादानं व्यर्थम्, धर्मपदस्य जातिपरत्वाभावेऽपि नोक्तव्यभिचारसम्भवः, तथाहि समवायेन कम्बुग्रीवादिमत्त्वाधिकरणं कपालमेवं तद्वृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावस्यैव हेत्वन्तर्गततया। तादृशसम्बन्धावच्छिन्नकम्बुग्रीवानिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य साध्यतया। गुरुधर्मावच्छिन्नप्रतियोगिताकत्वविरहेण व्यभिचाराभावात्। न च तादृशसम्बन्धावच्छिन्नावच्छेदकताककम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वम् कपालत्वे

[२] नन्वत्र यावत्पदं किमर्थम् ? न च यत्किञ्चिद्घटाभाववति भूतले घटसामान्याभावासत्त्वात् व्यभिचार इति वाच्यम् । यावत्पदोपादानेऽपि यावदभावपदेन नीलपीतरक्तघटाभावत्रयस्यापि हेत्वन्तर्गततया तदधिकरणे हरितघटवति देशे साध्यस्य घटसामान्याभावस्याऽसत्त्वेन व्यभिचारतादवस्थ्यात् । न च यावत्त्वस्य व्यापकतावाचितया यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वव्यापकः(१) स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानित्येवार्थः, व्यापकता च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन, वृक्षस्य तादृशाऽऽधेयतासम्बन्धेन व्यापकत्वात्, एवं च हरितघटवद्भूतलस्य तादृशाधेयतासम्बन्धेन तादृशाभावत्वव्यापकत्वविरहेण न व्यभिचार इति वाच्यम् । एवंसति जातिपदवैयर्थ्यापत्तेः, कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वत्वस्य घटत्वघटिततादृशप्रतियोगितावच्छेदकत्वत्वापेक्षया गुरुत्वेन तादृशाभावस्य हेत्वनन्तर्गततया व्यभिचाराभावात् । एवमुभयावृत्तिपदवैयर्थ्यशङ्काऽप्यलग्ना स्यात् व्यापकतारूपाभावस्य भिन्नत्वेन

---

एव स्वीकार्यमिति वाच्यम् । कपाले कम्बुग्रीवाशून्यदशायाम् कपालवत्यपि देशे कम्बुग्रीवादिमान्नास्तीति प्रतीत्युदयात् कपालं नास्तीतिप्रत्ययस्य चानुदयात्तत्प्रतियोगितावच्छेदकत्वस्य तत्र वक्तुमशक्यत्वादिति ।निरस्तम् । वस्तुतस्तु समवायेन धर्माधिकरणत्वोक्तावपि धर्मपदस्य जातिपरत्वमावश्यकम्, अन्यथा धर्मपदेन गुणमुपादाय तत्समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववति साध्यविरहाद्व्यभिचारः स्यात्, गुणे प्रतियोगितावच्छेदकत्वमपेक्ष्य द्रव्यत्वे तत्कल्पने लाघवादिति ध्येयम् ।

केचित्तु साध्यघटकप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वं निवेश्यम्, अन्यथा तत्संयोगवृत्तित्वविशिष्टसंयोगत्ववान्नास्तीत्यभावमादाय सिद्धसाधनापत्तेः । एवं च तद्धर्मनिष्ठनिरूपकतायां निरवच्छिन्नत्वलाभार्थमेव जातिपदम् । समवायान्यसम्बन्धेन जातेः स्वरूपतो भानं नाङ्गीक्रियते इति नियमः । एवं च स्वाश्रयसमवायिसमवेतत्वसम्बन्धावच्छिन्नकम्बुग्रीवात्वनिष्ठनिरूपकताया निरवच्छिन्नत्वविरहान्न दोषः । न च विषयितासम्बन्धेनापि जातेः स्वरूपतो भानस्य घटत्वेनेमं जानामीत्यनुव्यवसायानुरोधेन स्वीकारात् समवायेन संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभाववति वृक्षे विषयित्वसम्बन्धावच्छिन्नसंयोगत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावसत्त्वात् सिद्धसाधनापत्तिरिति वाच्यम् । यो यद्धर्मनिष्ठयत्सम्बन्धावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् स तद्धर्मनिष्ठतत्सम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानिति विवक्षणे दोषाभावात् । यदि च घटो नास्तीतिबुद्धौ अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावांशे घटत्वस्य स्वरूपतो भानं, तथा स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन कम्बुग्रीवात्वस्य स्वरूपतो भानं स्वीक्रियते, तदा यद्धर्मे यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं विशेषणं देयम् । तदर्थश्च यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावः साध्यः तत्सम्बन्धावच्छिन्नावच्छेदकताश्रयत्वम्, नातः समवायसम्बन्धावच्छिन्नप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकत्वस्याऽसत्त्वेऽपि विषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वस्य स्वाश्रयसमवायिसमवेतत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्य च कम्बुग्रीवात्वे सत्त्वेऽपि दोषः ।

(१) अथ तादृशाभावत्वव्यापकत्वम् तादृशाभावत्ववन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम्, अवच्छेदकता च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्ना । एवं च तादृशाभावत्ववति संयोगविशेषाभावे स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन सर्वस्यैव सत्त्वात्तादृशसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिताकभेदाऽप्रसिद्धिरिति चेन्न । तादृशाभाववृत्तिभेदप्रतियोगित्वाभावस्यैव व्यापकतारूपत्वात् । प्रतियोगित्वाभावश्च स्वनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकः । उक्तस्थले च तादृशसम्बन्धस्य व्यधिकरणतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगित्वाभावस्य वृक्षे सत्त्वान्नाप्रसिद्धिः

न च सत्त्वगुणत्वाद्यवच्छिन्नाभावमादाय स्वरूपासिद्धिवारकस्य उभ

वैयर्थ्यलक्षणानाक्रान्तत्वात् । न च व्यापकत्वार्थकत्वाभावेऽपि कूटा(१)र्थकत्वेनैवोपपत्तिः, तथाहि तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिककूटत्वावच्छिन्नस्य हेतुतया न प्रागुक्तदोष इति वाच्यम् । जगदीशोक्तवैयर्थ्यशङ्कायास्तथापि सन्दर्भविरुद्धत्वात्, पर्याप्तिवैलक्षण्यात्, अनुयोगितावच्छेदककुक्षौ उभयावृत्तित्वनिवेशानिवेशकृतकूटभेदादिति चेन्न ।

यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव एव हेतुः, हेतुतावच्छेदकसम्बन्धश्च स्वपर्याप्तयावत्त्वावच्छिन्नाधिकरणत्वमेव, यथा वह्न्यभावे वह्नेर्वह्नित्वावच्छिन्नप्रतियोगित्वमेव सम्बन्धः, संसर्गता च प्रतियोगितात्वेनैव, तथा प्रकृतेऽपि स्वपर्याप्तयावत्त्वावच्छिन्नाधिकरणतात्वेनैव संसर्गता, परन्तु तादृशाभावत्वसमनियतयावत्त्वावच्छिन्नाधिकरणत्वं तस्य विलक्षणसम्बन्धो भविष्यति तादृूप्येण संसर्गता नास्ति, एवं च तादृशविलक्षणसम्बन्धेन निखिलाभावाधिकरणे हेतोः सत्त्वान्न कश्चिद्दोष इति दिक् ।

साध्यगमकत्वं हेतुत्वम्, तत्र गमकतायां व्याप्तिमात्रमुपयुक्तम्, ह्रदे धूमस्य वह्निगमकत्वविरहेऽपि गमकता न हीयते पर्वते वह्निगमकताया निष्प्रत्यूहत्वादिति पक्षधर्मतावच्छेदकत्वं न वैयर्थ्यघटकमिति व्यभिचारावारकस्य वैयर्थ्यमित्याशयेनाऽऽशङ्कते नचेति । सत्त्वगुणत्वाद्यवच्छिन्नाभावमादाय सत्तावान्नास्ति गुणत्ववान्नास्तीत्यभावमादायेत्यर्थः ।

न चोभयावृत्तिपदोपादानेऽपि उभयावृत्तिधर्मे जातिसामानाधिकरण्यघटकजात्यधिकरणवृत्तित्वं स्वरूपेण वाच्यम्, अन्यथा कालिकेन तत्तद्रूपत्वादेरपि संयोगत्वाधिकरणवृत्तितया उभयावृत्तित्वेन च तदवच्छिन्नप्रतियोगिताकयावदभावस्य वृक्षेऽसत्त्वात्स्वरूपासिद्धितादवस्थ्यात्, एवं च उभयावृत्तिपदं व्यर्थम् सत्तागुणत्वादेः स्वरूपेण जात्यधिकरणवृत्तित्वविरहादिति वाच्यम् । सत्त्वगुणत्वाद्यवच्छिन्नेत्यत्राऽऽदिपदोपादानात्, तथाचाऽऽदिना प्रमेयत्वादेः परिग्रहः(२) । एतेनोभयावृत्तिधर्मावच्छिन्नत्वं स्वरूपेण वाच्यम्, अन्यथा रूपादेरपि कालिकेन तत्संयोगत्वावच्छिन्नतया स्वरूपासिद्ध्यापत्तेः, एवं च धर्मावच्छिन्नत्वमेव स्वरूपेण

---

तथाच संयोगसमवायादिना वृक्षवान्नेति भेदमादायैव व्यापकता सम्पादनीया । अथवा स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धेन तादृशप्रतियोगितावच्छेदकत्वाभावस्य विवक्षणात्सर्वं समञ्जसमिति ।

(१) एतेन यावत्त्वं यदि अपेक्षाबुद्धिविशेषविषयत्वं तदा विशेषरूपेण निवेश्यतया यज्जातीयत्वादिप्रतियोगिकान्तस्य वैयर्थ्यापत्तिरिति निरस्तम् । यावत्त्वं संख्यारूपमेव । न च संख्यात्मकयावत्त्वं कथमभावे स्थास्यति संख्याया गुणपदार्थत्वादिति वाच्यम् । समवायेन तदवृत्तित्वेऽपि पर्याप्तिसम्बन्धेन संख्यात्मकयावत्त्वस्यापि अभावे सत्त्वात् । तथाच तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकयावत्त्वस्यैवात्र हेतुतावच्छेदकत्वं, तच्च तादृशाभावेष्वेवास्ति नतु त्रिचतुर्ष्विति ध्येयम् । केचित्तु स्वाभाववदवृत्तित्वस्वव्यापकत्वोभयसम्बन्धेन स्वविशिष्टतादृशाभावत्वकयावत्त्वमेव हेतुतावच्छेदकम्, स्वन्यूनवृत्तियावत्त्वादिवारणाय दलद्वयम्, स्वं यावत्त्वमिति प्राहुः ।

(२) केचित्तु उभयावृत्तित्वदशायां यज्जातिसामानाधिकरण्यघटकाधेयत्वं स्वरूपसम्बन्धावच्छिन्नं ग्राह्यम्, अन्यथा वृक्षत्वादि निष्ठतद्व्यक्तित्वादेरपि कालिकेन संयोगत्वसमानाधिकरणतया तदवच्छिन्नाभावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्ध्यापत्तेः, तथा च कथं सत्त्वगुणत्वावच्छिन्नाभावमादाय आद्युक्तिदानम्, सत्त्वादेः

गावृत्तिपदस्य वैयर्थ्यं व्यभिचाराऽवारकत्वादिति वाच्यम् । व्यभिचारवा-
निवेश्यम्, तावतैव स्वरूपेण सत्तागुणत्वावच्छिन्नस्याऽप्रसिद्धत्वेन स्वरूपासिद्धिविरहादुभयावृ-
त्तिपदं व्यर्थमित्यपि समाहितम् । उभयावृत्तिपदस्य वैयर्थ्यमिति ।

[१] ननु अत्र निष्प्रयोजनकत्वरूपं वैयर्थ्यं न घटते स्वरूपासिद्धिवारकतया तस्सार्थ-
क्यसम्भवात्, एवं पदे वैयर्थ्यं किम् ? व्यर्थार्थप्रतियोगिकत्वमिति चेद् । पदार्थेऽपि वैयर्थ्यं न
घटते, तथाहि—प्रकृते यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयो-
गिताकपर्याप्तिककूटत्वं यद्धीविशेषविषयत्वं तत्र प्रकृते साध्यव्याप्यतावच्छेदकं भवति, एवं
कूटत्वस्य नानात्वेन तदघटितत्वमपि हेताविति चेन्न ।

वैयर्थ्यं किं तावत् ? यदि स्वसमानाधिकरणं यत्प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरं
तद्घटितत्वं, तदा नीलधूमत्वादेर्वैयर्थ्याऽसम्भवः नीलधूमत्वस्य धूमत्वानतिरिक्ततया धूमत्वे
तादृशधर्मान्तरविरहात् । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं प्रकृतसाध्यव्याप्यताव-
च्छेदकं यत्स्वसमानाधिकरणं रूपं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्व(१)रूपं

---

स्वरूपसम्बन्धेनाऽवर्त्तमानत्वादिति चेत् । सत्यम् । यथाश्रुतं तादृशाभावमादाय व्यावृत्तिः प्रदर्शिता, एतादृश-
सूक्ष्मानुधावने तु सत्ताधिकरणत्वाद्यवच्छिन्नाभावमादाय व्यावृत्तिर्दातव्या । न च सत्ताधिकरणत्वावच्छिन्नाभा-
वस्य लाघवेन सत्तादेरेव प्रतियोगितावच्छेदकत्वेन नोक्ताभिधानं संगतमिति वाच्यम् । वस्तुगत्या यत्सत्ता-
धिकरणत्वं तदवच्छिन्नाभावस्य धर्त्तव्यत्वात् । न च तत्तद्व्यक्तित्वेन तत्तदधिकरणत्वव्यक्तेरवच्छेदकत्व-
मपेक्ष्य स्वरूपसतः सत्तादेरेवावच्छेदकत्वकल्पनस्य युक्तत्वात्, तथापि तथाभिधानमसङ्गतमिति वाच्यम् ।
तत्तद्व्यक्तित्वादेरभावप्रतियोगितावच्छेदककोटौ उपलक्षणत्वमते तत्तद्व्यक्तित्वोपलक्षिताच्छिन्नाभावस्य
धारणसम्भवात् । अथवा संयोगत्वसमानाधिकरणघटपटाद्यवृत्तित्वावच्छिन्नाभावमादाय व्यावृत्तिर्देयेत्याहुः ।

परे तु यत्सम्बन्धेन जातिसामानाधिकरण्यं तत्सम्बन्धेनोभयावृत्तित्वं तत्सम्बन्धावच्छिन्नावच्छेदकता-
काऽभावा एव निविष्टाः, तथाचोभयावृत्तित्वदलासत्त्वदशायां यत्सम्बन्धेन सामानाधिकरण्यं तत्सम्बन्धाव-
च्छिन्नावच्छेदकताकाभाव इत्येतन्मात्रं स्थितं, तथाच सत्त्वगुणत्वावच्छिन्नाभावमादाय व्यावृत्तिदानं यथाश्रु-
तमेव सम्यगित्याहुः ।

(१) एतच्च प्रकृतेपि न सम्भवति, स्वपदं हेतुतावच्छेदकपरम्, तथा च यो यज्जातिसमानाधिकरणो-
भयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नावि-
षयकप्रतीतिविषयतावच्छेदकमुभयावृत्तिपदाघटिततादृशकूटत्वानितप्रतीतिविषयतावच्छेदकप्रकृतसाध्यव्याप्य-
तावच्छेदकं स्वसमानाधिकरणसत्तावच्छिन्नाभावगतसाधारणकूटत्वं तदवच्छिन्नाविषयकप्रतीतिविषयता-
वच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वादनवच्छेदकत्वविरहेण वैयर्थ्यविरहात् । न च यो यज्जातिसमानधिकरणो-
भयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वमेव हेतुः, वृत्तित्वं च स्वव्याप्यत्वसम्बन्धेन, व्याप्यताघट-
कस्वाभावश्च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन, तथाच विशिष्टान्तररूपं यज्जातिसमानाधिकरणधर्मा
वच्छिन्नप्रतियोगिताकाभाववद्वृत्तितात्वं तदवच्छिन्नविषयताया हेतुविषयकज्ञानेऽपि सत्त्वेन तदवच्छिन्नाविष-
यकप्रतीतिविषयतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वान्न वैयर्थ्यासङ्गतिरिति वाच्यम् । स्वाभाववद्वृत्ति-
त्वरूपव्याप्यत्वस्य यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वे स्वरूपसम्बन्धाव-
च्छिन्नाऽऽधेयतासम्बन्धेन वृक्षस्य तत्तत्संयोगाभावादौ सत्त्वेन वृक्षाभावस्य तत्तत्संयोगाभावादावसत्त्वेऽपि
वृक्षाभावस्य द्रव्यत्वाभावेऽपि सत्त्वेन तत्राऽभाववत्त्वस्य वृत्तित्वेन विशिष्टाभाववत्त्वस्य वृत्तित्वात्, व्याप्यत्वविर-
हेण तादृशहेतोरसत्त्वात् । न च तादृशाभावत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-
प्त्यनुयोगितावच्छेदकरूपवृत्तित्वमेव हेतुः, वृत्तित्वं च स्वाभाववन्निरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रति

रकस्यैवाऽसिद्धिवारकस्यापि विशेषणस्य सार्थकतायाः पक्षधरमिश्रादि- सम्मतत्वात् ।

यद्युच्यते, तदा स्वपदेन केवलधूमत्वमादाय तद्दोषतादवस्थ्यात् । स्वावच्छिन्नानुयो- गिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्ययत्किञ्चित्प्रतीतिविषयतावच्छेदकं सा- ध्यव्याप्यतावच्छेदकं स्वाश्रयसमानाधिकरणं यत्तदवच्छिन्नविषयिताशून्यप्रतीतिविषयिता निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं रूपे वैयर्थ्यम् ,

---

योगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति वाच्यम्। घटवति भूतले भूतलपक्षद्रव्यत्वावच्छिन्नाभावस्य ऽसिद्धत्वापत्तेः, सम्बन्धघटकरूपस्य भिन्नत्वेन तादृशानवच्छेदकत्वस्य सत्त्वात् । किंच अनुयोगितानिवेशेन विशिष्टान्तरसत्त्वावच्छिन्नाभावानुयोगितायाः प्रातत्वेन तस्य भिन्नत्वेन तच्छून्यप्रतीतिविषयतावच्छेदकत्वस्यै- वोभयावृत्तिपदघटितरूपे सत्त्वात् वैयर्थ्याऽसंगतितादवस्थ्यात् । ननु यज्जातिवृत्तित्वमेव हेतुरस्तु, वृत्तित्वं च स्वाभाववदवृत्तित्वसम्बन्धेन, स्वाभावश्च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन, तद्घटकीभूतवृत्तित्वं च स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन, तथाच तादृशजातौ वृक्षादीनां तादृश- सम्बन्धेन सत्त्वेन तदवच्छिन्नविषयतायाः हेतुविषयकज्ञाने सत्त्वेन तच्छून्यत्वविरहात्, तच्छून्यं घटः पट इत्याकारकज्ञानं तन्निरूपितविषयतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वेन वैयर्थ्यसम्भवात् इति चेन्न । स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाऽभाव उभयवृत्तिपदाघटिततादृशप्रतियोगिताका- भावभिन्नत्वेन विशिष्टान्तररूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वेन तदनवच्छेदकत्वस्यासत्त्वेन वैयर्थ्याभावादिति । न च यज्जातिसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नोभया- वृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितजातिसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छे- दकतानिरूपितताद्भिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततदवच्छेदक- तानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपितानुयोगितानिरूपकपर्याप्तिप्र- तियोगिकूटत्वत्वेनैव तादृशकूटत्वस्य हेतुतावच्छेदकत्वं वाच्यम् , उभयावृत्तित्वस्य न्यूनवारक- पर्याप्तिर्न निवेश्यते, तथाच तादृशकूटत्वावच्छिन्नाविषयकोभयावृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वाविषयकता- दृशकूटत्वविषयकप्रतीतिविषयतावच्छेदकं उभयसाधारणरूपं तदवच्छिन्नाविषयकघटवानित्याकारकप्रतीति- विषयतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वान्न वैयर्थ्यासङ्गतिरिति वाच्यम् । तथासति उभयावृत्तिपदा- नुपादानेऽपि स्वरूपासिद्धिविरहेण ग्रन्थासङ्गतेः । तादृशकूटत्वत्वस्य सत्तावच्छिन्नाभावसाधारणकूटत्व- उभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्वद्वयसाधारणतया तदेकस्य पक्षे सत्त्वादिति चेत् ।

उच्यते । यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटस्यैव हेतुत्वम् । न च घटवति भूतले रक्तघटपीतघटनीलघटाऽभावगतकूटत्वाश्रयस्य सत्त्वात्तत्र घटसामान्याभावस्याऽसत्त्वेन व्यभिचार इति वाच्यम् । यत्किचिद्घटवति भूतले यावद्घटवानितिप्रतीत्यनुदयेन व्यासज्यवृत्तिधर्मप्रकारक- बोधे स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिरेव संसर्गः । तस्याश्च वह्नित्वावच्छिन्नप्रतियोगितायां यथा प्रतियोगिता- त्वेने संसर्गता, तथाऽत्रापि पर्याप्तित्वेनैव नतु तादृशपर्याप्तित्वेन, एवं च तादृशपर्याप्तित्वविशिष्टसंसर्गेण विशि- ष्टान्तरतावच्छेदककूटत्वस्य व्याप्यतानवच्छेदकत्वेऽपि न क्षतिः, तादृशस्य हेतुतावच्छेदकताघटकसम्बन्धत्वविर हात् यथाच शुद्धप्रतियोगितात्वेन प्रतियोगित्वस्य तादृशसंसर्गत्वेऽपि वह्निविशिष्टाऽभावो न महानसीयवन्ह्यभा- वः, तथोक्तपर्याप्तेः पर्याप्तित्वेन संसर्गत्वेऽपि तादृशाभावकूटवत्त्वं न कतिपयाभाववतीति न व्यभिचारः, तथाचोभ- यावृत्तित्वानुपादाने यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटस्य हेतुतया तत्र कूटत्वस्य तादृशाभावत्वव्यापक- पर्याप्तिरेव संसर्गत्वेन स्वरूपासिद्धिसंगतिः। एवं च तादृशविशिष्टान्तरं यद् यज्जातिसमानाधिकरणधर्मावच्छि- न्नाभावकूटत्वं तदवच्छिन्नविषयताया हेतुविषयकप्रतीतौ सत्त्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्व- स्य सत्त्वेन हेतुतावच्छेदके वैयर्थ्यसङ्गतिरिति ध्येयम् ।

यत्तदर्थयोरननुगमात्, एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च ।

अत एव नित्यत्वसाध्यकानुमाने शब्दो नित्यः सामान्यवत्त्वे सति वि

त्वं नीलत्वधूमत्वगतद्वित्वादिरूपं यद्युच्यते, तदा शुद्धधूमत्वपर्याप्तनिरूपकतावच्छेदकतायाः नीलादिसहितधूमत्वपर्याप्तनिरूपकतावच्छेदकताभिन्नत्वेन दोषविरहेऽपि महानसीयवह्निसाध्यकमहानसीयधूमेहतावपि वैयर्थ्यापत्तिः, स्वपदग्राह्यं यन्महानसीयत्ववह्नित्वगतद्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकानिरूपकताकविषयिताशून्या या धूमो महानसीय इत्याकारिका प्रतीतिस्तद्विषयतावच्छेदकावच्छिन्नविषयिताशून्यत्वं न महानसीयधूमविषयकप्रतीतौ धूमत्वविशिष्टमहानसीयत्वस्य महानसीयत्वानतिरेकात्, तथाच धूमत्वविशिष्टमहानसीयत्वरूपविशिष्टान्तरावच्छिन्नविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वं महानसीयधूमत्वेऽक्षतमेवेत्यतः स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयिताकनिरूपकताकनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत्प्रकृतसाध्यव्याप्यतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं तदेव विशिष्टान्तरं वाच्यम्, तथाच प्रकृते यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताककूटत्वावच्छिन्नाधिकरणताया हेतुत्वे विशिष्टान्तरं सत्तावच्छिन्नाभावव्यावृत्तपक्षनिरूपितवृत्तितावदभावकूटत्वादिगतसमुदायत्वं नतु सत्तावदभावादिसाधारणसमुदायत्वं तस्य व्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावात् । तद्घटितत्वेन(१) वैयर्थ्यसङ्गतिरिति ध्येयम् ।

**व्यभिचारवारकस्येवेति** । अत्र साध्यगमकत्वरूपं हेतुत्वं हि किञ्चिद्धर्मिण्येव साध्यगमकत्वम्, निर्धर्मिकानुमित्यभावात्, तथाच गमकतायां साध्यव्याप्तेरिव पक्षधर्मत्वस्यापि प्रयोजकतया वैयर्थ्यशरीरे प्रकृतसाध्यव्याप्यतावच्छेदकत्वस्येव पक्षधर्मतावच्छेदकत्वस्यापि विशेषणत्वं वाच्यमिति स्वरूपासिद्धिवारकस्य न वैयर्थ्यमिति मिश्राणामाशयः ।

सम्मतिं दर्शयति **अत एवेति** । अत्र मीमांसकमतेन शब्दे नित्यत्वसाधनम्, तैर्वर्णात्मकशब्दस्य नित्यत्वस्वीकारात् । शब्दत्वसामानाधिकरण्येन नित्यत्वसाधनस्य तेषामिष्टतया ध्वन्यात्मकशब्दस्य तन्मतेऽनित्यत्वेपि न बाधः । एवं च हेतौ ध्वनिभिन्नत्वविशेषणमपि दातव्यम्, अन्यथा ध्वन्यात्मकशब्दे हेतोः सत्त्वेन तन्मते नित्यत्वरूपसाध्यस्यासत्त्वाद् व्यभिचारापत्तेः । अत्र ध्वन्यात्मकशब्दध्वंसे शब्दभिन्नविशेषगुणाऽसामानाधिकरण्यस्य बहिरिन्द्रियग्राह्यत्वस्य च सत्त्वेन व्यभिचारवारणाय सामान्यवत्त्वे सतीत्युक्तम् । घटीयरूपे सामान्यस्य बहिरिन्द्रियग्राह्यत्वस्य च सत्त्वेन तत्र च नित्यत्वाभावाद् व्यभिचारः स्यादतो विशेषगुणान्तराऽसमानाधिकरणेति । मनःक्रियायां सामान्यवत्त्वस्य विशेषगुणान्तरासामानाधिकरण्यस्य च सत्त्वा-

(१) स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तराघटितत्वे सति स्वावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकं यत्तद्घटकत्वं वैयर्थ्यमिति फलितम् ।

**शेषगुणान्तराऽसमानाधिकरणबहिरिन्द्रियग्राह्यत्वादिति हेतावसिद्धि-वारकस्य शब्देतरार्थकस्याऽन्तरपदस्य शब्दमण्यालोके सार्थकत्वं तैः समर्थितम् ॥**

---

तत्र नित्यत्वाभावेन व्यभिचारः स्यादतो बहिरिन्द्रियग्राह्येति । अत्र बहिःपदमव्यावर्त्तकम्, मनोरूपेन्द्रियग्राह्यत्वस्याऽऽत्मनि सत्त्वेऽपि तत्र नित्यत्वसत्त्वान्न व्यभिचारः । एवं मनोरूपे-न्द्रियग्राह्यत्वस्य जन्यज्ञानादौ सत्त्वेऽपि तत्र शब्दभिन्नविशेषगुणाऽसामानाधिकरण्याभावान्न व्यभिचारसम्भावना । अन्तरपदस्य स्वयं फलमाह **असिद्धिवारकस्येत्यादिना** । तथाचाऽ-न्तरपदानुक्तौ सामान्यवत्त्वे सति विशेषणगुणासमानाधिकरणबहिरिन्द्रियग्राह्यत्वमात्रोक्तौ श-ब्देऽपि स्वात्मकविशेषगुणसामानाधिकरण्यात्स्वरूपासिद्धिः स्यादित्यर्थः । अन्तर(१)पदोपादाने च शब्दे शब्दाभिन्नविशेषगुणाऽसामानाधिकरण्यसत्त्वान्न स्वरूपासिद्धिः । इदमुपलक्षणम् । विशेषपदमपि स्वरूपासिद्धिवारणायैव शब्दे शब्दभिन्नसामान्यगुणसामानाधिकरण्यसत्त्वादिति ध्येयम् ।

[१]ननु विशेषपदस्यान्तरपदस्य चानुक्तौ सामान्यवत्त्वे सति गुणासामानाधिकरण्ये सति बहिरिन्द्रियग्राह्यत्वरूपहेतोरप्रसिद्धिरेवेति कथं विशेषपदाऽन्तरपदयोरनुक्तौ स्वरूपासिद्धिः क्वचिद्धेतुप्रसिद्धिस्थले एव पक्षे तदभावसत्त्वे ग्रन्थकारादिभिः स्वरूपासिद्धिकथनादिति चेन्न ।

मीमांसकमते कालस्यापि षाडिन्द्रियवेद्यत्वेन तस्य चाऽश्रावत्वेन गुणासामानाधिकरण्यस्य द्रव्यत्वस्य च सत्त्वात्तत्रैव हेतोः प्रसिद्धिसम्भवात् । एवं च हेतोः पक्षमात्रवृत्तित्वे दृष्टान्ता-भावात्कथमेतादृशहेतुना नित्यत्वानुमानम्-इत्याशङ्कापि समाहिता । महाकालस्यैव मीमांसकमते दृष्टान्तत्वसम्भवात् ।

केचित्तु सामान्यलक्षणाजन्यप्रत्यक्षविषयतामादाय मनःक्रियायां व्यभिचारवारणाय बहि-पदस्य लौकिकविषयत्वार्थकतयाऽऽत्मन एव दृष्टान्तत्वसम्भवादित्याहुः ।

[२]अथाश्रुतशब्दे भागासिद्धिवारणाय बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मव-त्त्वादित्येव बहिरिन्द्रियग्राह्यत्वादित्यस्यार्थो वाच्यः, एवं च गुणत्वद्रव्यत्वादिकमादाय गगनम-नःसंयोगे आत्मनि च व्यभिचारतादवस्थ्यमिति चेन्न ।

सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणवृत्तिबहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छे-दकधर्मवत्त्वस्यैव हेतुत्वात्, नतु स्वातन्त्र्येण विशेषगुणान्तराऽसामानाधिकरण्यस्य बहिरिन्द्रि-यग्राह्यत्वस्य च द्वयोर्निवेशः, तथाच गुणत्वे द्रव्यत्वेऽपि बहिरिन्द्रियजन्यप्रत्यक्षविषयताव-च्छेदकत्वसत्त्वेऽपि विशेषगुणान्तरासमानाधिकरणावृत्तित्वविरहादेव न व्यभिचारावकाशः ।

केचित्तु उक्तभागासिद्धिवारणाय सामान्यवत्त्वे सति बहिरिन्द्रियग्राह्यत्वादिति दलद्वयस्य बहिरिन्द्रियग्राह्यतावच्छेदकजातिमत्त्वरूपार्थकत्वे तात्पर्यम्, पुनर्गगनादौ द्रव्यत्वजातिमादाय व्यभिचारवारणाय तादृशजातौ द्वीन्द्रियग्राह्यतानवच्छेदकत्वं विशेषणं देयमित्याहुः ।

शब्दोऽनित्य इति नैयायिकमतम्, तत्र शब्दत्वावच्छेदेन साध्यासिद्धेरुद्देश्यत्वम् । इन्द्रिया-

---

(१) स्वभिन्नत्वजातिपरमन्तरपदार्थः ।

**यद्वा यो यदीययावद्विशेषाभाववानित्यस्य यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां विशेषाभाववान् ( प्रत्येकावच्छिन्नप्रतियोगिताकयावदभाववान् ) स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः, तथा च संयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्त्वस्य पक्षे सत्त्वान्नासिद्धिर्न वा व्यर्थविशेषणत्वमिति ध्येयम् ।**

---

ग्राह्ये शब्दे भागासिद्धिवारणाय **बहिरिन्द्रियग्राह्येति** बहिरिन्द्रियग्राह्यतावच्छेदकधर्मपरम् । शब्दत्वे व्यभिचारवारणाय सामान्यवत्त्वे सतीति। गगने व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति । जलीयपरमाणुरूपे व्यभिचारवारणाय विशेषगुणान्तराऽसमानाधिकरणेति। नच तत्र बहिरिन्द्रियग्राह्यत्वदलाऽसत्त्वेन न व्यभिचार इति वाच्यम् । अश्रुतशब्दे भागासिद्धिवारणाय बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वस्य विवक्षणीयतया। जलीयपरमाणुरूपेऽपि रूपत्वजातिमादाय व्यभिचारतादवस्थ्यात् । नैयायिकमते कालस्यातीन्द्रियतया न तत्र व्यभिचार इति ध्येयम् ।

क्वचित्तु सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणैकमात्रवृत्तित्वादिति पाठः । तत्र सामान्यवत्त्वे सतीति न व्यावर्तकम् । एकमात्रवृत्तिगुणत्वस्य घटीयरूपे सत्त्वात्तत्र नित्यत्वासत्त्वाद् व्यभिचारः स्यादतो विशेषगुणान्तरासमानाधिकरणेति । विशेषगुणान्तरासामानाधिकरण्यस्य कालदिग्वृत्तिद्वित्वे सत्त्वाद् व्यभिचारवारणाय एकमात्रवृत्तित्वोपादानम् , तन्मते महाकालनिष्ठैकत्वे दृष्टान्तत्वम् । अत्र मनोनिष्ठपरत्वापरत्वे मनोनिष्ठवेगाख्यसंस्कारे च व्यभिचारवारणाय मनोभिन्नवृत्तित्वे सतीत्यपि देयम् । गुणत्वानुक्तौ तु मनःक्रियायां व्यभिचारः स्यादिति बोध्यम् ।

असिद्धिवारकविशेषणशून्यं कल्पान्तरमाह **यद्वेति** । तथाच यो यद्धर्मावच्छिन्नप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववान् स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः । संयोगत्वावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य संयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीत्याकारस्य यावदन्तर्गतस्य वृक्षेऽसत्त्वात्स्वरूपासिद्धिरतः प्रत्येकपदमुभयावृत्तित्वार्थकम्। **नासिद्धिर्नवा व्यर्थविशेषणत्वमिति ।**

[१] नन्वत्र प्रत्येकपदस्याऽसिद्धिवारकत्व सत्त्वात्कथं न व्यर्थविशेषणता, एवं यद्धर्म "संयोगत्व"निष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकताकतद्रूपानिष्ठप्रतियोगित्वावच्छिन्नाभावस्य वृक्षेऽसत्त्वेन तद्वारणाय यद्धर्मनिष्ठावच्छेदकतायां समवायसम्बन्धावच्छिन्नत्वं निवेश्यम् , एवं तत्प्रतियोगित्वनिष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य वृक्षेऽसत्त्वात्स्वरूपासिद्धिरतः प्रतियोगित्वनिष्ठावच्छेदकतायां स्वरूपसम्बन्धावच्छिन्नत्वं निवेश्यम् , एवं संयोगत्ववृक्षत्वत्वैतदन्यतरावच्छिन्नप्रतियोगितानिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य वृक्षेऽसत्त्वात्स्वरूपासिद्धिरतो यद्धर्मावच्छिन्नप्रतियोगितायां यद्धर्मेतरानवच्छिन्नत्वं निवेश्यम् , एवं च स्वरूपासिद्धिवारकविशेषणस्यात्रापि सत्त्वेन "नासिद्धिर्नवा व्यर्थविशेषणत्व"मितिग्रन्थाऽसंगतिरिति चेन्न ।

---

१। यद्धर्मावच्छिन्नप्रतियोगिताव्यापकः ☐ तद्धर्मावच्छिन्नाभाववानित्यर्थे बाधसत्त्वात् ;

यो (१)यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववान् स तद्धर्मावच्छिन्नाभाववानित्यर्थस्तु संयोगत्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य घटावृत्तिसंयोगत्ववृक्षान्यासमवेतत्वाद्यवच्छिन्नाभावस्य यावदन्तर्गतस्य वृक्षादौ स्वरूपासिद्धत्वादनुपादेयः। संयोगयावद्विशेषाभावा इति। ( मानं मान·

---

स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन व्यापकता बोध्या।

[२]ननु निरुक्तसम्बन्धेन प्रतियोगितायां सर्वपदार्थानां सत्त्वाद् व्यापकताघटकभेदप्रतियोगितावच्छेदकत्वाऽप्रसिद्धिरिति चेन्न।

स्ववृत्त्यभावनिरूपितप्रतियोगितानिरूपितस्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धेन प्रतियोगितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्योक्तत्वात्।

श्रीचरणास्तु स्वसमानाधिकरणाभावप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभाववत्त्वरूपं व्यापकत्वम्, व्यापकता च स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन, तथाच निरुक्तसम्बन्धेन प्रतियोगितात्वसमानाधिकरणाऽभावस्याप्रसिद्धावपि द्रव्यत्वत्वावच्छिन्नप्रतियोगितात्वसमानाधिकरणस्य निरुक्तसम्बन्धेन घटाभावस्य प्रसिद्धतया प्रतियोगितासम्बन्धेन द्रव्यत्वत्वावच्छिन्नप्रतियोगितात्वस्य घटादौ वृत्तितया द्रव्यत्वत्वावच्छिन्नप्रतियोगितात्वसमानाधिकरणाभावप्रतियोगित्वसम्बन्धेन संयोगत्वावच्छिन्नप्रतियोगितात्वसमानाधिकरणाभावप्रतियोगित्वसम्बन्धेन संयोगत्वावच्छिन्नप्रतियोगितात्वाभावस्य केवलान्वयितया वृक्षेऽपि सत्त्वान्निरुक्तसम्बन्धेन वृक्षादेः संयोगत्वावच्छिन्नप्रतियोगितात्वव्यापकत्वसम्भवादिति प्राहुः।

नव्यास्तु यद्धर्मावच्छिन्नप्रतियोगितात्वावच्छिन्नाभावत्वव्यापककूटत्वावच्छिन्नमेव हेतुः, एवं च व्यापकतानिवेशेनाऽभावस्य वैलक्षण्यान्न वैयर्थ्यमिति प्राहुः।

यतो न स्वरूपसिद्धिः अतो न व्यर्थविशेषणत्वमिति हेतुहेतुमद्भावप्रदर्शनपरोऽयं ग्रन्थः, असिद्धिवारकविशेषणस्यापि सार्थक्यादित्यपरे।

विशेषपदस्य न्यूनवृत्तिधर्मवदर्थकतामभ्युपगच्छतां मतमुपन्यस्य दूषयति **यो यद्धर्मन्यूनवृत्तीति**। तथाच संयोगत्वन्यूनवृत्तिर्यो धर्मस्तत्तत्संयोगत्वं तदवच्छिन्नप्रतियोगिताकयावदभाववान् यः स संयोगत्वावच्छिन्नप्रतियोगिताकाभाववानिति प्रकृतम्। न्यूनवृत्तित्वं चात्र स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। सत्तात्वस्य न्यूनवृत्तित्ववारणाय स्वसमानाधिकरणत्वे सतीति। गुणत्वस्य न्यूनवृत्तित्ववारणाय स्वसमानाधिकरणेत्यादिविशेष्यदलम्। **स्वरूपासिद्धत्वादिति**। घटवृत्तिसंयोगे घटावृत्तिसंयोगत्वस्य वृक्षान्यासमवेतत्वस्य च विरहेण संयोगत्वन्यूनवृत्तितया तदवच्छिन्नाभावस्य हेत्वन्तर्गततया वृक्षेऽभावादित्यर्थः। अत्र न्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वानिवेशेन घटावृत्तिसंयोगत्वस्य वारणसम्भवादुक्तम् वृक्षान्याऽसमवेतत्वेति। वे॰ स्वाश्रयवृत्तिवृत्तित्व-स्वानाश्रयवृ·

---

(१) अथात्र किं लाघवम्? न च स्वरूपासिद्धिवारकाविशेषणाऽप्रवेशेन लाघवमिति वाच्यम्। न्यूनवृत्तिपदस्य स्वरूपासिद्धिवारकत्वात् इति चेद्, स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वरूपोभयावृत्तित्वप्रवेशापेक्षया स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपन्यूनवृत्तित्वनिवेश एव लाघवादिति।

तावच्छेदकम्, आचार्यमतेनेदं वा ।(१)।

न च सर्वावयवावच्छेदेन वृक्षादौ गगनादेरेक एव संयोगो लाघवादि-

तिवृत्तित्वोभयसम्बन्धेन(२) । न च वृक्षाऽन्यासमवेतत्वस्य वृक्षत्ववृक्षवृत्तिरूपादावेव सत्त्वात् न संयोगत्वसामानाधिकरण्यमिति वाच्यम् । वृक्षद्वयसंयोगान्तर्भावेण तत्सत्त्वात्तस्य च वृक्षा-न्यासमवेतत्वात् ।

दीधितौ **मानमिति** । अनुमानविधया संयोगसामान्याभावे मानमित्यर्थः । लिङ्ग-ज्ञानस्य मानत्वे त्वाह **मानतावच्छेदकमिति** । विषयतयेति शेषः । **आचार्यमतेचे-ति** । तन्मते ज्ञायमानलिङ्गस्यैव मानत्वादिति भावः । न च सामान्यतो व्याप्त्या सामान्य-रूपेण तत्सिद्धावपि संयोगसामान्याभावत्वेन तदसिद्ध्या न प्रकृतसिद्धिरिति वाच्यम् । सामा-न्यरूपेण व्याप्तिज्ञानस्य विशेषरूपेण च पक्षधर्मताज्ञानस्य हेतुत्वात्, तथाच यज्जातिसमाना-धिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावसमानाधिकरणाभावप्रतियोगितानवच्छे-दकतज्जात्यवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नसमानाधिकरणसंयोगीयविशेषाभावकूटवान् वृक्ष इति परामर्शादेव वृक्षः संयोगसामान्याभाववानित्यनुमितिरिति ध्येयम् ।

ननु वृक्षादौ सर्वावयवावच्छेदेन वृत्तिराकाशसंयोगो व्याप्यवृत्तिरेव, अत एव च तस्यै-क्यम्, तथाच वृक्षत्वावच्छेदेन संयोगयावद्विशेषाभावान्तर्गतगगनसंयोगाभावविरहेण स्वरू-पासिद्धिरित्याशयेनाऽऽशङ्कते **नचेति** । **सर्वावयवावच्छेदेनेति** । एतत्कथनं च वृक्षे

---

(१) नास्ति चौ० मु० पुस्तकेऽयं ( ) कुण्डल्यन्तर्गतः पाठः ।

(२) तथाच घटाऽवृत्तिसंयोगत्वस्य वृक्षपटादिसंयोगद्वयवृत्तित्वान्न पक्षतावच्छेदकविशिष्टान्यत्वम्, अतो नञ्द्वयोपादानम्. अन्यथा वृक्षसमवेतत्वस्य वृक्षतदितरोभयवृत्तिसत्तावृत्तित्वेन पक्षतावच्छेदकवि-शिष्टान्यत्वविरहात्स्वरूपासिद्ध्यलग्नकतापत्तेः । एतेन वृत्तित्वमादायापि स्वरूपासिद्धिसम्भवे वृक्षान्यासमवेत-त्वपर्यन्तानुधावनं व्यर्थमित्यपि निरस्तम् ।

[१] अथ पक्षतावच्छेदकविशिष्टान्यत्वस्य वृक्षसंयोगनिष्ठतद्व्यक्तित्वेऽपि न सम्भवः, तस्य वृक्षान्यकप्यादि-वृत्तिवृत्तित्वात् । न च वृक्षद्वयसंयोगनिष्ठतद्व्यक्तित्वे एव तस्य सम्भव इति वाच्यम् । एतद्वृत्तित्वस्य पक्षताव-च्छेदकत्वे उक्तव्यक्तित्वेऽपि पक्षतावच्छेदकविशिष्टान्यत्वाऽसम्भवादिति चेन्न ।

वैशिष्ट्यस्य स्वविशिष्टवृत्तिवृत्तित्वघटितत्वेन विवक्षितत्वात् । वै० स्वानाश्रयत्व-स्वानाश्रयवृत्तिगुणानाश्रय-त्वोभयसम्बन्धेन, तथाच कप्यादेः स्वानाश्रयत्वेऽपि स्वानाश्रयवृत्तिसंयोगरूपगुणानाश्रयत्वविरहेण वृक्षसंयोग-निष्ठतद्व्यक्तित्वे विशिष्टान्यत्वसम्भवादिति ।

[२] अथ यद्धर्मन्यूनवृत्तिपदेन यद्धर्मसमानाधिकरणत्वे सति यद्धर्मवन्निष्ठनिरवच्छिन्नावच्छेदकताकप्रति-योगिताकभेदप्रतियोगितावच्छेदकत्वविवक्षणेनैव घटावृत्तिसंयोगत्ववृक्षान्यासमवेतत्वावच्छिन्नाभावमादाय स्वरू-पासिद्धिवारणसम्भवः । संयोगत्वसमानाधिकरणो यो घटावृत्तिसंयोगभेदः एवं वृक्षान्यासमवेतभेदः तदीयप्र-तियोगितावच्छेदकतायाः घटनिरूपितवृत्तित्वाभावत्वावच्छिन्नतया वृक्षान्यनिरूपितसमवायसम्बन्धावच्छिन्न-वृत्तित्वाभावत्वावच्छिन्नतया च निरवच्छिन्नत्वविरहात् । न च तत्तत्संयोगत्वस्य स्वन्यूनवृत्तित्वहानिः स्यादिति वाच्यम् । तत्तद्व्यक्तित्वपर्यवसायिनस्तत्तत्संयोगत्वस्याऽखण्डोपाधित्वस्वीकारात् । न च तथापि निरुक्तस्व-न्यूनवृत्तिवृत्तिकपिसंयोग-रूपान्यतरत्वावच्छिन्नाभावमादायाऽसिद्धितादवस्थ्यम्, अन्यतरत्वस्याप्यखण्डो-पाधित्वादिति वाच्यम् । स्वन्यूनवृत्तिपदेन स्वाभाववद्वृत्तिधर्मानवच्छिन्ना या स्वाधिकरणनिष्ठभेदीयप्रतियोगि-ता तन्निरूपितस्वरूपसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकत्वं वाच्यमतो न तादृशासिद्धितादवस्थ्यमिति चेन्न ।

वृक्षीयसंयोगमात्रवृत्त्यन्यतमत्वादेर्बुद्धावाऽसम्भवेन मदवच्छिन्नाभावमादाया स्वरूपासिद्ध्यापत्तेः । तत्संयोगत्वाऽन्यतरत्वादेरखण्डोपाधित्वे मानाभावाच्चेति ध्येयम् ।

ति तस्यैवाऽभावविरहात् संयोगयावद्विशेषाभाववत्त्वं पक्षे स्वरूपासिद्ध-मिति वाच्यम् । अतिप्रसङ्गभङ्गाय शाखादितत्तदवयवावच्छिन्नवृत्तिकसं-योगं प्रति तत्तदवयवत्वेन हेतुत्वस्याऽऽवश्यकतया वृक्षे व्याप्यवृत्तिगगन-संयोगस्याऽसम्भवादिति भावः ।

---

तत्तदवयवावच्छिन्नगगनसंयोगस्यैवैक्यप्रतिपादनार्थम् । न च वृक्षगगनसंयोगात् गगनघटसं-योगस्याप्यभेदोऽस्तु लाघवादिति वाच्यम् । सर्वेषां गगनसंयोगानामैक्ये यत्रैकक्रियया एकत्र संयोगनाशस्तत्र निष्क्रियेऽप्यपरत्र संयोगनाशापत्तेः, वृक्षविनाशात्तत्संयोगनाशे विद्यमान-घटादिष्वपि संयोगनाशापत्तेश्चेति(१) ।

ननु समवायेन तत्तत्संयोगं प्रति तादात्म्येन वृक्षत्वेन कारणत्वेऽन्वयव्यभिचारः स्यात्, तादात्म्येन वृक्षस्य मूलेऽसत्त्वात्तत्र च शाखावृत्तिकपिसंयोगाऽभावादतोऽवच्छे-दकतासम्बन्धेन तत्संयोगं प्रति तादात्म्येन तत्तदवयवत्वेन कारणत्वं वाच्यम्, एवञ्च विशि-ष्य कारणत्वे गगनसंयोगस्य निखिलवृक्षावयवावच्छिन्नतया तं प्रति तत्तदवयवत्वेनाऽनन्तकार-णत्वकल्पनापेक्षया वृक्षत्वेन द्रव्यत्वेन वा कारणत्वे लाघवम्, तथाच गगनसंयोगस्यैक्यं नि-ष्प्रत्यूहमिति चेत्तत्राह **अतिप्रसङ्गभङ्गायेति** । परस्परजन्ये व्यभिचारवारणायेत्यर्थः । अव-च्छेदकतासम्बन्धेन संयोगस्य मूलेऽपि सत्त्वेन तत्र तादात्म्येन शाखारूपकारणाभावेन व्य-तिरेकव्यभिचारवारणायेति यावत् । **आवश्यकतयेति** । तथाच मूलावच्छिन्नवृत्तिकसं-योगं प्रति मूलस्य कारणतया नोक्तव्यभिचारः । एवं च वृक्षत्वेनाऽतिरिक्तकार्यकारणभावकल्पन एव गौरवाद् गगनसंयोगोऽप्यव्याप्यवृत्तिरेव, न च नैको(२)ऽतो न स्वरूपासिद्धिरिति ।

दीधितौ **यत्तदर्थयोरननुगमादिति** । हेतुसाध्यघटकयत्तच्छब्दार्थयोः संयोगत्व-घटत्वावच्छिन्नयोरित्यर्थः । **अननुगमादिति** । एकरूपेण निवेशाऽसम्भवादित्यर्थः । य-

---

(१) न च क्रियया आश्रयनाशेन च संयोगनाशो न स्वीक्रियते लाघवादिति वाच्यम् । तथासति पाके-नाऽऽश्रयनाशतो वा रूपनाशस्याप्यप्रामाणिकत्वापातात्, एवं चैकरूपवादिन एव विजयेरन् अनुभवविरोधि-लाघवस्याऽकिञ्चित्करत्वादिति सिद्धम् । मम तु शाखादौ क्रियायां वृक्षेऽपि संयोगप्रतिद्वन्द्विविभागोत्पत्त्या निष्क्रियदेशावच्छिन्नोऽपि संयोगो नश्यत्येव।

(२) गगनसंयोगस्य लाघवेनैक्यं फलावच्छिन्नस्य तस्य शाखावच्छिन्नत्वे शाखायां फलस्याऽसत्त्वेन व्यभिचारः स्यात्, कार्यतावच्छेदककोटौ विभुसंयोगान्यत्वनिवेशे तु महागौरवमिति ।

[१] ननु अवच्छेदकतासम्बन्धेन तत्तदवयवावच्छिन्नवृत्तिकत्वविशिष्टसंयोगं प्रति तादात्म्येन तत्तदवय-वस्य हेतुत्वं वाच्यम्, तथाच संगत्यनुमितौ तत्तद्व्यक्तिविषयकत्वविशिष्टप्रत्यक्षस्य विषयतासम्बन्धेन तत्त-द्व्यक्तावेव स्वीकारात् तच्छाखावच्छिन्नवृत्तिताविशिष्टगगनसंयोगस्य शाखान्तरेऽसत्त्वेनाऽतिप्रसङ्गविरहाद् ग-गनसंयोगस्य नानात्वस्वीकारे प्रमाणाभाव इति चेन्न ।

लाघवेन तत्तदवयवावच्छिन्नवृत्तिकत्वोपलक्षितसंयोगं प्रति तादात्म्येन तत्तदवयवस्य कारणत्वमिति का-र्यकारणभावे गगनसंयोगस्यैकत्वेऽतिप्रसङ्गतादवस्थ्यात् । न च यत्र कपिक्रियया शाखावच्छेदेन वृक्षे सं-योग उत्पन्नस्तत्र स्वावच्छिन्नवृत्तिकत्वोपलक्षितसंयोगस्य निरुक्तसम्बन्धेन कपिचरणेऽपि सत्त्वात्तत्र तादात्म्येन शाखायाअभावाद्व्यभिचार इति वाच्यम् । अनुयोगितावच्छेदकसम्बन्धस्यैव कार्यतावच्छेदकसम्बन्धत्वात् ।

[१] न च कपिवृक्षोभयप्रतियोगिकसंयोगस्योभयानुयोगिकस्यानुयोगितावच्छेदकसम्बन्धेन कपिचरणे स-

प्राचां मते यत्तदर्थयोरनुगतत्वादाह एकावच्छेदेनेति । इदमुपाधेः साध

तत्पदयोः सर्वनामत्वेन यत्तद्भ्यां घटसंयोगयोरुपादातुं शक्यतया(१) घटविशेषाभावसंयोग-सामान्याभावयोर्व्याप्यभावेन विशेषव्याप्तौ पर्यवसानात्, तथाच घटविशेषाभावकूटघटसामा-न्याभावयोर्व्याप्तिः संयोगसामान्याभावसिद्धावनुपयोगित्वेन संयोगविशेषाभावे संयोगसामान्या-भावव्याप्तिश्चाग्रे निराकरिष्यमाणत्वान्नोक्तानुमानसम्भव इति भावः ।

यत्तदर्थयोरनुगतत्वादिति । बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने यत्त-त्पदयोरनुगतशक्तिरित्यन्यत्र व्यवस्थापितत्वादिति भावः ।

इदन्तु बोध्यम् । प्रकृते यत्त्वतत्त्वयोरनुगतत्वेऽपि न क्षतिः, जातिर्जातिमती जातित्वाद् घटत्ववदित्यनुमानादेवाऽभिमतसिद्धेः । जातिमत्ता च स्वतादात्म्य--स्वसमानाधिकरणोभया-वृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावव्यापकाभावप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन, त-थाच नानुगतत्वम् । एतादृशपरम्पराया अनभ्युपगमाभिप्रायेण यत्तदर्थयोरित्याद्युक्तमिति ध्येयम्(२) ।

---

स्वाच्छाखादेस्तत्राऽसत्त्वेन व्यभिचारापत्त्या तद्व्यक्तिनिष्ठावच्छेदकतासम्बन्धेन संयोग प्रति तदवयवव्यक्ते-स्तादात्म्येन हेतुत्वमित्युपगमे गगनसंयोगस्यैकत्वेऽपि न क्षतिरिति वाच्यम् । लाघवाद्विशेषरूपेण संसर्गत्वा-नभ्युपगमात् । तदवयवावच्छिन्नत्वोपलक्षितवृत्तिताविशिष्टसंयोगस्य तदवयव एव स्वीकारात्, निरूपकभेदे-न वृत्तिताया नानात्वात्, गगनसंयोगस्यैकत्वे तु निरूपकभेदेन वृत्तिताया अभेदेन मूलावच्छिन्नत्वोपलक्षि-तवृत्तिताविशिष्टसंयोगस्य शाखायामपि स्वीकारे बाधकाभावाद्व्यभिचार इति तस्य नानात्वमावश्यक-मिति ध्येयम् ।

[ १ ] न चाऽनुयोगितायाः कार्यतावच्छेदकसम्बन्धत्वोक्तावपि 'मूले प्राच्यां कपिसंयोग' इति प्रतीत्या एकस्यैव(१) कपिसंयोगस्य प्राचीदिगवच्छिन्नत्वमूलावच्छिन्नत्वयोः सत्त्वादनुयोगितावच्छेदकतास-म्बन्धेन मूले प्राग्दिशि च कपिसंयोगस्य वर्त्तमानतया व्यभिचारतादवस्थ्यम्, प्राग्दिशि अवयवरूप कारणाभावात्, एवं गगनसंयोगस्यैकत्वे व्याप्यवृत्तितयाऽवच्छेदकविरहेण मूलाद्यनवच्छिन्नत्वाच्च व्यभिचार-प्रसक्तिश्चेति वाच्यम् । कारणत्वस्य तत्तत्कार्यतावच्छेदकव्यापकसामानाधिकरण्यनिरूपकत्वरूपस्य वक्तव्य-त्वात्, कपिसंयोगत्वव्यापकतत्तदवयवनिरूपितवृत्तित्वरूपसामानाधिकरण्यनिरूपकत्वस्य च तत्तदवयवे स-त्त्वान्न व्यभिचार इति ।

( १ ) यत्पदेनैकधर्मोपादाने तत्पदेन तस्यैवोपादानमिति नियमाभावादिति ।

( २ ) अपरे तु अनुगतत्वे इति अनुगतकार्यकारी यो धर्मः स एव यत्त्वतत्त्वरूपो धर्मः, स च निखि-लजातौ वर्तते, तथाच यत्त्वादेर्घटत्वादीनिखिलजातावेव सत्त्वेन नाननुगतत्वदोष इति भावः । न च निखिल-जातौ यत्त्वस्याऽनुगततया घटवद्देशेऽपि घटसामान्याभावसिद्धिः स्यात् घटत्वनिष्ठयत्त्वाश्रयत्वस्य घटत्वे इव पटत्वेऽपि सत्त्वेन पटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावस्य तत्र सत्त्वेन तत्त्वा-श्रयीभूतघटत्वावच्छिन्नाभावस्यासत्त्वेन व्यभिचार इति वाच्यम् । अनुगतकार्यकारित्वस्याऽत एवोक्तत्वात्, तथाच यत्त्वाश्रयीभूतयत्किञ्चित्कुक्षौ धारणं तत्त्वाश्रयतद्व्यक्तेः साध्यकुक्षौ धारणमिति प्राचीनाशयः । तथाच यत्त्वादीनां निखिलजातौ सत्त्वेऽपि अनुगतकार्यकारित्वस्यापि पक्षादौ सत्त्वेन दोषाभावादिति वदन्ति ।

अन्ये तु यो यद्वृत्तितावान् स तन्निष्ठाभावप्रतियोगितावच्छेदकः, वृत्तिता च स्वसमानाधिकरणोभयावृ-त्तिधर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धावच्छिन्नेत्याहुः ।

---

(१) नचोक्तप्रतीतौ नैकसंयोगो विषय इति वाच्यम् । संयोगद्वयावगाहित्वे यत्र प्राच्यां मूले एकशरीरसं-योगः, प्रतीच्यां शाखायामपरशरीरसंयोगः तत्र प्रतीच्यां मूले शरीरसंयोग इति प्रतीत्यापत्तेः ।

नाव्यापकत्वरक्षायै । न चैवं तत्तत्संयोगाभावस्य गुणे व्याप्यवृत्तित्वात् एकावच्छेदेन साध्यव्यापकत्वं दुर्घटम् अव्याप्यवृत्तेरवच्छेदकानङ्गीकारादिति वाच्यम् । एकावच्छेदेनेत्यनेन निरवच्छिन्नवृत्तिकत्वविशिष्टस्य विवक्षितत्वात् । न च तथापि कपिसंयोगसामान्याभाववति

इदम्—एकावच्छेदेनेति विशेषणम् । साधनाऽव्यापकत्व(१)रक्षायै, अन्यथा हेतूपाध्योरैक्येन स्वस्मिन्स्वाऽव्यापकत्वन्न स्यादिति भावः । एकावच्छेदेनेत्यस्य यथाश्रुतार्थाभिप्रायेण शङ्कते नचेति । यत्किञ्चिदवच्छेदेनेति तस्य यथाश्रुतोऽर्थः । दुर्घटमिति(२) । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । साध्यभूतसंयोगसामान्याभावस्य गुणे सत्त्वेन तत्र यथोक्तोपाधिविरहान्न साध्यव्यापकत्वमिति शङ्कितुराशयः । विवक्षितत्वादिति । तथाच निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगयावद्विशेषाभाववत्त्वस्य विवक्षितत्वादित्यर्थः । साध्यव्यापकत्वं गुणे, द्रव्ये च हेतोः सत्त्वेन तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगयावद्विशेषाभाववत्त्वविरहेण साधनाव्यापकत्वं बोध्यम् ।

ननु उपाधेर्दूषकताबीजं व्याप्तिधीविरोधित्वम्, विरोधित्वं च न साक्षात्, किन्तु व्यभिचारानुमापकत्वेन, यथा धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोग उपाधिः, ततश्च वह्निर्धूमव्यभिचारी धूमव्यापकाऽऽर्द्रेन्धनसंयोगव्यभिचारित्वादित्यनुमानेन हेतौ साध्यव्यभिचारनिश्चये व्याप्तिज्ञानं प्रतिबध्यते इति सार्वजनीनम्, प्रकृते च संयोगसामान्याभावसंयोगविशेषाभावयोः सामान्यत एव व्याप्तिग्रहीतत्वेन तत्र सामान्यत एव साध्योपाध्योर्व्याप्तिनिश्चयस्य विरोधित्वं वक्तव्यम्, अन्यथा धूमोऽव्यापकमहानसीयतृणादिधर्मिकमहानसीयवह्निव्यापकतानिश्चयस्य व

(१) ननु निरवच्छिन्नवृत्तिकत्वार्थक-एकावच्छेदेनेति विशेषणानुपादानेऽपि संयोगयावद्विशेषाभाववत्त्वरूपोपाधेः साधनाव्यापकत्वमक्षतमेव, संयोगयावद्विशेषाभाववत्त्वस्याऽव्याप्यवृत्तित्वात्, साधनसमानाधिकरणाभावप्रतियोगित्वरूपाऽव्यापकत्वसत्त्वादिति चेन्न ।

साधनसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगित्वमेव साधनाऽव्यापकत्वम्, अन्यथा संयोगि द्रव्यत्वादित्यादिसद्धेतुस्थले संयोगयावद्विशेषाभावस्य वर्त्तमानत्वादुपाधित्वापत्तेः, प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकत्वसत्त्वात्, प्रतियोगिवैयधिकरण्याघटितसाधनाऽव्यापकत्वस्योक्तरीत्या सत्त्वाच्च । न च साध्यव्यापकत्वमपि प्रतियोगिवैयधिकरण्याघटितमेव, प्रयोजनविरहेण प्रतियोगिवैयधिकरण्यस्याऽनिवेशात्, व्यभिचारिणि अन्ततो व्यभिचारनिरूपकान्यतरत्वस्यैवोपाधित्वसम्भवादिति वाच्यम् । ईदृशरीत्या तादृशोपाधेः साधनाव्यापकत्वसम्भवेऽपि दूषकतायामनुपयोगात् ।

वस्तुतस्तु व्यापकताया द्वैविध्याद् भेदस्य व्याप्यवृत्तितानये संयोगयावद्विशेषाभाववद्भेदस्य वृक्षादावसत्त्वेन साधनसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वाभावव्यापकत्वस्य यावद्विशेषाभावेऽसत्त्वादेकावच्छेदेनेतीति ध्येयम् ।

(२) यथाश्रुते गुणनिष्ठायाः यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तितया अवच्छेदकविरहेण उपाधेः साध्यव्यापकत्वानिर्वाहात् । न च गुणादिनिष्ठाया यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तित्वेऽपि गुणत्वावच्छिन्नत्वमावश्यकम्, अन्यथा अधिकरणतावच्छेदकप्रकारकज्ञानाऽसम्भवेन गुणादौ तदभावग्रहासम्भवादिति वाच्यम् । अव्याप्यवृत्तितानियामकीभूतावच्छेदकताया अवच्छेद्यताया वा विवक्षितत्वात् । अन्यथा द्रव्यनिष्ठयावत्संयोगाभावाधिकरणताया द्रव्यत्वावच्छिन्नतया साधनाव्यापकत्वं न स्यात् । एवं च साध्यव्यापकतानिर्वाहाय यथाश्रुतार्थपरित्याग इत्यवधेयम् ।

वृक्षे निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्याऽसत्त्वात् उपाधेः साध्याऽव्यापकत्वमिति वाच्यम् । जात्यवच्छिन्नाभावस्यैवोक्तव्याप्तौ साध्यविधया प्रवेशात्, कपिसंयोगाभावस्य चाऽतथात्वेन तं प्रति तदीययावद्विशेषाभावस्य चोक्तरूपेणाऽव्यापकत्वेऽपि क्षत्यभावात् । न चाभिघातादिसंयोगसामान्याभावस्य वृक्षे सत्त्वात् तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्याऽसत्त्वादेवमपि उपाधेः साध्याव्यापकत्वमिति वाच्यम् । गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशात् ।

---

च्छित्वेन धूमत्वेन व्याप्तिबुद्धौ विरोधिता स्यात् , साध्योपाध्योः सामान्यतो व्याप्तिर्न सम्भवति कपिसंयोगसामान्याभाववति निरवच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोगयियावद्विशेषाभावकूटवत्त्वस्य व्यभिचरित्वादित्याशयेनाऽऽशङ्कते नचेति । उक्तव्याप्तौ साध्यविधया प्रवेशादिति । साध्यसाधनयोर्व्याप्तौ कम्बुग्रीवादिमत्त्वमादाय व्यभिचारवाणाय जात्यवच्छिन्नाभावस्योक्तत्वादित्यर्थः । जात्यवच्छिन्नाभावस्यैवेत्यनेन जातिप्रवेशस्य स्मारितत्वात् । अत एवोपाधिदानार्थं जात्यवच्छिन्नाभावप्रवेशो नोचित इत्याशङ्कापि निरस्ता । न च तथापि कपिसंयोगाभावस्य संयोगत्वरूपजात्यवच्छिन्नप्रतियोगिताकतया उपाधेः साध्याव्यापकत्वतादवस्थ्यमिति वाच्यम् । जातिमात्रावच्छिन्नप्रतियोगिताकाभावस्य(१) प्रवेशादिति ध्येयम् ।

अतथात्वेन–जातिमात्रावच्छिन्नप्रतियोगिताकत्वाभावेन । तं प्रति–कपिसंयोगाभावं प्रति । तदीययावद्विशेषाभावस्य–कपिसंयोगीययावद्विशेषाभावस्य । उक्तरूपेण–निरवच्छिन्नवृत्तिकत्वादिरूपेण, क्षत्यभावात् कपिसंयोगाभावस्य साध्यानन्तर्गतत्वेनेति यावत् ।

अभिघातसामान्याभावस्य जातिमात्रावच्छिन्नप्रतियोगिताकत्वेन साध्यान्तर्गततया तस्य च वृक्षे सत्त्वात्तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावस्याऽसत्त्वात्साध्योपाध्योर्व्याप्तिभङ्ग इत्याशङ्कते नचेति । तत्र च–वृक्षे च । तदीयेति । अभिघातीयेत्यर्थः । गुणविभाजकेति । एवंच अभिघातत्वस्य संयोगविभाजकत्वेन गुणविभाजकत्वाभावात् तदवच्छिन्नाभावस्यापि साध्यानन्तर्गतत्वेन न व्याप्तिभङ्ग इति भावः । गुणविभाजकजातित्वं च गुणत्वव्याप्यत्वे सति गुणत्वव्याप्यव्याप्यजातित्वम् , तच्च गुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिमदन्यजातित्वम् , जातिमत्ता च स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । वस्तुतस्तु गुणसूत्रजन्यबोधीयोद्देश्यतावच्छेदकत्वमेव गुणविभाजकत्वं बोध्यम् ।

[१] ननु उपाधिदानार्थं गुणविभाजकत्वनिवेशोऽयुक्त इति चेन्न ।

यैर्द्रव्ये संयोगसामान्याभावो नाङ्गीक्रियते तैर्यः संयोगसामान्याभाववान् स निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभाववानिति साध्योपाध्योः सामान्यव्याप्तिः स्वीक्रियते, एवं

---

(१) तदर्थश्च जातिगतैकत्ववृत्तिप्रतियोगिताकाभावः । वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, अन्यथा संयोगघटोभयाभावमादाय सिद्धसाधनं स्यादिति ।

केचित्तु एकावच्छेदेनेत्यस्य अवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यतासम्बन्धेन अभाववत्त्वेनेत्यर्थः, तथाच तद्विशिष्ट

च अभिघातसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्वविशिष्टाऽभिघातीययावद्विशेषाभावस्याऽसत्त्वेन व्यभिचारः स्यादतो जातौ गुणविभाजकत्वप्रवेश आवश्यक इति प्राचामाशयात्। न च तादृशनियमे मानाभाव इति वाच्यम्। उपाधिव्याप्यत्वेन हेतुना साध्ये पक्षावृत्तित्वसाधनमेवात्रोपाधिफलम्, तच्चोपाधिज्ञानं न प्रत्यक्षात्मकं निरवच्छिन्नवृत्तिकत्वतदीययावद्विशेषाभावस्यातीन्द्रियप्रतियोगिकतया तत्प्रत्यक्षाऽसम्भवादतो यो यज्जात्यवच्छिन्नाभाववान् स निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभाववानिति व्याप्तिर्वाच्या, तथा च गुणविभाजकजातेरप्रवेशे सामान्यव्याप्तिभङ्गापत्तेः, यावत्पर्यन्तमुपाधिज्ञानं न भवति तावत्पर्यन्तमुपाधिर्निष्फलैवेति संयोगसामान्याभावसाध्यके तस्या अकिंचित्करत्वापातादित्यभिप्रायेण साध्याव्यापकत्वमुक्तम्।

केचित्तु कम्बुग्रीवादिमत्त्वमादाय व्यभिचारवारणाय जात्युपादानं कृतम्। अत्र प्राचामयमभिप्रायः—यत्सम्बन्धेन स्वाधिकरणत्वं हेतुघटकं प्रविष्टम् तेन सम्बन्धेन तदवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावः साध्यविधया निविष्टः, नतु समवायसम्बन्धेन, जातिपदोपादानवैयर्थ्यापत्तेः, तथाच जात्युपादानेऽपि परम्परासम्बन्धेन कम्बुग्रीवात्वजातिमादाय व्यभिचारतादवस्थ्यम्। परम्परया कम्बुग्रीवात्वापेक्षया साक्षात्सम्बन्धेन घटत्वस्य लघुत्वात् तद्वारणाय गुणविभाजकपर्यन्तानुधावनम्। यद्यपि जात्युपादानेऽपि यज्जातिसामानाधिकरण्येत्यत्र समवायेनेति वक्तव्यम्, तेनैव कम्बुग्रीवात्ववारणसम्भवः, तथापि कपिसंयोगाभावे सिद्धसाधनवारणाय जातिमात्रावच्छिन्नाभावस्य निविष्टतया घ्राणग्राह्यगुणत्वसमानाधिकरणतत्तद्गन्धत्वावच्छिन्नाभावकूटवति घ्राह्यगन्धशून्ये परमाणौ गुणत्वमात्रावच्छिन्नाभावसत्त्वाद् व्यभिचारः स्यादतो गुणविभाजकत्वनिवेशः। वस्तुतः सामान्यव्याप्तौ सामान्यसम्बन्धस्य निवेशसम्भवे विशेषसम्बन्धनिवेशोऽनुचित इति प्राहुः (१)।

[२] अथ गुणविभाजकत्वनिवेशेऽपि ज्ञानादिविशेषाभावकूटहेतुना ज्ञानादिसामान्याभावसाधने उपाध्यभावान्न सर्वत्रोपाधिसम्भवः, घटाद्यवच्छेदेन ज्ञानसामान्याभाववति आत्मनि निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावासत्त्वादुपाधेः साध्याऽव्यापकत्वात् ज्ञानादेरव्याप्यवृत्तित्वस्य सर्वैः स्वीकृतत्वादिति चेन्न।

गुणविभाजकजातौ सविषयकान्यवृत्तित्वेनाऽपि विशेषणीयत्वात्।

केचित्त्वित्यारभ्य तच्चिन्त्यमित्यन्तः पाठः क्वाचित्कः। एवं चाऽवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकसंयोगाभावाधिकरणीभूतो यो देशः शाखामूलादिरूपः अवच्छेद्यत्वसम्ब-

(१) अपरे तु गुणविभाजकजात्यवच्छिन्नाभावसाध्यकानुमाने उपाधित्वेन गुणविभाजकजात्यवच्छिन्नाभावस्य वृक्षावृत्तित्वसिद्धौ सामान्यतो जात्यवच्छिन्नाभावसाध्यकानुमानस्य निरुपाधित्वेपि तद्बाधितविशेषबाधेन सामान्यसिद्धावपि गुणविभाजकजातीतरजात्यवच्छिन्नाभावसिद्धौ सिद्धसाधनापत्तेर्दुर्वारत्वादिति वदन्ति। तच्चिन्त्यम्। एवंसति संयोगाभावसाध्यकानुमाने उपाधिदाने संयोगाभावेतराभावसिद्ध्या सिद्धसाधनापत्तिसम्भवेन गुणविभाजकत्वपर्यन्तप्रयासो वृथेति विभावनीयम्।

च्छयावद्विशेषाभाववत्त्वमुपाधिरित्याहुः । तच्चिन्त्यम् । यत्तु एकावच्छेदेने- त्यस्य परस्परानवच्छेदकानवच्छेद्यवृत्तिकत्वविशिष्टेत्यर्थमाह । तन्न, व्या-

न्धावच्छिन्नप्रतियोगिता(१)कतादृशदेशाभावविशिष्टसंयोगयावद्विशेषाभाववत्त्वमुपाधिरित्यर्थः ।

यस्त्विति । अत्र परस्परशब्द एतत्संयोगाभावपरः । नञर्थोऽत्यन्ताभावः । स्वाभावा- वच्छेदकत्वसम्बन्धेन(२) तत्संयोगाभावविशिष्टो यो देशः स एव परस्परानवच्छेदको देशः, तथाच तत्तत्संयोगाभावानवच्छेदकीभूतदेशानवच्छिन्नवृत्तिकत्वविशिष्टतदयियावद्विशेषाभावव- त्त्वमुपाधिरित्यर्थः ।

नन्वत्र नञ्द्वयोपादानं किमर्थमिति चेन्न । तत्तत्संयोगाभावावच्छेदकान्तर्देशावच्छिन्नत्वस्य सर्वस्मिन्नेव तत्तत्संयोगाभावे सत्त्वादुपाधेः साधनाव्यापकत्वतादवस्थ्याभावात् । परस्पराव- च्छेदकं यद्यत्तदनवच्छिन्नत्वं तु न निवेश्यम् । तस्य निरवच्छिन्नत्वे एव पर्यवसानेन पूर्वक- ल्पाविशेषादिति ।

वायौ रूपसामान्याभावे साध्ये रूपविशेषाभावकूटहेतौ उपाधिर्न स्यात्, तत्तद्रूपादेर्व्या- प्यवृत्तितया तदभावस्यापि तथात्वेन तदवच्छेदकीभूतदेशस्याप्रसिद्धतया तदनवच्छेद- कस्याप्यप्रसिद्धत्वेनोपाधेरप्रसिद्धत्वादित्याशयेनाऽऽह तत्रैवेति । ननु प्रकृतेऽपि रूपविशेषा- भावकूटरूपोपाधेः साधनाऽव्यापकत्वाभावेन कथं तन्मतेऽपि उपाधिसम्भव इति चेन्न ।

---

(१) इदं च वृत्त्यनियामकसम्बन्धावच्छिन्नत्वं प्रतियोगितायामभ्युपेत्य, अनभ्युपगमे तु तादृशदेशावच्छे- द्यत्वस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाववदुपाधित्वाद्, तत्तत्संयोगाभावनिष्ठावच्छेदकतासम्बन्धाव- च्छिन्नप्रतियोगिताकाभाववधन्निष्ठावच्छेदकतानिरूपितत्वाभावनिवेशे च गगनादीनामपि यत्पदार्थतया तन्नि- ष्ठाव्याप्यवृत्तितानियामकावच्छेदकत्वाऽप्रसिद्ध्याऽभावाऽप्रसिद्धिः स्यादतोऽवच्छेद्यत्वाभावनिवेशः । वृत्त्यनिया- मकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेऽपि , अवच्छेद्यत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वा- भाव एव प्रमाविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको निवेश्य इति ध्येयम् ।

(२) एतेन – परस्परशब्देन विशेषाभावः, अवच्छेदकत्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियो- गिताकभेदवत्त्वसम्बन्धेन परस्पराविशिष्टानवच्छिन्नेत्यर्थः, तत्र स्वविशिष्टं शाखामूलादि तदवच्छिन्ना वृत्ति- ताऽन्तर्देशावच्छिन्नाऽभिघातसामान्याभावे इति गुणविभाजकजातिनिवेशोपयोग–इति निरस्तम् । वृक्षान्त- र्देशोऽपि विशेषाभावविशिष्ट एव, वृक्षान्तरवृत्तितदभिघाताभावस्यांऽश व्याप्यवृत्तितया स्वावच्छेदकताकप्रति- योगिताकभेदवत्त्वसम्बन्धेन तत्र सत्त्वेन साधनाव्यापकत्वादिति । स्वाभावावच्छेदकत्वसम्बन्धेन स्ववैशिष्ट्य- विवक्षणे तु वृक्षान्तर्वृत्त्यभिघाताभावो न स्वपदेन ध्रियते तदभावस्याऽवच्छेदकतासम्बन्धेनाऽसत्त्वात् । यत्तु स्वावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व—स्वप्रतियोग्यधिकरणसमवायि- त्वोभयसम्बन्धेन स्वविशिष्टानवच्छिन्नवृत्तिकत्वम्, अतो वृक्षान्तरवृत्तितादृशाभावो न धर्त्तुं शक्यते उभ- यसम्बन्धेन तत्राऽसत्त्वादिति । तदसत्, स्वप्रतियोग्यवच्छेदकत्वसम्बन्धमात्रेण स्ववैशिष्ट्यविवक्षणे तदपे- क्षयापि लाघवादिति ।

अनुगमस्तु– [क] यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगि- ताकपर्याप्तिककूटत्ववन्निरूपकताकाधिकरणत्वम्, कूटत्ववत्ता च स्वावच्छिन्नत्व—स्वाश्रयवत्त्वोभयसं०, स्वा- श्रयवत्ता च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेनेति [ख] अथवा तादृशकूटत्वविशिष्टाधिकरणत्वम् । वै० स्वावच्छिन्ननिरूपितत्व––विशिष्टानवच्छिन्नत्वोभयसं० । स्ववै० स्वाश्रययत्किञ्चिदभावाधिकरणतानवच्छेद- कत्वसम्बन्धेनेति । (ग) यद्वा तादृशाभावत्वविशिष्टाधिकरणताकूटवत्त्वमेवोपाधिः । वै० उक्तोभयसम्बन्धेन । यत्किञ्चित्त्वप्रवेशात्संयोगविशेषाभावत्वाश्रयाभावाधिकरणतानवच्छेदकदेशाऽप्रसिद्धिप्रयुक्तो नोपाध्यसम्भवो- ऽपीति ध्येयम् ।

एतेन–अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादिति-निरस्तम्, व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपाधित्वाच्च।

---

व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाऽप्रसिद्ध्या तदनवच्छेदकस्याप्यसम्भवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यदिति दिक्।

यत्तद्रूपां विना कृतमनुगतानुमानमाशङ्क्य निषेधति एतेनेति। वक्ष्यमाणदोषेणेत्यर्थः। व्यर्थेति। संयोगसामान्याभावस्य तन्मते केवलान्वयि(१)तया तत्साध्यतायामभाववत्त्वादित्यस्यैव लक्ष्यकत्वादिति भावः। अथाऽभाववत्त्वादिकमेव तर्हि हेतुरस्तु, अत आह अप्रयोजकत्वादिति। अनुकूलतर्कविरहादित्यर्थः। ननु निरुपाधिकत्वमेव प्रयोजकमत आह निर्गुणत्वादेरिति।

---

तत्रोपाधित्वं साध्यतावच्छेदकावच्छिन्नव्यापकत्वे सति साधनतावच्छेदकाश्रयाऽव्यापकत्वम्, नतु साधनतावच्छेदकावच्छिन्नाऽव्यापकत्वघटितम्, प्रयोजनाभावाद् गौरवाच्च, तथाच निरवच्छिन्नवृत्तिकत्वविशिष्टरूपविशेषाभावकूटरूपोपाधेर्घटादिनिष्ठाभावप्रतियोगित्वसत्त्वात्, साधनतावच्छेदकाश्रयसमानाधिकरणाभावप्रतियोगित्वमक्षतमेव। न चोक्तरूपस्योपाधित्वे द्रव्यत्वादिसाध्यकविशिष्टसत्तादिहेतोः सोपाधित्वापत्तिः, तत्र निरुक्तसाध्यव्यापकसाधनाव्यापकद्रव्यत्वरूपोपाधेर्हेतौ सत्त्वादिति वाच्यम्। विशिष्टसत्तायाः शुद्धसमवायेन हेतुतायां द्रव्यत्वव्यभिचारितया तत्रोपाधित्वस्येष्टत्वात्। विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशिष्टप्रतियोगिकत्वस्यैव संसर्गतया भानात्। यत्र विशिष्टप्रतियोगिकत्वविशिष्टसमवायेन तस्य हेतुता तत्रैव विशिष्टसत्तायां द्रव्यत्वव्याप्यत्वव्यवहारात्, तत्र साध्यव्यापकद्रव्यत्वादेः प्रकृतहेतुतावच्छेदकसम्बन्धेन साधनाऽव्यापकत्वविरहादेव सोपाधित्वापत्त्यसम्भवादिति ध्येयम्।

व्याप्यवृत्तिरूपादीनामिति। इदं च–कालिकाऽव्याप्यवृत्तित्वं न गुणादीनाम्–इत्यभिप्रायेण। एतेना–ऽभिघातसामान्याभावसाध्यकस्थले साध्याव्यापकत्वेनोपाध्यसत्त्वेऽपि न क्षतिः, संयोगसामान्याभावसाध्यकस्थले एवोपाधिसत्त्वेन दुष्टत्वोपपत्तेः, एवं च जातौ गुणविभाजकत्वप्रवेशो व्यर्थः–इति परास्तम्। यस्त्वित्यादिग्रन्थानुत्थानापत्तेः। मन्मते तु गुणविभाजकत्वाप्रवेशप्रयुक्तलाघवेनैव प्रवृत्तेरिति। यदि तु स्वतन्त्रोऽयं यस्त्वित्यादिग्रन्थः, तथापि व्याप्यवृत्तिरूपादीनामित्यनेन साध्याव्यापकत्वं वदतां ग्रन्थकृतामुक्तेरनुपपत्तिरतो दैशिकाव्याप्यवृत्तित्वमेवेति सूचितम्।

दीधितौ संयोगसामान्याभाववानित्यादि। एतद्व्याप्तिनिष्कर्षोऽपि पूर्ववद्बोध्यः। इत्यस्यैवेति एवकारेणेतरांशस्य व्यवच्छेदः। न च पूर्वहेतावपीदं कुतो नोक्तमिति वाच्यम्। तत्र रूपत्वादिघटितहेतावितरांशाऽनिवेशे व्यभिचारात्। निरुपाधिकत्वमेवेति।

---

(१) अथ परमाणुद्वयसंयोगस्याभावो परमाणौ न सम्भवति, तस्य निरवयवत्वात्, एवञ्च संयोगस्य केवलान्वयित्वाभावे परमाणावेव व्यभिचारणाय हेतुविशेषणसार्थक्यसम्भवात्कथं वैयर्थ्यमुक्तमिति चेन्न। परमाणावपि दिग्विशेषावच्छेदेन संयोगाभावसत्त्वात्, उक्तञ्चैतदुपस्कारे शङ्करमिश्रपादैः।

न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वम् , गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात् । यथा च घटपूर्ववर्त्ति-

---

आदिना द्रव्यभिन्नत्वादेः परिग्रहः । अत्र यद्यपि निर्गुणत्वोपाधेः स्वाभावेन साध्याभावोन्नायकतया न दोषत्वम् , संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वात् , नापि व्यभिचारोन्नायकतया तत एव, तथापि स्वव्याप्यत्वेन साध्यस्य पक्षवृत्तित्वाभावोन्नायकतया दूषकत्वं बोध्यम् । संयोगसामान्याभावो न वृक्षवृत्तिर्निर्गुणत्वव्याप्यत्वादित्यनुमानेनाऽपि वृक्षः संयोगसामान्याभाववानित्यनुमितेः प्रतिरोधादिति ध्येयम् ।

ननु यो यद्धर्मस्यानवच्छेदकः स तदभावस्याऽवच्छेदक इति व्याप्त्यैव वृक्षत्वादेः संयोगादीनामभावावच्छेदकत्वं सेत्स्यतीति आशङ्क्य निषेधति नचेति । गुणादीति(१)। तथाच व्यभिचारान्नोक्तव्याप्तिरिति भावः । ननु वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यस्यानवच्छेदकत्वादिति विशिष्यैव व्याप्तिर्वाच्या प्रमेयत्वसत्वादेः पक्षसमत्वात् , अतः स्व-

---

संयोगयावद्विशेषाभावो यदि संयोगसामान्याभावव्यभिचारी स्यात्तदा उपाध्यभाववान्न स्यादित्यादितर्क एव प्रयोजक इत्यर्थः । स एव नास्तीत्याह निर्गुणत्वादेरितीति ।

ननु निर्गुणत्वं यदि गुणसामान्याभाववत्वं तदा न साधनाऽव्यापकत्वं संयोगाभाववद्स्यापि द्रव्येऽङ्गीकारसम्भवादत आह आदिनेति । अत्र यद्यपीति । स्वाभावेन–उपाध्यभावेन । साध्यभावोन्नायकतया—साध्याभावानुमापकतया । अनुमानं च वृक्षो न संयोगसामान्याभाववान् निर्गुणत्वाभावादित्याकारकम् । व्यभिचारोन्नायकतयेति । संयोगयावद्विशेषाभाववत्वं संयोगसामान्याभावव्यभिचारि निर्गुणत्वव्यभिचारित्वादिति व्यभिचारानुमानमपि न सम्भवतीत्यर्थः । तत एव–सिद्धसाधनादेवेति यावत् । न च प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपव्यभिचारानुमाने न सिद्धसाधनमिति वाच्यम् । वृक्षे संयोगसामान्याभावसन्देहदशायां तस्य व्याप्यनिर्णयेनाऽप्रसिद्ध्या तत्साधनासम्भवादिति ।

तथाचेति । आप्तेरापाद्यव्यतिरेकनिश्चयाधीनतया प्रसङ्गादित्युक्त्या व्यभिचारलाभ इति भावः । नन्वयं हेतुर्व्यभिचारी संयोगसामान्याभावावच्छेदकत्वाभाववति प्रमेयत्वे संयोगसामान्यानवच्छेदकत्वसत्वादत आह प्रमेयत्वसत्वादेरिति । पक्षसमत्वादिति । तथाच न हि पक्षे पक्षसमे वा व्यभिचारो दोषः सन्दिग्धानैकान्तिकत्वस्येष्टत्वादिति हृदयम् । इदं च साध्याभाववत्वांशे निश्चयरूपं दोषांशे संशयसाधारणं व्यभिचारज्ञानं विरोधीति मतेन । नन्वत्र प्रमेयत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादित्यनुमानेन प्र-

---

(१) घटादौ द्रव्यत्वावच्छेदेन घटत्वाभावप्रसङ्गस्तु न सम्भवति घटत्वादेर्व्याप्यवृत्तितया तदवच्छेदकाऽप्रसिद्ध्या तदनवच्छेदकत्वरूपापादकाप्रसिद्धेरतो गुणाद्यनवच्छेदकेत्याद्युक्तम् , गुणत्वाद्याश्रयस्य संयोगादेरवच्छेदकत्वप्रसिद्ध्या न गुणत्वाद्यवच्छिन्नाभावावच्छेदकत्वापादकाऽप्रसिद्धिरिति भावः ।

त्वस्य प्रतिदण्डं वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेऽपि दण्डत्व धूमत्वं वा तत्सामान्यस्यावच्छेदकं तथैव संयोगसामान्यस्यावच्छेदकं द्रव्य-त्वादिकमित्यस्याऽपि सुवचत्वाच्चेति सम्प्रदायविदः ।

---

रूपासिद्धिमाह–यथाचेति(१) । प्रतिदण्डमिति । भिन्नत्वेऽपीति परेणान्वयः । ननु अव्यवहितपूर्ववर्त्तिताया अवच्छेदकं न दण्डत्वम् अतिप्रसङ्गात्, किन्तु अव्यवहितपूर्ववर्त्तिजातीयतायाः, सा च न भिन्ना, अतः संयोगस्थल एवा-नुरूपं दृष्टान्तमाह वह्नीति । तत्सामान्यस्येति । घटपूर्ववर्त्तित्वसामान्यस्य वह्नि-सामानाधिकरण्यसामान्यस्य चेत्यर्थः । केचित्तु कथितव्याप्तावप्रयोजक-त्वमन्यथा तदभावानवच्छेदकत्वेन हेतुनाऽवच्छेदकत्वमेव कुतो न वृक्ष-त्वादेः साध्यते, वृक्षत्वाद्यवच्छेदेन तत्तत्संयोगव्यक्तीनामसत्त्वेऽपि संयोग सामान्यस्य सम्भवादित्यभिप्रायकोऽयं ग्रन्थ इत्याहुः ।

---

मेयत्वावच्छेदेन साध्यसिद्धौ वृक्षेऽपि तत्सिद्धेरावश्यकत्वेन वृक्षे तत्साधनं ग्रन्थकृतामनुचित-मिति चेन्न । प्रमेयत्वं हि प्रमाविषयत्वम्, तच्च विषयभेदेन भिन्नमिति द्रव्यवृत्तिप्रमेयत्वस्य पक्षत्वे स्वरूपासिद्धिः, गुणादिनिष्ठस्य तथात्वे सिद्धसाधनापत्त्या वृक्षत्वावच्छेदेन तत्साधनात् । न च गगनाभाव एव पक्षः किन्न कृत इति वाच्यम् । तस्याप्यधिकरणभेदेन भिन्नत्वात् । न च सत्तैव तथास्त्विति वाच्यम् । सत्ताया दीधितिकृन्मतेऽस्वीकारात् ।

दीधितौ घटपूर्ववर्त्तित्वस्येति । दण्डनिष्ठघटकारणताघटकघटाव्यवहितपूर्ववर्त्तित्वस्येत्य-र्थः । भिन्नत्वेऽपि दण्डत्वं तत्सामान्यस्यावच्छेदकमित्यग्रिमेणान्वयः । अव्यवहितपूर्ववर्त्तिजा-तीयताया इति । तच्चाऽव्यवहितप्राक्कालवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । अनु-रूपं दृष्टान्तम्–प्रत्येकातिप्रसक्तस्य सामान्यानतिप्रसक्तत्वेन सामान्यस्यावच्छेदकं दृष्टान्तान्त-रम् । वह्निसामानाधिकरण्यस्येति । प्रतिधूमं भिन्नत्वेऽपि धूमत्वं तत्सामान्यस्याऽव-च्छेदकमित्यन्वयः । तत्पदेन वह्निसामानाधिकरण्यपरामर्शः । धूमत्वस्य तदनवच्छेदकत्वे वह्निव्याप्यतावच्छेदकत्वानुपपत्तिः स्यात् ।

दीधितौ संयोगसामान्यस्येति । वृक्षादौ संयोगस्य भिन्नत्वेऽपीत्यादि । द्रव्य-त्वादीति । आदिना वृक्षत्वपरिग्रहः । सुवचत्वादिति । तथाच वृक्षत्वादौ संयोगानव-च्छेदकत्वहेतुना संयोगाभावावच्छेदकत्वं साधनीयम्, तच्च स्वरूपासिद्ध्या न सम्भवतीति भावः । अनुकूलतर्कविरहस्थले साध्याभाववत्त्वांशे संशयात्मकव्यभिचारज्ञानमपि प्रति-बन्धकमित्याशयेनाह केचित्त्विति । दीधितौ सम्प्रदायविद इति । कर्माणि च सं-योगाभावः प्रतियोग्यसमानाधिकरण इति वक्ष्यमाणमूलाऽसङ्गतिरत्रास्वरसः ।

---

(१) केचित्तु यद्धर्माश्रयानवच्छेदकमित्यत्र यत्पदेन व्याप्यवृत्त्यवृत्तिधर्म एव विवक्षणीयः, गुणत्वादेश्च व्याप्यवृत्तिरूपादिवृत्तितया तदाश्रयानवच्छेदकत्वस्य न तदवच्छिन्नाभावावच्छेदकतापादकत्वमिति व्यभि-चारवारणेऽपि वृक्षत्वादौ संयोगसामान्याभावावच्छेदकत्वसाधकसंयोगसामान्यानवच्छेदकत्वहेतोरासिद्धिमाह यथा चेत्यादिनेत्याहुः ।

नवीनास्तूत्पत्तिकालावच्छेदेन घटादौ गुणस्य, प्रलयावच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्तते, तथा धूमवत्यपि विरहो दहनस्य, 'इह पर्वते नितम्बे हुताशनो न शिखरे इति प्रतीतेः संयोगेन द्रव्यस्यापि अव्या·

---

गुणस्येति । सामान्याभाव इति परेणाऽन्वयः । ननु आद्यक्षणे घटे गुणो नास्तीति प्रत्यक्षमसम्भवि संनिकर्षाद्यभावात्, प्रथमक्षणे घटादौ गुणो नास्तीति व्यवहारादिकञ्च सन्दिग्धप्रामाण्यकम्, अतः स्थलान्तरमाह प्रलयावच्छेदेनेति । तदानीं जन्यभावसत्त्वे प्रलय एव व्याहन्येत इति भावः ।

---

सामान्याभाव इतीति । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वस्य दूषितत्वादिति भावः । तथाच संयोगत्वव्यापकगुणत्वावच्छिन्नाभावस्य सत्त्वे संयोगाभावस्य सुतरां सत्त्वं सूचितम् । ननु उत्पत्तिकालावच्छेदेन घटादौ गुणसामान्याभावे मानाभावः । न च तत्र प्रत्यक्षं प्रमाणं सम्भवति, सन्निकर्षाभावात्, संयुक्तविशेषणतायाः सन्निकर्षतया संयोगाऽभावेन तस्या अप्यभावा(१)दित्याशङ्कते नन्विति । व्यवहारेति । शब्देत्यर्थः । सन्दिग्धप्रामाण्यकमिति । आप्तोक्तत्वानिश्चयेनेत्यादि ।

प्रलयावच्छेदेनेतीति । महाप्रलयावच्छेदेनेत्यर्थः । जन्यभावानधिकरणस्य सुतरां सं·

---

(१) न च रूपादिवृत्त्यभावप्रत्यक्षकारणत्वेन क्लृप्ता या संयुक्तसमवेतविशेषणता सैवाऽत्र सन्निकर्ष इति वाच्यम् । तथापि आत्मवृत्त्यभावप्रत्यक्षहेतुत्वेन क्लृप्तायाः संयुक्तविशेषणतायाः हेतुतया तदभावेन तत्प्रत्यक्षाऽसम्भवात् । परमाणुरूपाद्यभावप्रत्यक्षवारणाय संयुक्तांशे महत्त्वस्याऽवश्यं निवेशनीयतया घटवृत्त्यभावप्रत्यक्षानिर्वाहेण तत्कार्यतावच्छेदककोटौ समवेतांशे द्रव्यान्यत्वनिवेशस्याऽऽवश्यकतया तेन द्रव्यवृत्त्यभावप्रत्यक्षस्यासंग्रहेण इन्द्रियसंयुक्तविशेषणताया एव द्रव्यवृत्त्यभावप्रत्यक्षजनकत्वाच्च । न च रूपादिमति रूपाद्युत्पत्तिवारणाय रूपादिकं प्रति रूपाद्यभावत्वेन हेतुत्वस्यावश्यकत्वेन तदानीं तत्र रूपाद्यभावसिद्धौ गुणसामान्याभावोऽप्यर्थसिद्ध एवेति वाच्यम् । एवमपि संयोगादेरुत्पादेन संयोगादिकं प्रति संयोगाद्यभावस्याहेतुतया गुणसामान्याभावसिद्धेरसम्भवात् । न च जन्यैकत्वहेतुभूतस्य एकत्वत्वावच्छिन्नाभावस्यावश्यकतया तस्यैव स्वसमनियतगुणसामान्याभावरूपतया तत्सिद्धिरिति वाच्यम् । तादृशैकत्वाभावद्रव्यत्वाभावरूपत्वात्, अन्यथा परिमाणाभावादिभिः समं विनिगमनाविरहप्रसङ्गात् ।

अथ कार्यकारणभावानुरोधेन उत्पत्तिकालावच्छेदेन घटादौ गुणसामान्याभावस्वीकार आवश्यकः, तथाहि—कारणत्वं कार्याऽव्यवहितपूर्ववर्त्तित्वम्, एवं चोत्पत्तिक्षणावच्छिन्नो घटो गुणसामान्याभाववान् गुणसमवायिकारणत्वादित्यनुमानं फलितमिति चेन्न । द्व्यणुकोत्पत्तौ अवयवद्वयसंयोगस्याऽसमवायिकारणतया तदाश्रयतयाऽवयवस्य समवायिकारणस्य प्राक् सत्त्वमस्तु, असमवायिकारणगुणजन्ये गुणे समवायिकारणं कार्यसहभावेनैवाऽपेक्ष्यते इत्यप्रयोजकत्वशङ्काकवलितत्वादनुमानस्येति ध्येयम् ।

प्रलयस्यैव व्याहन्येतेति । भावकार्यत्वं स्वाश्रयप्रागभावानधिकरणकालवृत्तिध्वंसप्रतियोगिवृत्ति स्वाश्रयानधिकरणस्वाश्रयप्रागभावासमानकालीनवृत्तिध्वंसप्रतियोगिवृत्ति वा कार्यैकवृत्तित्वात् चैत्रत्ववदित्यनुमानस्यैव प्रलये प्रमाणतया तेनैव कार्यानधिकरणतयैव तत्सिद्धेः तदभावे प्रलयत्वस्यैवाऽसिद्धिप्रसङ्गादिति भावः ।

मानाभावादिति । स्वरूपस्याननुगततया दृष्टान्तपक्षयोरनुगतसाध्याभावेनाऽनुमानाऽसम्भवात्, आगमस्य च तात्पर्याऽनिर्णयादिना सन्दिग्धार्थतयाऽप्रामाण्यादिति भावः ।

प्यवृत्तित्वात् , वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो ऽव्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वाच्च ।

एवं प्रतियोगिमतोरपि कालदेशयोर्देशकालभेदावच्छेदेन तदभावः, तथा च तत्तत्साध्यकाऽव्याप्तिवारणाय तत् ।

---

ननु महाप्रलये मानाभावात्तदवच्छेदेनेत्ययुक्तमत आह तथेति । ननु उक्तप्रतीतिः पर्वतवृत्तिहुताशनावच्छेदकत्वाभावं शिखरे, शिखरावच्छिन्नपर्वतवृत्तित्वाभावं वा वह्न्यंशेऽवगाहते न तु पर्वते हुताशनाभावमिति यदि ब्रूयात्तदाप्याह वृत्तेरिति । वृत्तेः सम्बन्धस्य, वृत्तिमतः-सम्बन्धवतः । तथा च यो यदवच्छेदेन यदीययत्सम्बन्धाभाववान् स तदवच्छेदेन तत्सम्बन्धावच्छिन्नतदभाववान् इति व्याप्त्या शिखरावच्छेदेन संयोगसम्बन्धावच्छिन्नवह्न्यभावसिद्धिरिति भावः ।

ननु उक्तव्याप्तावप्रयोजकत्वम् , अन्यथा तुल्यन्यायेन यो यदीययत्सम्बन्धवान् स तत्सम्बन्धेन तद्वानितिव्याप्त्याऽपि(१) कुण्डादिसंयोगाभाववत्त्वमिति भावः । 'इह पर्वते नितम्बे हुताशनो न शिखरे' इति वाक्यात् शिखरावच्छिन्नपर्वतनिरूपितवृत्तित्वाभाववान् हुताशनः, तुल्यवित्तिवेद्यतया वा पर्वतवृत्तिहुताशनावच्छेदकत्वाभाववच्छिखरमिति बोधो जायते प्रथमान्तार्थमुख्यविशेष्यकत्वानुरोधेन पर्वतो वह्न्यभाववानिति बोधो न भवति, तथाच पर्वते वह्न्यभावसत्त्वे न मानमिति भावः । नन्वेवमभावस्य कुत्राप्यवृत्तित्वं न स्यादित्यस्वरसादाह यदि ब्रूयादिति । सम्बन्धसत्तायाः सम्बन्धिसत्ताप्रयोजकतया प्रयोजकविरहे प्रयोज्यविरहस्याऽऽवश्यकत्वमित्याशयेनाह तथा-चेति । पर्वतः शिखरावच्छेदेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववान् शिखरावच्छेदेन वह्निसंयोगाभाववत्त्वादित्यनुमानं फलितम् ।

अन्यथा-उक्तव्याप्तेः सप्रयोजकत्वोपगमे । तुल्यन्यायेनेति । प्रयोजकाभावस्य कार्याभावे इव असाधारणप्रयोजकस्य कार्येऽपि नियामकतया एतद्व्याप्तेरपि सप्रयोजकत्वं स्यात् ।

---

(१) नच रूपसमवायवति वायौ रूपासत्त्वेन व्यभिचार इति वाच्यम् । समवायस्य नानात्वोपगमात् बदरादेरित्यत्राऽऽदिपदग्राह्यवायावपि रूपापत्तिदानाच्च ।

केचित्तु यो यन्निरूपितत्वविशिष्टसम्बन्धवान् स तत्सम्बन्धेन तद्वानिति व्याप्तिः । सम्बन्धवत्ता च अनुयोगितासम्बन्धेन । एवं च रूपसमवायी वायुरित्यप्रत्ययाद्रूपनिरूपितत्वविशिष्टसमवायानुयोगित्वं वायौ न स्वीक्रियते, स्वीक्रियते च कुण्डनिरूपितत्वविशिष्टसंयोगानुयोगित्वं बदरे, कुण्डसंयोगी बदर इति प्रत्ययात् । नापि सम्बन्धादिपदोत्तरमत्वर्थीयस्य प्रतियोगित्वमर्थः । घटसमवायि रूपमित्यप्रत्ययादित्याहुः । अथ सम्बन्धिसत्तायाः सम्बन्धसत्ताप्रयोज्यत्वानभ्युपगमे ह्रदादौ न वह्निः पर्वते त्वस्तीत्येतन्नियमो न स्यात् । सत्यम् सम्बन्धसत्ताधीनत्वपक्षेऽपि सम्बन्धस्याऽसम्बद्धस्य नियामकत्वे उक्तदोषतादवस्थ्यात् सम्बद्धस्य तथात्वे चाऽनवस्थापातात् , अतः सम्बन्धस्य स्वरूपतो नियामकत्वं वाच्यम् सम्बन्धिसत्ताया अपि स्वरूपतः प्रयोज्यत्वं वाच्यम् , रूपान्तरेण प्रयोज्यप्रयोजकभावयोरेकत्राविरोधात् । संयोगसमवायादीनां सम्बन्धत्वन्तु विशिष्टानुभवबलाल्लाघवाच्चाश्रियते इति ।

योगिनो बदरादेः संयोगेन कुण्डादिमत्त्वापत्तेरित्युक्तावाह–एवमिति । भेदः–विशेषः । 'घटवत्यपि काले इदानीं तन्तौ न घट' इति प्रतीत्या तन्त्ववच्छेदेन एतत्काले घटाभावः, तथा घटवत्यपि कपाले घटनाशदशायामिदानीमिह कपाले न घट इत्यनुभवात् एतत्कालावच्छेदेन कपाले घटसामान्याभावः सिद्ध्यति । न 'चेदानीं तन्तुषु न घट' इत्यादिप्रतीतेरेतत्कालावच्छेदेन तन्तुष्वेव घटाभावो विषयो ननु तन्त्ववच्छेदेनैतत्काले तथा इति वाच्यम् । तन्तुषु घटाभावस्य व्याप्यवृत्तितया एतत्कालस्य तदवच्छेदकत्वावगाहने उक्तप्रतीतेर्भ्रमत्वापातात् । न च तथापि एतत्कालवृत्तिघटाभाव एव तन्तुषु भासतान्तत्रेति वाच्यम् । कालस्य प्रतियोगिकुक्षावग्रहेऽपि तादृशप्रतीतेस्तन्त्ववच्छेदेन समये घटाभावावगाहित्वस्यानुभवसिद्धत्वादिति भावः । तथाचेति । गुणवत् संयोगवद्वा द्रव्यत्वात्, वह्निमान्

---

केचित्तु वृत्तेः समवायस्य व्याप्यवृत्तित्वेऽपि वृत्तिमतः संयोगादेर्यथाऽव्याप्यवृत्तित्वम्, तथा वृत्तेरव्याप्यवृत्तित्वेऽपि वृत्तिमतो व्याप्यवृत्तित्वं स्यादित्यत आह दीधितौ एवमितीत्याहुः । तन्न, तत्राप्यवच्छिन्नसमवायस्यैव वृत्तित्वात्, तस्य च मूलादावभावात् । एवं समवायसम्बन्धेनापि द्रव्यस्य दैशिकमव्याप्यवृत्तित्वम्, 'दशायां न पट' इति प्रत्ययादिति ध्येयम् ।

विशेष इति । तथाच प्रतियोगिमति काले देशविशेषावच्छेदेन, प्रतियोगिमति देशे कालविशेषावच्छेदेन तदभावः । तदेवाह घटवत्यपि काले इति ।

तन्तुष्वेव घटाभावो विषय इति । न चाऽत्र विनिगमकाऽभाव इति वाच्यम् । स्वारसिकोक्तप्रतीतेः क्लृप्तेन तन्तुनिष्ठघटाभावेन विषयपर्यवसानसम्भवेऽक्लृप्तैतत्कालवृत्तिघटाभावविषयकत्वस्यान्याय्यताया एव विनिगमकत्वात् ।

तदवच्छेदकत्वावगाहने–तन्त्ववच्छेदकत्वावगाहने । ननु तत्त्ववच्छेदेनैतत्काले इति । उक्तप्रतीतेः–इदानीन्तन्तुषु न घट इति प्रतीतेः । भ्रमत्वापातादिति । ननु कथं भ्रमत्वम्, तदभाववति तत्प्रकारकत्वस्य तत्राऽसम्भवात् तन्तुषु घटाभावस्य व्याप्यवृत्तितया तदवच्छेदकाऽप्रसिद्धया तदवच्छेदकत्वाभावस्याप्यसिद्धत्वादिति चेन्न । तन्तुवृत्तिघटाभावस्य एतत्कालावच्छिन्नत्वावगाहने न भ्रमत्वम्, किन्तु एतत्कालनिष्ठावच्छेदकतायां तन्तुवृत्तिघटाभावीयत्वावगाहनेन तस्यैव भ्रमत्वसम्भवात् । तत्र–इदानीं तन्तुषु न घट इत्यादि स्थले । प्रतियोगिकुक्षावग्रहेऽपीति । ननु एतत्कालवृत्तित्वस्य तन्तुविशेषणत्वे नायं दोष इति वाच्यम् । मूले वृक्षे न कपिसंयोग इत्यत्रापि वृक्षे इति सप्तम्या अवच्छेदकत्वार्थकत्वम-

---

कुण्डादिमत्त्वापत्तेरिति । इदमत्र बोध्यम्–सम्बन्धिसत्तायाः सम्बन्धसत्ताव्याप्यत्वे व्यभिचाराभावेन व्यापकाभावेन व्याप्याभावसाधने तदुभयोर्व्याप्तेः सप्रयोजकत्वाङ्गीकारेऽपि नोक्तदोषः । प्रयोज्यप्रयोजकभावाङ्गीकारपक्षे पूर्वोक्तव्याप्तेः सप्रयोजकत्वाङ्गीकारेऽपि तत्तन्निरूपिततत्तत्प्रतियोगिकत्वविशिष्टसंयोगसमवायादेरनुयोगितया नियतस्य संसर्गत्वस्वीकारात् संयोगातिरिक्तसम्बन्धवाचकपदोत्तरमत्वर्थीयस्यैवानुयोगित्वार्थकत्वात्, संयोगपदोत्तरस्य चाश्रयत्वमात्रार्थकत्वात् कुण्डादिनिरूपितत्वविशिष्टानुयोगित्वस्य सत्त्वेऽपि तत्प्रतियोगिकत्वविशिष्टानुयोगिकत्वविरहात्सम्बन्धान्तरस्थले विशिष्टानुयोगित्वसत्त्वेऽपि संयोगस्थले तस्याऽस्वीकारान्न नोक्तदोषसम्भव इति ।

नोपादेयश्च सर्वथैव व्याप्यवृत्तिसाध्यके, साध्यसाधनभेदेन व्याप्तिभेदा-
दिति वदन्ति ।

---

धूमात्, समयो घटध्वंसानेतत्कालत्वात्, कपालं घटवत् घटध्वंसादित्यादा-
वव्याप्तिवारणायेत्यर्थः । तदिति । असमानाधिकरणान्तमित्यर्थः ।

नोपादेयश्चेति । येन सम्बन्धेन येन रूपेण च यद् व्याप्यवृत्ति तेन सम्ब-
न्धेन तेन रूपेण तत्साध्यतायां नोपादेयमित्यर्थः । तेन संयोगत्वेनाव्याप्यवृ-
त्तेरपि संयोगस्य समवेतत्वेन रूपेण साध्यतायां, कालिकतयाऽव्याप्यवृत्तेरपि
द्रव्यत्वस्य समवायेन साध्यतायाञ्च न प्रतियोगिव्यधिकरणपदमुपादेय-
मिति, परन्तु समवायेन व्याप्यवृत्तेरपि द्रव्यत्वसत्त्वादेः कालिकेन साध्य-
तायां तूपादेयमेव । [२]व्याप्यवृत्तिसाध्यके प्रयोजनविरहात् सर्वत्रैव नो-
पादेयम्, [१]अव्याप्यवृत्तिसाध्यके तु कचिद्देयम्, वृक्षः संयोगी एतद्वृक्ष-
त्वात् इत्यादौ, संयोगाभाववान् नित्यगुणत्वादित्यादौ कदाचिदेव न दे-
यम्, [३]इत्यावेदयितुं व्याप्यवृत्तिसाध्यके सर्वथैवेत्युक्तम् । साध्यसाधनभे-
देनेति । साध्यताघटकसम्बन्धादेरप्युपलक्षणम् ।

यद्यपि व्याप्यवृत्तिसाध्यकस्थले तदप्रवेशे सत्तावान् जातेरित्यादावव्या-
प्तिः, साधनवति स्पन्दादौ समवायेन सत्ताभावस्याऽपि कालिकादिसम्ब-

---

भ्युपेत्य वृक्षावच्छेदकमूलवृत्तिकपिसंयोगाभावविषयकत्वसम्भवादव्याप्यवृत्त्यभावोच्छेदप्र-
सङ्गात् । येन सम्बन्धेन येन रूपेण यद् व्याप्यवृत्तीति । यत्सम्बन्धावच्छिन्नयद्-
र्मावच्छिन्नाधिकरणतावन्निष्ठतत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकतद्धर्मवत्त्वं तेन
रूपेण व्याप्यवृत्तित्वमर्थः । न च नित्यज्ञानानुयोगिकविषयितासम्बन्धेन घटादेर्व्याप्यवृत्तित्वा-
नुपपत्तिः, तादृशसम्बन्धावच्छिन्नाभावाऽप्रसिद्धेरिति वाच्यम् । तादृशाधिकरणतावन्निष्ठाभावप्र-
तियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात् ।
समवायेन साध्यतायां चेति । न च समवायेनापि द्रव्यत्वमव्याप्यवृत्ति घटे गुणे न
द्रव्यत्वमिति प्रतीतेरिति वाच्यम् । उक्तप्रतीतेर्गुणावच्छेदेन घटे द्रव्यत्वाभावो न विषयः, किन्तु
घटे द्रव्यत्वं, गुणे तदभावः, घटवृत्तिगुणे वा द्रव्यत्वाभावो विषयः । यद्वा तादृशप्रतीतिरेवा-
ऽप्रामाणिकी, प्रामाणिकी च घटे द्रव्यत्वं न तु गुणे इत्यादिः । कालिकेन साध्यतायां
त्विति । इदानीं यद् द्रव्यत्वं तद् घटे न तु गुणे इत्यादिप्रतीत्यैव काले कालिकेन
द्रव्यत्वस्याव्याप्यवृत्तित्वं बोध्यम् । प्रयोजनविरहादिति । प्रतियोगिवैयधिकरण्या-
ऽघटितव्याप्तिज्ञानस्य प्रमात्वसम्भवादिति शेषः ।

नित्यगुणत्वादिति । न च नित्यत्वोपादानं व्यर्थमिति वाच्यम् । गुणत्वाधिकरणे ज-
न्यगुणे संयोगात्मकसाध्याभावस्य कालिकेन वृत्तितया प्रतियोगिवैयधिकरण्यस्योपादेयता
स्यादत उक्तम् नित्येति । ननु तत्रापि हेत्वधिकरणे नित्यज्ञाने विषयितया साध्याभावसत्त्वा-
दव्याप्तिरतस्तदुपादेयमेवेति चेन्न । सविषयकान्यत्वविशिष्टनित्यगुणत्वस्य हेतुत्वात् । यद्य-
पीति । व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वम् । तदप्रवेशे-प्रतियोगिवैयधिकरण्याप्रवेशे ।
जन्यमात्रस्य कालोपाधित्वानुपगमेप्याह स्पन्दादाविति । तथाच जात्यधिकरणस्पन्दादौ

न्थेन वृत्तेः । न चाभावे हेत्वधिकरणवृत्तित्वस्याऽभावीयविशेषणतया वि-वक्षणान्नोक्तदोषः; तथासत्यपि द्रव्यत्वाभाववान् सत्त्वादित्यत्राऽति-व्याप्तिः; द्रव्यत्वरूपसाध्याभावस्य विशेषणतया वृत्तित्वविरहात्, द्रव्य-भिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्याऽपि द्रव्यत्वानतिरेकात् । न चाभावत्वप्रतीतेः प्रमात्वरक्षार्थमभावाभावस्याऽतिरिक्ततयोक्तातिव्या-प्तिवारणमिति वाच्यम् । 'अभावत्वञ्चेत्यादि' अग्रिमग्रन्थेन भावाभावसा-धारणस्याभावत्वस्य निर्वचनविरोधापत्तेः, घटत्वाद्यभावस्य कालिक-

समवायसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावस्य वर्त्तमानतयाऽव्याप्तिरित्यर्थः ।

नचेति । अस्य नोक्तदोष इत्यनेनाऽन्वयः । तथाच सत्ताभावस्य स्वरूपेण हेत्वधिक-रणाऽवृत्तित्वादभावान्तरमादाय नाव्याप्तिः । तथासति—हेत्वधिकरणनिरूपितवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशे सति । द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य स्वरू-पेण हेत्वधिकरणवृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिरि-ति समाधाने त्वाह द्रव्यत्वाऽनतिरेकादिति । समनियताभावयोरैक्येन तादृशविशेष्यत्वा-भावस्यापि द्रव्यत्वस्वरूपतया स्वरूपेणाऽवृत्तित्वादिति भावः ।

[१]ननु द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्याऽतिरिक्तत्वेऽपि कथमतिव्याप्तिवारणम् ? तादृशाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । न च समनियताभावयोरै-क्योपगमेन हेतुसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके स-त्त्वान्नातिव्याप्तिरिति वाच्यम् । विशिष्टसत्ताभाववान् गुणत्वादित्यादावव्याप्तिवारणाय हेत्वधि-करणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वपर्यन्तानिवेशस्याऽऽवश्य-कतयाऽतिव्याप्तितादवस्थ्यादिति चेन्न ।

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छे-दकमिति पारिभाषिकावच्छेदकत्वाभिप्रायेण तदभिधानात्(१) । केचित्तु द्रव्यभिन्न-त्वप्रकारकप्रमाविशेष्यतावान् सत्त्वादित्यत्रातिव्याप्तिप्रदर्शनायैव द्रव्यत्वानतिरेकादित्युक्त-मित्याहुः ।

ननु अभावत्वं भावभिन्नत्वम्, एवं च द्रव्यत्वाभावाभावस्य द्रव्यत्वरूपत्वे द्रव्यत्वाभावा-भावो अभावः इत्याकारकाऽभावत्वप्रकारकप्रतीतेः प्रमात्वानुपपत्तिः, तस्या अभावत्वाभाववति अभावत्वप्रकारकत्वादित्याशङ्कते नचेति । अतिरिक्ततयेति । द्रव्यत्वाभावाभावस्याऽति-रिक्तत्वे स्वरूपेण हेत्वधिकरणवृत्तित्वान्नातिव्याप्तिः । अग्रिमग्रन्थेन—"अभावत्वं चेद मिह नास्ति इदमिदं न भवतीति प्रतीतिनियामको भावाऽभावसाधारणः स्वरूपसम्बन्ध-विशेष" इति ग्रन्थेन । घटत्वाद्यभावस्येति । अत्र घटत्वाभावः संयोगसम्बन्धावच्छिन्न-

(१) ननु पारिभाषिकावच्छेदकत्वाभिप्रायेण यद्ययं ग्रन्थः तदाऽनतिरिक्तत्वेऽपि तद्घटीयरूपध्वंसा-भावाभावमादायैवातिव्याप्तिवारणसम्भव इति चेन्न । रूपभिन्नं गुणत्वादित्यत्रातिव्याप्तिदाने तात्पर्यात् । नच तत्रापि तद्रूपनिष्ठविषयत्वाभावाभावमादाय नातिव्याप्तिः, रूपनिष्ठविषयतायां विषयतावच्छेदकी-भूतरूपत्वस्वरूपतया तत्स्वरूपाभावस्य स्वरूपेण हेत्वधिकरणाऽवृत्तित्वादिति वाच्यम् । विषयतायाः रू-त्वस्वरूपत्वेऽपि । विषयतात्वेनस्वरूपसम्बन्धावच्छिन्नवृत्तितावत्त्वात् ।

म्बन्धावच्छिन्नाभावे स्वरूपसम्बन्धेन साध्ये गगनत्वादिहेतावव्याप्तेस्त-थाप्यनुद्धारात्; विशेषणतया गगननिष्ठस्य घटत्वाभावस्यैव तादृशघट-त्वाभावाभावाभावत्वकल्पनात्, तावतैवाऽभावत्वप्रतीतेः प्रमात्वसम्भवात्।

अत एव—साध्यताघटकसम्बन्धेन साध्यवत्ताबुद्धेर्विषयविधया प्रतिब-न्धकतावच्छेदको यः सम्बन्धस्तेन हेतुसामानाधिकरण्यमभावस्य ग्राह्यम्-इत्युक्तावपि न निस्तारः, तथाविधसम्बन्धेन हेतुसामानाधिकरण्यस्या-प्रसिद्ध्या प्रागुक्तगगनत्वादिहेतौ द्रव्यत्वाभाववान् जातित्वादित्यादौ चा-

---

प्रतियोगिताको बोध्यः, अन्यथा समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावस्य घटत्वान-धिकरणदेशे प्रसिद्धत्वेनाऽव्याप्यवृत्तितया तस्य कालिसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्या-प्यव्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यस्योपादेयतयाऽव्याप्त्यसङ्गत्यापत्तेः। अत एव घटत्वपदमपि सार्थकमिति ध्येयम्। तथापि—अभावाभावस्यातिरिक्तत्वेऽपि। अनुद्धारादिति। साध्याभावस्य तृतीयाभावस्य घटत्वाभावस्वरूपतया स्वरूपेण हेत्वधिकरणवृत्तित्वात्।

अत एव—घटत्वाभावाभाववान् गगनत्वादित्यत्राऽव्याप्तेरेव। वह्निमान् धूमादित्यत्र साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताबुद्धिः संयोगेन वह्निमानित्याकारिका, तस्याः विरोधी यो निश्चयः स्वरूपेण वह्न्यभाववानित्याकारकः तत्र विषयविधया प्रतिबन्धतावच्छेदको यः स्वरूपसम्बन्धस्तेन हेत्वधिकरणवृत्तिघटाभावमादाय लक्षणसमन्वयः। सत्तावान् जातेरित्यत्र समवायेन सत्तावत्ताबुद्धिविरोधिनः स्वरूपेण सत्ताभाववत्तानिश्चयस्य विषयविधया प्रतिब-न्धकतावच्छेदकेन स्वरूपेण सत्ताभावस्य हेत्वधिकरणेऽवर्त्तमानत्वादभावान्तरमादाय नाऽव्या-प्तिः। स्वरूपेण द्रव्यत्वाभाववत्ताबुद्धिविरोधी यो निश्चयः समवायेन द्रव्यत्ववानित्याकारकः तत्र विषयविधया प्रतिबन्धतावच्छेदकीभूतसमवायसम्बन्धेन साध्याभावस्य द्रव्य-स्वरूपस्य हेत्वधिकरणे वर्तमानत्वान्नातिव्याप्तिः। न निस्तारः—न दोषनिवृत्तिः। तथा-विधसम्बन्धेन—साध्यतावच्छेदकीभूतस्वरूपसम्बन्धेन, तादृशघटत्वाभावाभाववत्ताबुद्धि विरोधी यो निश्चयः कालिकेन तदभाववानिति निश्चयः. तत्र विषयविधया प्रतिबन्धकताव-च्छेदकीभूतकालिकसम्बन्धेनेत्यर्थः। हेत्वधिकरणगगननिरूपितवृत्तित्वाप्रसिद्ध्या गगनत्वहेता-वव्याप्तिरित्यर्थः। एवं द्रव्यत्वाभाववान् जातित्वादित्यत्रापि तादृशप्रतिबन्धकतावच्छेदकस-मवायसम्बन्धेन हेत्वधिकरणजातिनिरूपितवृत्तित्वाऽप्रसिद्ध्याऽव्याप्तिमाह द्रव्यत्वाभाव वान् जातित्वादित्यादौ चाव्याप्तेरिति।

सामानाधिकरण्यप्रत्यासत्त्या निश्चयस्य प्रतिबन्धकतया सर्वत्र प्रतिबन्धकतावच्छेदक-सम्बन्धः समवाय एव, एवं च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य साध्यत्वे वह्न्यवयवत्वहेतौ तादृशप्रतिबन्धकतावच्छेदकीभूतसमवायसम्बन्धेन वह्न्यात्मकसाध्याभा-वस्य हेत्वधिकरणे वर्तमानतयाऽव्याप्तिरतो विषयविधयेति। एवं च प्रकृतसाध्यता-वच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यता-निरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धेनेत्यर्थः।

व्याप्तिः । तथाऽपि साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्त्वबुद्धेर्विषय-

[१] ननु येन केनचित्सम्बन्धेन साध्यवत्ताबुद्धेर्विरोधित्वनिवेशेनैव प्रागुक्तदोषवारणसंभवे साध्यतावच्छेदकसम्बन्धनिवेशो व्यर्थः। न च घटत्वाभावस्य कालिकसम्बन्धावच्छिन्ना-भावे साध्ये गगनत्वादिहेतावव्याप्तिः, कालिकसम्बन्धेन साध्यवत्ताबुद्धेर्विरोधिताघटकस्वरूप-सम्बन्धेन साध्याभावस्य हेत्वधिकरणवृत्तित्वादिति वाच्यम्। साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताबुद्धेर्विरोधितानिवेशेऽपि उक्तस्थले तादृशसाध्यवत्ताबुद्धेर्विरोधिताघटककालिकसम्ब-न्धेन हेतुसमानाधिकरणाभावस्यैव दुर्लभतया एतत्कल्पे उक्ताव्याप्तेः स्वहस्तितत्वादिति चेन्न।

समवायेन घटावृत्तेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विशेषणताविशेषेण साध्यतायां घटत्वादिहेतौ कालिकसम्बन्धेन साध्यवत्ताबुद्धेर्विरोधिताघटकस्वरूपसम्बन्धमादा-यप्रमेयत्वादिस्वरूपसाध्याभावस्य हेतुसमानाधिकरणतयाऽव्याप्तिः स्यादतः साध्यतावच्छेदकस-म्बन्धानिवेश इति दिक्।

तथापीति(१) स्वं—अभावः। तथाच गगनत्वादिहेतौ गगनत्वादिस्वरूपाभावमा-

---

(१) साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वमिति फलितम्।

[१] यथाश्रुतानुगमस्तु अभावविशिष्टाभावप्रतियोगितानवच्छेदकमित्यादि। वै० स्वतादात्म्य-स्वनि-रूपितप्रतियोगितावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिब-ध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणानिरूपितवृत्तिताव त्वोभयस-म्बन्धेनेति।

[२] अनुयोगिताविशिष्टानुयोगितानिरूपितप्रतियोगितानवच्छेदकमित्यादि वा निवेश्यम् वै० उक्तोभयसम्बन्धेनेति। तेन साध्याभावस्य घटत्वाभावस्वरूपतया तस्योक्तोभयसम्बन्धेन स्वविशिष्टत्वेऽपि घटत्वाभावाभावसाध्यकगगनत्वहेतौ नाव्याप्तिः।

[३] नन्वेवमपि सत्तावान् जातेरित्यादौ सत्ताभावत्वनिष्ठानुयोगिताविशिष्टसत्तावानितिबुद्धिनिष्ठप्रति-बध्यतानिरूपितकालिकेन सत्ताभाववान् स्वरूपेण सत्ताभावान् कालिकेन सत्ताभाववानितिनिश्चयनिष्ठज्ञानवै-शिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय कालिकसम्बन्धावच्छिन्नहेत्वधिकरणानिरूपितवृत्तितावच्छेदकीभूतसत्ता-भावत्वरूपानुयोगितामादायाव्याप्तिः। न च प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं देयमिति वाच्यम्। कालिकेन सत्ताभावव्याप्यवानिति निश्चयप्रतिबन्धकतामादाय तत्रैवाऽव्याप्तितादवस्थ्यादिति चेन्न।

अत्रेदं समाधानम्। अनुयोगितावै० स्वतादात्म्य-स्वविशिष्टप्रकारतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिक-रणनिरूपितवृत्तितावच्छेदकत्वोभयसं०। प्रकारतायां अनुयोगितावै० स्वावच्छिन्नत्वस्वनिरूपितप्रतियोगिता-वच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशि-ष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन वाच्यम्। एवं सति साध्यतावच्छेदकसम्बन्धावच्छिन्न-त्वनिवेशनफलम् समवायसम्बन्धावच्छिन्नाभावप्रकारतायां स्वावच्छिन्नत्वाभावात्। तादृशानुयोगितावैशिष्ट्य-निवेशे तु तन्निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया एवाऽप्रसिद्धिरतः प्रतियोगिताविशिष्टप्र-तियोगितात्वेनाऽनुगमः। वै० स्वावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारताविशिष्टप्रका-रतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगितानिरूपितत्व—स्वतादात्म्योभयस-म्बन्धेन। प्रकारतावै० स्वनिरूपितविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्न-प्रतिबन्धकतावच्छेदकत्व-स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वैतन्नितयसं०। घटत्वाभाव-वान् गगनत्वादित्यत्र घटत्वाभाववान् पट इति प्रकारताविशिष्टतादृशाभावः पटावृत्तिरिति ज्ञानीयाऽवृत्तित्वम्

वाय लक्षणसमन्वय इति भावः । [१] ननु साध्याभावस्य घटत्वाभावस्वरूपतया स्वप्रतियोगी यथा घटत्वाभावाभावस्तथा घटत्वमपि, तथाच स्वरूपसम्बन्धेन घटत्ववत्ताबुद्धिविरोधिता घटकस्वरूपसम्बन्धेन घटत्वाभावस्य हेत्वधिकरणवृत्तित्वादव्याप्तितादवस्थ्यमिति चेन्न ।

स्वीययादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धेन हेत्वधिकरणनिरूपितवृत्तितावत्त्वानिरूपिततादृशप्रतियोगितानवच्छेदकत्वस्योक्तत्वात् । एतेन–समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य स्वरूपेण साध्यतायां धूमादिहेतावव्याप्तिः, वह्निस्वरूपसाध्याभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्वरूपस्वप्रतियोगिमत्ताबुद्धेर्विरोधिताघटकसंयोगसम्बन्धेन हेत्वधिकरणवृत्तित्वात्–इति निरस्तम् ।

[२] अत्र प्रतिबध्यतावच्छेदकप्रकारतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने समवायेन गुणावृत्तेः समवायेनाभावस्य स्वरूपेण साध्यतायां गुणत्वहेतावव्याप्तिः, गुणावृत्त्यभावाभावस्य संयोगेन स्वप्रतियोगिगुणावृत्त्यभाववत्ताबुद्धिविरोधिताघटकसम्बन्धत्वस्य स्वरूपेऽपि सत्त्वात् ।

[३] अथात्र घटभिन्नं कपालत्वादित्यत्र घटभेदाभावस्य घटघटत्वोभयात्मकत्वे समवायस्यापि तथात्वेन तेन सम्बन्धेन घटात्मकसाध्याभावस्य हेतुसमानाधिकरणत्वादिति चेन्न ।

प्रतिबन्धकतावच्छेदकप्रकारतायां स्वनिष्ठत्वं विशेषणं देयम् ।

[४] अत्र प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमपि देयम्, अन्यथा सत्तावान् जातेरित्यादौ सत्तावत्ताबुद्धिं प्रति कालिकेन सत्ताभाववान् स्वरूपेण सत्ताभाववानितिज्ञान-

---

कारतामादायाव्याप्तिवारणाय प्रकारतायां प्रथमसम्बन्धनिवेशः । कालिकेन घटसाध्यकक्रियात्वहेतौ कालिकेन घटवानिति ज्ञानीयप्रकारताविशिष्टघटवत्त्वेतिसंशयीयघटाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रकारताविशिष्टसत्ताभावव्याप्यनिष्ठप्रकारतामादाय सत्तासाध्यकेऽव्याप्तिवारणाय तृतीयसम्बन्धनिवेशः । न च जातित्वाभाववान् वाच्यत्वादित्यादौ जातित्वाभाववान् जातित्वाभावाभाव इति ज्ञानीयप्रकारताविशिष्टजातित्वाभावाभाव जातित्वाभावाभाव इति ज्ञानीया याऽऽधेयतासम्बन्धावच्छिन्ना जातित्वाभावाभावप्रकारता तादृशप्रकारतावच्छेदकीभूताधेयतासम्बन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वस्य जातित्वाभावाभावत्वेऽसत्त्वादतिव्याप्तिरिति वाच्यम् । स्वनिरूपितत्वे सति स्वावच्छिन्नावच्छेदकत्वानिरूपकविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितत्वसम्बन्धेन प्रकारतावैशिष्ट्यस्य विवक्षणीयत्वात् । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्तु घटत्वाभावाभाववान् नित्यत्वादित्यादौ साध्यनिष्ठप्रतियोगितावच्छेदकधर्मावच्छिन्नसमवायावच्छिन्नप्रकारताविशिष्टप्रकारतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरण निरूपितवृत्तित्ववदभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितामादायाव्याप्तिवारणायेति ।

[४] तादृशप्रकारतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणानिरूपितवृत्तितेत्यस्य तादृशप्रकारताविशिष्टवृत्तितेत्यर्थः । वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वं–स्वसामानाधिकरण्योभयसम्बन्धेन, तेन घटभिन्नं कपालत्वादित्यत्र नाऽव्याप्तिरिति ध्येयम् ।

[५] इदं पुनरिहावधेयम्–स्वप्रतियोगिमत्ताबुद्धेरित्यादि परिचायकमेव, नतु तद्रूपेण लक्षणे निवेशः, किन्तु अभावसाध्यके समवायित्वादिना भावसाध्यके विशेषणतात्वेन, अन्यथा प्रतियोगिवैयधिकरण्याऽनिवेशेऽपि व्याप्यवृत्तिसाध्यकस्थले लाघवानुपपत्तेः, 'मूषिकभिया पलायमानस्ये'त्यादिन्यायप्रसक्तत्वापत्तेः. एतदर्थं वह्नेव 'वस्तुतस्तु' कल्पानुसरणमित्यपि वदन्ति ।

विधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन हेत्वाधिकरणवृत्तित्वमभावस्य विवक्षितमित्यदोषः, तथा च द्रव्यत्वाभाववान् जातित्वादित्यादौ विशेषणताविशेषसम्बन्धेन जातित्वाभाववुद्धिविषयाविधया प्रतिबन्धकतावच्छेदको यः स्वरूपसम्बन्धस्तेन जातित्वस्वरूपस्याऽभावस्य तत्र प्रसिद्धत्वादिति भावः ।

वस्तुतो व्याप्यवृत्तित्वमत्र साध्यतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपं ग्रन्थकृतोऽभिप्रेतम्; तादृशसाध्यकञ्च समवायादिनाऽऽत्मत्वसाध्यकज्ञानवत्त्वादिकं, समवायेनात्मत्ववति समवायेनाऽऽत्मत्वाभावस्य केनाऽपि सम्बन्धेनाऽवृत्तेः, तथाच तादृशसाध्यके एव नोपादेयम् । सत्तावान् जातेरित्यादौ पुनरुपादेयमेव, सत्त्ववति स्पन्दादौ समवायावच्छिन्नसत्ताभावस्य कालिकसम्बन्धेन वर्तमानतया सत्तादेर्निरुक्तव्याप्यवृत्तित्वाभावात्, व्याप्यवृत्तित्वघटकस्य स्वाधिकरणवृत्तित्वस्य सम्बन्धसामान्येन प्रविष्ट-

---

विशिष्टस्य कालिकेन सत्ताभाववान्घट इति ज्ञानस्यापि प्रतिबन्धकत्वेन एतादृशप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदककालिकसम्बन्धेन साध्याभावस्य हेत्वधिकरणे स्पन्दादौ सत्त्वेनाऽव्याप्तिः स्यादिति ।

[५] एवं प्रकारतायां भ्रमानिरूपितत्वमपि देयम्, अन्यथा घटभिन्नं कपालत्वादित्यादौ घटात्मकसाध्याभावप्रतियोगिमत्ताग्रहविरोधित्वस्य घटत्वत्वेन घटावगाहिज्ञानेऽपि सत्त्वेनाऽव्याप्त्यापत्तेः ।

वस्तुतस्तु प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकमिति । वै० स्वतादात्म्य–स्वावच्छेदकीभूतधर्मावच्छिन्नसाध्यतावच्छेदसम्बन्धावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपिताज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकप्रकारतावत्त्वोभयसम्बन्धेन । प्रकारतावत्ता च स्वविशिष्टाभावीयवत्सम्बन्धेन । अभावे वै०स्वाश्रयत्व–स्वावच्छेकसम्बन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावत्त्वोभयसम्बन्धेनेति ।

वस्तुत इति । स्वं–साध्यम् । साध्यतावच्छेदकावच्छिन्नमिति यावत् (१) । तद्वृत्त्यभावस्य–साध्याधिकरणनिरूपितवृत्तितावदभावस्येत्यर्थः । तादृशसम्बन्धावच्छिन्नेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यर्थः । अत्र कालिकेन आत्मत्वाधिकरणे स्पन्दादौ समवायसम्बन्धावच्छिन्नप्रतियोगिताकाऽऽत्मत्वाभावस्य कालिकेन वृत्तितया तत्प्रतियोगिताया एव आत्मत्वे सत्त्वेनाऽऽत्मत्वस्य व्याप्यवृत्तित्वानुपपत्तिरतः साध्यतावच्छेदकसम्बन्धेनेति (२) । एवं समवायेनाऽऽत्मत्वाधिकरणे आत्मनि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाऽऽत्मत्वाभावस्य सत्त्वेन तद्दोषतादवस्थ्यमतस्तादृशसम्बन्धावच्छिन्नेति । तादृशसाध्यके—आत्मत्वसाध्यके । स्वाधिकरणवृत्तित्वस्य—साध्याधिकरणनिरूपितवृत्तितायाः इत्यर्थः । वृत्तित्वं

---

(१) तेनात्मवृत्तित्वविशिष्टसत्तासाध्यकस्य न व्याप्यवृत्तित्वहानिः ।

(२) साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं च साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वम् ।

त्वात्; एतल्लाभार्थमेव सर्वथैव व्याप्यवृत्तेरित्युक्तम्; तस्य सम्बन्धविशे

---

च सम्बन्धिभिन्नं ग्राह्यम्, अन्यथा अयमात्मा ज्ञानादित्यत्र आत्मत्वाधिकरणे आत्मनि समानकालीनत्वादिसम्बन्धेन आत्मत्वाभावस्य सम्बन्धित्वाद् व्याप्यवृत्तित्वानुपपत्तेः। एवं हेत्वधिकरणवृत्तित्वमपि सम्बन्धिभिन्नं ग्राह्यम्, अन्यथा तत्रैव ज्ञानाधिकरणे आत्मनि समानकालीनत्वादिसम्बन्धेन आत्मत्वाभावमादायाऽव्याप्त्यापत्तेः।

एतल्लाभार्थमेवेति। वृत्तितायां सम्बन्धसामान्यावच्छिन्नत्वसूचनार्थमेवेत्यर्थः। वस्तुतस्तु व्याप्यवृत्तिसाध्यकेऽपि प्रतियोगिवैयधिकरण्यविशेषणदानमावश्यकम्, अन्यथा व्याप्यवृत्तेरव्याप्यवृत्तित्वभ्रमदशायां तद्विषयकानुमितिर्न स्यात्। एतेन—सर्वथैव देशतः कालतो व्याप्यवृत्तित्वसाध्यके केवलान्वयिसाध्यके इति यावत्, तत्र तन्न देयम्—इति कस्यचिन्मतम्, तदपि तुच्छम्। तस्याऽव्याप्यवृत्तित्वभ्रमदशायामनुमितेरुत्पादनाय तन्निवेशस्याऽऽवश्यकत्वात्।

अत्रास्मद्गुरुचरणाः—यस्मिन् व्याप्यवृत्तौ कस्यापि नाऽव्याप्यवृत्तित्वभ्रमस्तद्व्याप्यवृत्ति तत्साध्यके नोपादेयमित्यर्थः—इति प्राहुः।

[१] ननु तादात्म्येन गगनवद्भेदस्य साध्यत्वे गगनत्वहेतावतिव्याप्तिः, साध्याभावस्य गगनस्वरूपतया हेत्वधिकरणेऽवृत्तित्वात्, अभावान्तरस्यैव धर्तव्यत्वात्, अभावे हेत्वधिकरणनिरूपितवृत्तिताया एव निवेशात्। न च व्याप्यवृत्तितावच्छेदकत्वस्य साध्यतावच्छेदके निवेशान्नातिव्याप्तिरिति वाच्यम्। स्वाधिकरणवृत्तित्वस्याप्यसत्त्वेन तत्र व्याप्यवृत्तित्वानपायादिति चेन्न।

स्वाधिकरणाऽवृत्तित्ववृत्तिमत्त्वोभयाभाववदभावाऽप्रतियोगित्वरूपव्याप्यवृत्तित्वस्य तत्राऽसत्त्वेन व्याप्यवृत्तितावच्छेदकत्वेनैव वारणात्। प्रतियोगिवैयधिकरण्यघटितलक्षणस्य च नातिव्याप्तिः, तत्र सम्बन्धितासाधारणवृत्तितात्वस्य प्रविष्टत्वात्। न च स्वकालीनजातिभिन्नत्वसम्बन्धेन यो रूपवान् तद्भेदस्य साध्यतायां जातिगगनान्यतरत्वहेतौ अतिव्याप्तिः, तत्र साध्याभावस्य रूपस्य वृत्तिमत्त्वसाध्याधिकरणावृत्तित्वोभयवत्त्वेन उभयाभाववदभावाऽप्रतियोगित्वस्य साध्ये सत्त्वेनोक्तस्थलीयव्याप्यवृत्तित्वस्याऽक्षतत्वादिति वाच्यम्। हेत्वधिकरणनिरूपितवृत्तितायां साध्याधिकरणनिरूपितत्व-वृत्त्यनियामकसम्बन्धावच्छिन्नत्वोभयाभाववत्त्वस्य निवेशनीयत्वात्।

[२] यद्वा वृत्तिताभिन्नत्वसाध्याधिकरणानिरूपितत्वोभयाभावस्य हेत्वधिकरणनिरूपितवृत्तितायां निवेशेनाऽदोषादिति ध्येयम्। तेनाऽऽत्मत्वस्य समवायस्वकालीनद्रव्यत्वोभयसम्बन्धेन साध्यतायामात्मानुयोगिकसमवायेन द्रव्यत्वस्य साध्यतायां च न व्याप्यवृत्तित्वहानिः।

ननु वह्निमान् धूमादित्यादावव्याप्तेरेव सम्भवेऽतिव्याप्तिप्रदर्शनं दीधितिकृतोऽसङ्गतम्, तथाहि—प्रतियोगिवैयधिकरण्यमित्यस्य स्वीयप्रतियोगिताश्रयानधिकरणवृत्तित्वार्थकत्वे गौरवम्, असम्भवश्च घटाभावादेरपि घटीयसंयोगसम्बन्धेन प्रमेयाभावतया प्रतियोग्यसमानाधिकरणाऽभावाऽप्रसिद्धेः; अतो लाघवाच्च स्वीययत्किंचित्प्रतियोगिताश्रयानधिकरणत्वं हेत्वधिकरणे निवेशनीयम्। एतेन—एकधर्मावच्छिन्नप्रतियोगिताया भिन्नत्वेऽपि कथं वन्ह्यभावः प्रतियोगिव्य-

प्रतियोग्यसामानाधिकरण्यं च (१) प्रतियोगितावच्छेदकावच्छिन्नाऽसामानाधिकरण्यम्, तेनाऽयं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः, मूर्तत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ नातिव्याप्तिः ।

---

धानियन्त्रितत्वात् । व्यभिचारादिस्तु सम्बन्धो न वृत्तितानियामकः, तेनाऽऽत्मत्वादेरपि न व्याप्यवृत्तित्वहानिरिति ध्येयम् । सर्वथैव व्याप्यवृत्तिसाध्यके—प्रतियोगिवैयधिकरण्याघटितव्याप्तिविशिष्टहेतुमत्तानिश्चयोत्तराऽनुमितौ, नोपादेयं—प्रतियोग्यसमानाधिकरणांशो जनकतावच्छेदके नोपादेयः, साध्यसाधनभेदेन कार्यकारणभेदेन, व्याप्तेः—कारणतावच्छेदकघटकव्याप्तेः, भेदात्—भिन्नत्वादित्यपि वदन्ति ॥

एकधर्मावच्छिन्नप्रतियोगितायाः प्रतियोगिव्यक्तीनां भेदेऽपि ऐक्यमिति नव्यमते वह्निमान् धूमादित्यत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यमात्रोक्तावपि वह्न्यादिसामान्याभावमादायाऽव्याप्त्यसम्भवादतिव्याप्तिवारणात्मकप्रयोजमाह तेनेति ।

---

धिकरणः तत्प्रतियोग्यनधिकरणत्वस्य हेत्वधिकरणेऽसत्त्वात्—इति समाहितम् । प्रतियोगिभेदेन प्रतियोगिताभेदात्त्वीययत्किंचित्प्रतियोगिताश्रयीभूतमहानसीयवह्न्याद्यनधिकरणत्वस्य पर्वते सत्त्वात्पर्वतनिष्ठवह्न्यभावस्यापि लक्षणघटकत्वादित्यत आह ऐक्यमिति नव्यमते इति । तथाच प्रतियोगिताया ऐक्ये तादृशप्रतियोगिताश्रयो यथा महानसीयवह्निस्तथा पर्वतीयवह्निरपि तदनधिकरणत्वस्य पर्वते विरहादभावान्तरमादाय नाव्याप्तिरित्याह अव्याप्त्यसम्भ-

---

(१) प्रतियोगिवैयधिकरण्यविशेषणं समर्थ्य तत्परिष्करोति दीधितौ प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमिति । तथा च स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तियोऽभाव इति फलितम्, कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावस्य स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणवृत्तित्वाद्वारणम् । प्रतियोगितावच्छेदकावच्छिन्नत्वं च प्रतियोगितावच्छेदकताघटकसम्बन्धेन बोध्यम्, अन्यथा वह्नेरपि कालिकसम्बन्धेन धूमत्वविशिष्टतया धूमाभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्येन लक्षणाघटकतया व्यभिचारिण्यतिप्रसङ्गात् ।

[क] अत्र केचित् । प्रतियोग्यसामानाधिकरण्यमात्रमेव सम्यक्, न तु प्रतियोगितावच्छेदकावच्छिन्नत्वपर्यन्तनिवेशनमप्यावश्यकम्, विशिष्टसत्तावान् दिना जात्यादिरूपहेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वप्रमासम्भवेऽपि बाधादेव गुणादौ गुणकर्मान्यत्वविशिष्टसत्त्वाविशिष्टवैशिष्ट्यावगाह्यनुमितिवारणसम्भवात्, बाधानवतारदशायां च साध्यवत्तानवच्छेदकदेशकालविशिष्टे साध्यवति पक्षे साध्यवैशिष्ट्यावगाहिभ्रमानुमितेरिव प्रमापरामर्शाद् भ्रमानुमितेरपि स्वीकारे बाधकाभावात् । अत एव बाधग्रन्थे गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ बाधानवतारदशायां प्रमात्मकपरामर्शाद् भ्रमानुमितेर्मणिकृता स्वीकारोऽपि संगच्छते । यदि च भ्रमानुमितिजनकपरामर्शस्य कथंचिद्भ्रमत्वोपपादनसम्भवे प्रमात्मकपरामर्शाद् भ्रमानुमितिस्वीकारोऽनुचित इत्युपदर्शितरीत्या प्रमात्मकपरामर्शाद् भ्रमानुमितिवारणाय तज्जनकपरामर्शस्य भ्रमत्वनिर्वाहाय प्रतियोगितावच्छेदकावच्छिन्नत्वपर्यन्तनिवेशनमावश्यकमेव, गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ च परामर्शस्य कथंचिदपि भ्रमत्वासंभवेनाऽगत्या प्रमात्मकपरामर्शाद् भ्रमात्मकानुमितिस्वीकारो बाधग्रन्थे मणिकृता न विरुद्ध इति विभाव्यते, तदापि तन्निवेशनम-

**न च विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यम्। जातौ विशिष्टसत्त्वव्यभिचारज्ञा-**

---

वादिति। अतिव्याप्तिवारणात्मकेति। विशिष्टसत्तावान् जातेरित्यत्र जात्यधिकरणगुणादिवृत्तिविशिष्टसत्ताभावप्रतियोगिताश्रयशुद्धसत्ताधिकरणत्वस्यैव गुणे सत्त्वादभावान्तरमादायाऽतिव्याप्तिवारणात्मकेत्यर्थः। तेन—प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशेन, तथाच विशिष्टसत्ताभावप्रतियोगितावच्छेदकं यद्विशिष्टसत्तात्वं तदवच्छिन्नानधिकरणत्वस्य गुणे सत्त्वेन साध्याभावोपि प्रतियोगिव्यधिकरण इति नातिव्याप्तिः। भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यत्र मूर्त्तत्वाधिकरणमनोवृत्तिभूतत्वमूर्त्तत्वोभयाभावप्रतियोगिताश्रयमूर्त्तत्वाधिकरणत्वस्य मनसि सत्त्वेऽपि तादृशप्रतियोगितावच्छेदकीभूतोभयत्वावच्छिन्नानधिकरणत्वस्य मनसि सत्त्वेनोभयाभावस्य प्रतियोगिव्यधिकरणतया नातिव्याप्तिरिति भावः।

व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे प्रतियोगिवैयधिकरण्यस्याऽनिवेशेन तद्घटितलक्षणस्य तत्राऽतिव्याप्तिदानमनुचितमित्याशयेन शङ्कते **नचेति**। **व्याप्यवृत्तितया**—अवच्छिन्नवृत्तिकान्यत्वेन। **इदम्**—अतिव्याप्तिकथनम्। **अयुक्तमिति**। व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याप्रवेशात्, प्रतियोगिवैयधिकरण्याघटितलक्षणस्य चाऽतिव्याप्तिरेव न सम्भवतीति भावः। वस्तुतस्तु व्याप्यवृत्तिसाध्यकेऽपि अव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्त्यवगाहिपरामर्शस्यानुमितिहेतुतया उक्तसाध्यस्य व्याप्यवृत्तित्वेऽपि नातिप्रसंगाऽसङ्गतिरिति ध्येयम्(१)। **जातौ विशिष्टसत्त्वव्यभिचारज्ञानदशायामपीति।**

---

फलमेव, तदुपलक्षिततत्त्वबोधतद्विशिष्टवैशिष्ट्यबोधयोर्वैलक्षण्याय विशिष्टवैशिष्ट्यबोधे विशिष्टप्रतियोगिकसम्बन्धस्यैव सम्बन्धतया भानस्यावश्यकतया विशिष्टवैशिष्ट्यावगाह्यनुमितौ विशिष्टप्रतियोगिकसमवायादेः सम्बन्धतया भानेन तस्यैव साध्यतावच्छेदकसम्बन्धतया भानस्यावश्यकतया तेन सम्बन्धेन च विशिष्टाभावस्य यथाश्रुते प्रतियोग्यसमानाधिकरणस्यैव सुलभत्वादिति वदन्ति।

तच्चिन्त्यम्। विशेषणत्वोपलक्षणत्वाभ्यां प्रतियोगितावच्छेदकतावैलक्षण्यादेव तयोर्वैलक्षण्यनिर्वाहात्, एकत्वप्रागभावविशिष्टघटादेः संयोगादिसम्बन्धेनाभावस्य प्रतियोगितायामप्रसिद्धतया विशिष्टनिरूपितसंयोगादेरवच्छेदकत्वाऽसंभवाच्च।

वस्तुतस्तु यद्रूपेण प्रतियोगितावच्छेदकविशिष्टसम्बन्धता तद्रूपावच्छिन्नस्यैव प्रतियोगितावच्छेदकसम्बन्धपदार्थत्वेन विशिष्टसमवायस्यापि समवायत्वेनैव सम्बन्धतया तदवच्छिन्नस्य गुणादौ सत्त्वेन प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानं विनाऽतिप्रसङ्गवारणाऽसम्भवेन तदुपादानमावश्यकम्। न च तदुपदाने कथं तद्वारणमिति वाच्यम्। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वस्य लाभेन प्रकृते विशेषणावच्छिन्नसमवायस्यैव विशेष्यसम्बन्धत्वेन गुणादौ तदभावादिति ध्येयम्।

(१) व्याप्यवृत्तौ अव्याप्यवृत्तित्वभ्रमो नस्वीक्रियते, तत्स्वीकारे व्याप्यवृत्तिसाध्यकस्थलेऽपि अवच्छेदकविशेषान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवम्, तदस्वीकारे च सामान्यतस्तद्वत्ताज्ञानत्वेन तदभाववत्तानिश्चयत्वेन च प्रतिबध्यप्रतिबन्धकभावकल्पने लाघवम्, अव्याप्यवृत्तिसाध्यकस्थले च शाखामूलादिरूपावच्छेदकान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावोऽनुभवबलादगत्याऽभ्युपेय इति नातिप्रसङ्गसङ्गतिरिति चिन्ताबीजम्।

[क] अत्रेदं बोध्यम्। अनुमितिजनकतावच्छेदकव्याप्तिज्ञानस्य व्यतिरेकव्यभिचार एवाऽव्याप्तिपदार्थः,

तद्दशायामपि विशिष्टसत्त्वधर्मिकजातिमन्निष्ठप्रतियोगिव्यधिकरणाभावा-ऽप्रतियोगित्वज्ञानाद् विशिष्टसत्त्वसाध्यकानुमितिप्रसङ्गस्यैव प्रकृतेऽतिप्रसङ्गपदार्थत्वात्, विशिष्टसत्त्वस्याप्युक्तरीत्या व्याप्यवृत्तित्वविरहाच्च ।

विशिष्टस्याऽतिरिक्तत्वमते तत्राऽतिव्याप्त्यसम्भवादाह भूतत्वेति । प्राञ्चस्तु विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशाद् भूतत्वेति साध्यान्तरम् । तत्र च भूतत्वम् आत्मान्यत्वे सति विशेषगुणवत्त्वम्, मूर्त्तत्वम् अवच्छिन्नपरिमाणवत्त्वम्, तदुभयञ्चाऽव्याप्यवृत्त्येव, घटादावुत्पत्तिकालावच्छेदेन तदुभयाभावसत्त्वादित्याहुः ।

---

जातौ विशिष्टसत्तात्वावच्छिन्नाभाववद्वृत्तित्वरूपस्य, जातिसमानाधिकरणाभावप्रतियोगिसाध्यकत्वरूपस्य वा व्यभिचारस्य ज्ञानदशायामपीत्यर्थः । **विशिष्टसत्त्वधर्मिकेति** । विशिष्टसत्त्वं जातिमन्निष्ठस्वप्रतियोगिताश्रयाधिकरणावृत्त्यभावाऽप्रतियोगीति ज्ञानाद् गुणो विशिष्टसत्तावानित्यापत्तिरिति भावः । विशेषाभाववत्ताज्ञानं प्रति सामान्यवत्तानिश्चयस्याऽप्रतिबन्धकत्वादिति यावत् । ननु प्रतियोगिवैयधिकरण्यघटितकल्पे व्याप्यवृत्तिसाध्यकस्थलेऽतिव्याप्तिभियाऽग्रे साध्यतावच्छेदके व्याप्यवृत्तितानवच्छेदकत्वविशेषणं निवेशयिष्यते, एवं च नोक्तातिप्रसङ्ग(१) इत्यत आह **विशिष्टसत्त्वस्यापीति** । **व्याप्यवृत्तित्वविरहाच्चेति** । साध्यतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपव्याप्यवृत्तित्वस्य नित्यमात्रवृत्तिसाध्ये एव सत्त्वादित्यर्थः । **आत्मान्यत्वे सतीति** । भेदवैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन, अन्यथाऽऽत्मनो भूतत्वं स्यादिति । व्याप्यवृत्तितया व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वरूपं यथाश्रुतमेवेति भावः । अथवा स्वसमानाधिकरणाऽ-

---

अन्वयव्यभिचारएव चाऽतिव्याप्तिः, एवं चाऽव्याप्यवृत्तिसाध्यकस्थलीयप्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानस्य व्याप्यवृत्तिसाध्यकसद्धेतौ प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानादनुमित्युदयेन व्यतिरेकव्यभिचारपर्यवसन्नाऽव्याप्तिवारणायाऽव्याप्यवृत्तिसाध्यकानुमितित्वमेव जन्यतावच्छेदकं वाच्यम्, तथाचाऽन्वयव्यभिचारपर्यवसन्नोक्तव्याप्यवृत्तिसाध्यकातिव्याप्तेरप्यसम्भवः, व्याप्यवृत्तिसाध्यकानुमितेस्तज्जन्यतावच्छेदकानाक्रान्तत्वेनाऽपत्त्यभावात् । नच अव्याप्यवृत्तिसाध्यस्यापि व्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानादेवानुमित्युदयेन तत्र तद्घटितव्याप्तिज्ञानस्य व्यतिरेकव्यभिचारो दुर्वारः, अव्याप्यवृत्तित्वेन ज्ञायमानसाध्यकानुमितित्वस्य तज्जन्यतावच्छेदकत्वे च व्याप्यवृत्तिविशिष्टसत्तादेरव्याप्यवृत्तित्वभ्रमदशायां तत्साध्यकव्यभिचारिण्यतिव्याप्तिर्दुर्वारैवेति ।

(१) एतेन व्यभिचारिणः सर्वलक्षणस्याऽलक्ष्यतया कथमतिव्याप्तिदानमयुक्तमिति निरस्तम् । व्याप्यवृत्तितानवच्छेदकत्वनिवेशेनैवाऽतिप्रसङ्गवारणात् ।

नचैवं पारिभाषिकव्याप्यवृत्तितानवच्छेदकत्वस्याऽत्रापि सत्त्वात्कथमतिप्रसङ्गवारणमिति वाच्यम् । इदानीं पारिभाषिकव्याप्यवृत्तित्वादरे "नच विशिष्टसत्त्वस्य व्याप्यवृत्तितया" इति ग्रन्थासंगतेः, विशिष्टसत्त्वस्य तादृशव्याप्यवृत्तित्वविरहात, परन्तु अव्याप्यवृत्तिसाध्यकस्थलीयव्यवहारौपयिकलक्षणे एव व्याप्यवृत्तितानवच्छेदकत्व साध्यतावच्छेदके निवेशनीयम्, नानुमित्यौपयिकलक्षणे, प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकमात्मत्वमिति ज्ञानादपि अयमात्मा इति व्याप्यवृत्तिसाध्यकानुमित्युदयात्, एवं च प्रतियोगिवैयधिकरण्यघटितलक्षणस्य तादृशविशेषणानाक्रान्तत्वेनातिप्रसङ्गोऽस्त्येवेति विभावनीयम् ।

**न चोभयत्वमेकविशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तदभावो मनसि सङ्गत एव प्रतियोगिव्यधिकरण इति वाच्यम् । उभयत्वं हि न वि-**

सार्वभौममतमाश्रित्य ह्यङ्क्ते न चेति । वाच्यमिति परेणान्वयः । तदभावः—भूतत्वमूर्तत्वोभयाभावः । सङ्गत एवेति । प्रतियोगितावच्छेदकावच्छिन्नत्वाऽप्रभावाऽप्रतियोगित्वमेव व्याप्यवृत्तित्वम्, अभावे स्वसामानाधिकरण्यं च स्वप्रतियोगिमत्ताप्रहविरोधिताघटकसम्बन्धेनेति ।

केचित्तु समवायेन साध्यतायामतिव्याप्तिमुक्त्वा स्वरूपसम्बन्धेन भूतत्वमूर्तत्वोभयसाध्यकस्थले तामाह दीधितौ भूतत्वमूर्त्तत्वोभयेति । भूतत्वमूर्त्तत्वयोर्विशेषगुणविशेषपरिमाणविशेषरूपत्वेऽननुगमेन भूताद्यनुगताकारप्रतीत्यनिर्वाहः, एवं पृथिव्यादिचतुष्टयवृत्तिगुणव्यक्तेर्मनस्यभावेनोभयाभावस्य यथाश्रुतप्रतियोग्यसामानाधिकरण्यसम्भवेन प्रतियोगितावच्छेदकावच्छिन्नेत्यस्य व्यावृत्त्यसङ्गतिरपि अतस्तयोः पृथिव्यादिपञ्चान्यतमत्वरूपतैवेति स्वरूपसम्बन्धेनैव साध्यत्वम् । दीधितिकृदुक्तसाध्ययोर्व्याप्यवृत्तित्वे तु पटान्यत्वविशिष्टसंयोगवान् द्रव्यत्वादित्यत्रातिव्याप्तिर्बोध्येत्याहुः ।

दीधितौ उभयत्वम्—भूतत्वमूर्तत्वोभयत्वम् । एकविशिष्टापरत्वम्—भूतत्वविशिष्टमूर्त्तत्वत्वम् । वैशिष्ट्यातिरिक्तमुभयत्वं नास्तीत्याशयः । तथाच भूतत्वमूर्तत्वोभयाभावस्य भूतत्वविशिष्टमूर्त्तत्वरूपप्रतियोग्यसमानाधिकरणत्वादेव नातिव्याप्तिः । ननु भूतत्वविशिष्टमूर्तत्वस्य शुद्धमूर्तत्वानतिरिक्ततया मूर्तत्वरूपप्रतियोगिसामानाधिकरण्येन कथं तदभावः प्रतियोगिव्यधिकरण इत्यत आह विशिष्टं चेति । भूतत्वविशिष्टमूर्त्तत्वं चेत्यर्थः । केवलात्—मूर्त्तत्वात्, न विशिष्टत्वाद्—न एकविशिष्टापरत्वात्, अनतिरिक्तम्—अभिन्नम्, किन्तु अतिरिक्तमेवेत्यर्थः ।

[१] अथ उभयत्वं न विशिष्टत्वादनतिरिक्तमित्यत्र नञ्द्वयोपादानं व्यर्थम्, उभयत्वं विशिष्टत्वादतिरिक्तमित्यस्यैव सम्यक्त्वादिति चेन्न । उभयत्वत्वावच्छेदेनाऽतिरिक्तत्वलाभार्थं तदुपादानात् । नञ्पदस्यानुयोगितावच्छेदकावच्छेदेनान्वयबोधजनकत्वस्य व्युत्पत्तिसिद्धत्वादिति भावः(१) ।

**प्रतियोगितावच्छेदकावच्छिन्नत्वाऽप्रवेशेऽपीति** । मनोवृत्तिकेवलमूर्त्तत्वस्य

(१) [क] ननु तथापि उभयत्वं न विशिष्टत्वमित्युक्त्यापि तद्बोधसम्भवेन तदुपेक्ष्य नञ्द्वयाभिधानमनुचितमिति चेत्, अत्र केचित् । अत्र वैशिष्ट्यभेदसाधकस्य वैशिष्ट्यविरहेपि घटत्वपटत्वयोरित्यादिहेतोः पटत्वांशे घटत्ववैशिष्ट्यज्ञानाविषयत्वेऽपि तदुभयत्वस्य प्रत्यक्षविषयत्वादित्यर्थः । पटत्वांशे घटत्ववैशिष्ट्याविषयकप्रत्यक्षविषयत्वादिति यावत् । फलतो वैशिष्ट्यत्वेनाऽनवच्छिन्नविषयितानिरूपकत्वादिति पर्यवसितोऽर्थः । एवं च संख्यापरिमाणोभयीयं ज्ञानमित्यादौ संख्यापरिमाणोभयत्वस्य फलतस्तादृशैकज्ञानविषयत्वरूपतया वैशिष्ट्यस्यापि तत्र विषयतया तयोर्भेदाऽसम्भवेन यथाश्रुतस्य वैशिष्ट्यभेदरूपसाध्यस्यांशतो बाधापत्तिः । वैशिष्ट्यत्वेनाऽनवच्छिन्नविषयितानिरूपकत्वस्य वैशिष्ट्यभेदार्थकस्य साध्यत्वे साध्यहेत्वोरविशेषापत्तितो नञ्द्वयाभिधानम्, तेन वैशिष्ट्यत्वेनाऽनवच्छिन्नविषयितानिरूपकत्वाभावाभाववादिति साध्यम्, तादृशविषयितानिरूपकत्वादित्येव हेतुरिति पर्यवसितम् । वैशिष्ट्यत्वावच्छिन्नविषयित्व उभयत्वत्वावच्छिन्नविषयित्वयोर्भेदाच्च न

शिष्टत्वादनतिरिक्तम्, न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात्, वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात् ।

---

षेऽपीत्यर्थः । ननु उभयत्वस्य विशिष्टत्वातिरिक्तत्वेऽपि सहजतः प्रतियोगिव्यधिकरणस्य विशिष्टत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकमेव उभयत्वमतो नातिव्याप्तिः, विशिष्टत्वावच्छिन्नाभावस्योभयत्वावच्छिन्नाभावानतिरेकादत आह नवेति । तदवच्छिन्नाभावः—उभयत्वावच्छिन्नाभावः । तदवच्छिन्नाभावात्—वैशिष्ट्यावच्छिन्नाभावात् । लिङ्गव्यत्ययेनाऽनतिरिक्त इत्यनुषज्यते, तथाचातिरिक्त एवेति भावः । न चान्यत्रोभयाभावस्य विशिष्टाभावातिरिक्तत्वेऽपि प्रकृते भूतत्वविशिष्टमूर्तत्वाभावस्यैव तदुभयत्वावच्छिन्नप्रतियोगिताकत्वं, समनियताभावयोर्लाघवेनैकत्वादिति वाच्यम् । तावताऽपि हेतुमतो यादृशप्रतियोगिताश्रयनाधिकरणत्वं तादृशप्रतियोगि-

भूतत्वविशिष्टमूर्तत्वरूपप्रतियोगिनोऽन्यत्वादिति भावः । ननु उभयत्वस्य विशिष्टत्वातिरिक्तत्वमेवाऽतिव्याप्तिसम्पादकतया व्यवस्थापनीयम्, न तूभयत्वावच्छिन्नाभावातिरिक्तत्वमपि तस्याऽतिव्याप्त्यसम्पादकत्वादिति 'नवे'त्यादिना तदतिरिक्तत्वव्यवस्थापनमसङ्गतमत आह नन्विति । उभयत्वावच्छिन्नाभावानतिरेकादिति । तथाच तदनतिरिक्तत्वे उभयत्वस्य हेतुसमानाधिकरणविशिष्टरूपप्रतियोग्यसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वान्नातिव्याप्तिरिति तदतिरिक्तत्वस्याऽतिव्याप्तिसम्पादकत्वेन नवेत्यादिना तद्व्यवस्थापनं नायुक्तमिति भावः । नपुंसकलिङ्गस्याऽनतिरिक्तमित्यस्य तदवच्छिन्नाभाव इत्यनेनाऽन्वयाऽसम्भवादाह अनतिरिक्त इतीति । तावतापि—विशिष्टाभावोभयाभावयोरैक्येऽपि । अयं भावः । य-

---

यथोक्तबाधः । असमानप्रकारकतया च हेतोर्भानं न सिद्धसाधनतया विरोधि, नहि वह्निमदिति ज्ञानं वह्न्यभावाभाववदित्यनुमितौ विरोधीति कश्चिदभ्युपेतीत्याहुः ।

[ख] अन्ये तु उभयत्वस्य वैशिष्ट्यस्य चैकस्याभावेन विशिष्ट्यैव पक्षत्वेन साध्यत्वेन च घटत्वपटत्वोभयं घटत्वविशिष्टपटत्वादातिरिक्तमित्यादिरूपेणैव साध्यता, एवं च घटत्वविशिष्टपटत्वाऽप्रसिद्ध्या साध्याप्रसिद्धिरतस्तद्वारणाय घटत्ववैशिष्ट्यविषयितानिरूपितपटत्वविषयिताशून्यप्रतीतिविषयत्वमेव साध्यं कर्त्तव्यम्, तादृशी विषयिता च भ्रमे एव प्रसिद्धा, तथाच हेतोः साध्याविशेषः "वैशिष्ट्यविरहेपि प्रत्यक्षसिद्धत्वादि"-त्यस्यापि वैशिष्ट्यविषयिताशून्यप्रत्यक्षविषयत्वरूपे एवाऽर्थे पर्यवसानादिति नञ्द्वयगर्भसाध्यनिर्देशः, तेन तादृशविषयिताशून्यप्रतीत्यन्यप्रतीत्यविषयत्वरूपमेव साध्यं करणीयमिति नोक्तदोष इत्याहुः ।

[ग] वस्तुतस्तु अत्र घटत्वपटत्वोभयत्वादिरूपेण न पक्षता उभयत्वस्य वैशिष्ट्यानतिरिक्तत्ववादिमते तस्याऽलीकत्वात्, किन्तु प्रसिद्धतावदुभयव्यक्तीनां तावद्विषयकज्ञानविषयत्वरूपेणैव पक्षता । न च सामान्यरूपेण पक्षत्वे घटत्वपटत्वयोरित्यादिहेतोर्भागासिद्धिरिति वाच्यम् । सामान्येन विरुद्धत्वज्ञानकालीनतद्वैशिष्ट्यविषयिताशून्यप्रत्यक्षविषयत्वादित्यस्यैव हेतुत्वात् । घटपटत्वयोरित्युक्तिस्तु विरुद्धत्वज्ञानकालीनत्वस्फोरणायैव, एवं च सार्वभौमेण येन रूपेण वैशिष्ट्याभेदः साधनीयः अस्माभिरपि तेनैव रूपेण तद्व्यतिरेकः साधनीयः, नहि तेन सामान्यतो वैशिष्ट्याभेदः साधयितुं शक्यते वैशिष्ट्यत्वस्यैकस्याऽभावात्, नापि

न च तत्र व्याप्तिरेवोभयत्वाधिकरणस्य मूर्तत्वस्य मनसि सत्त्वादिति वा-

---

तानवच्छेदकत्वस्य भूतत्वमूर्तत्वोभयत्वेऽनपायात् अतिव्याप्तेस्तादवस्थ्या-दिति भावः। उभयत्वस्येति। प्रत्यक्षसिद्धत्वादिति परेणान्वयः, तथाच वि-रुद्धयोरिव समानाधिकरणयोरपि उभयत्वमतिरिक्तमेव, विरुद्धाविरुद्ध-स्थलीयोभयत्वप्रतीत्योः समानाकारकत्वानुभवात्, भूतत्वमूर्तत्वयो-र्विरुद्धत्वभ्रमदशायामपि उभयत्वस्य प्रत्ययाच्चेति भावः।

न चेति, वाच्यमिति परेणान्वयः। तत्र—भूतत्वमूर्तत्वोभयवान् मूर्तत्वा-

---

क्ष्यमाणरीत्या सामान्यतः प्रतियोगिताश्रयाधिकरणत्वाभावस्याऽप्रसिद्ध्या प्रतियोगितायां यादृशत्वं विवक्षणीयम्। एवं च प्रतियोगिनावच्छेदकावच्छिन्नत्वानुपादाने यदभावीययादृशप्रतियोगि-ताश्रयानधिकरणं हेत्वधिकरणं तदभावीयतादृशप्रतियोगितानवच्छेदकत्वमेव वक्तव्यम्, 'अय-मेको द्वित्वावच्छिन्नाभावप्रतियोगी'ति प्रतीत्योभयाभावीयप्रतियोगितायाः प्रत्येकस्मिन्नपि स-त्त्वेनोभयाभावीयप्रतियोगितायास्तादृशत्वाभावेन विशिष्टत्वाभावीयप्रतियोगिताया एव लक्षण-घटकतया तदनवच्छेदकत्वस्योभयत्वे सत्त्वेनाऽतिव्याप्तिर्दुरुद्धरैव समनियताभावयोरैक्येऽपि तत्प्रतियोगितानां भेदात्। उभयत्वं हि न विशिष्टत्वादनतिरिक्तम्, तत्र हेतुः—वैशिष्ट्यविर-हेऽपि(१) घटत्वपटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वादिति, घटत्वपटत्वयोः सामानाधिकरण्य-विरहेऽपि तत्रोभयव्यवहारविषयतावच्छेदकस्य प्रत्यक्षसिद्धत्वादित्यर्थः। नवा तदवच्छिन्ना-भावस्तदवच्छिन्नाभावादित्यत्र हेतुः—वैशिष्ट्यविरहेपि उभयत्वावच्छिन्नप्रतियोगिताकाभावस्य प्रत्यक्षसिद्धत्वादिति।

ननु तथापि व्यासज्यवृत्तिनिरुक्तोभयत्वेन साध्यत्वे मूर्तत्वस्य व्यभिचारितापि न सम्भ-वति एकप्रतियोगिमत्यपि उभयाभावस्य प्रतियोगिसमानाधिकरणया मूर्तत्वाधिकरणे मनसि उभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावात्, हेतुमति प्रतियोगिव्यधिकरणस्यैव च साध्या-भावस्य व्यभिचारित्वात्, व्यभिचारलक्षणे तु प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्ता-

---

तत्तद्वैशिष्ट्याभेदः साधनीयः अस्माभिरपि तेनैव रूपेण तद्व्यतिरेकः साधनीयः बाधात्, किन्तु तत्तद्वैशि-ष्ट्यातिरिक्तभेद एव साधनीयः, अस्माभिरपि तद्व्यतिरेक एव साधनीय इति साध्यस्य नञ्द्वयगर्भता-ऽऽवश्यकीति दिक्।

(१) घटत्वपटत्वयोः सामानाधिकरण्यविरहेपि तत्रोभयव्यवहारविषयतावच्छेदकस्य प्रत्यक्षसिद्धत्वादि-त्यर्थः। यद्यपि घटत्वपटत्वोभयामिति प्रतीतौ कालिकसम्बन्धघटितसामानाधिकरण्यवैशिष्ट्यस्य विषयता-सम्भवः, तथापि वाच्यत्वघटत्वोभयं समवेतमित्यादिप्रतीतिव्यवहारविरहेण उभयं समवेतमिति प्रतीति-व्यवहारयोः समवायिसमवेतत्वरूपवैशिष्ट्यविषयताया अभ्युपगन्तव्यतया घटत्वपटत्वोभयं समवेतमित्यादौ तादृशवैशिष्ट्याप्रसिद्ध्या व्यासज्यवृत्तिधर्म एव विषय इति भावः। तथाच तदनुरोधेन व्यासज्यवृत्तिधर्मवि-शेषस्य उभयव्यवहारविषयताया आवश्यकत्वे एकविशिष्टापरत्वस्य तद्व्यवहारविषयत्वमप्रामाणिकम्, अतो न भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्र एकविशिष्टापरत्वस्य साध्यताच्छेदकत्वप्रसक्तिः, तथासति अनुमिते-रुभयत्वानवच्छिन्नप्रकारकताऽनुपपत्तेरित्यलम्।

च्यम् । तथात्वेऽपि उभयत्वेन रूपेण तत्राऽसत्त्वात् 'नात्रोभयमि'ति प्रतीतेर्दु-र्वारत्वात् ।

अत्यन्तपदञ्चात्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्य अत्य-

---

दित्यत्र । व्याप्तिरेवेति । तथाच तस्य लक्ष्यतया तद्वारणप्रयासोऽनुचित इति भावः । तथात्वेऽपीति । उभयत्वाश्रयस्य मूर्तत्वस्य मनसि सत्त्वेपीत्यर्थः । तथाच हेतुमत्त्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नवत्तास्थल एव व्याप्ति-रतो नैतल्लक्ष्यमिति भावः । वृत्तिमति व्याप्त्यभावस्य व्यभिचारनियत-त्वात् व्यभिचारं ग्राहयति नात्रोभयमिति । अत्र—मूर्तत्वाश्रये मनसि ।

ननु वह्न्यादिभेदमादायाऽव्याप्तेः प्रतियोग्यसमानाधिकरणपदेनैव वार

---

निवेशादित्याशङ्कते नचेति । व्याप्तिरेव—व्याप्तिरिष्टैव । तत्र—मनसि । उभयत्ववि-शिष्टवत्ताया मनसि असत्त्वादित्यर्थः । तथाच तत्रोभयत्वविशिष्टवैशिष्ट्यानुमितेर्भ्रमतया तत्प्र-योजकहेतोर्न सद्धेतुत्वस्वीकार इति भावः । अत एव व्यभिचारलक्षणेऽपि प्रतियोगितावच्छे दकावच्छिन्नवैयधिकरण्यपर्यन्तं निवेश्यमेव । वृत्तिमति--हेतौ । व्यभिचारनियत-त्वात्--व्यभिचारव्याप्यत्वात् । गगनहेतौ व्याप्त्यभावेऽपि व्यभिचारो नास्तीत्यतस्तद्व्यव-च्छेदायोक्तम्-वृत्तिमतीति । गगनहेतौ अव्याप्यत्वन्तु साध्यासामानाधिकरण्यप्रयुक्तं बोध्यम् । नोभयमिति । तथाचोभयत्वावच्छिन्नाभाववद्वृत्तित्वस्य मूर्तत्वे सत्त्वेन व्यभिचारः स्पष्ट एवेति । इदमुपलक्षणम् 'नात्र विशिष्टसत्तेति प्रतीतेर्दुर्वारत्वादित्यपि द्रष्टव्यम् ।

प्रतियोग्यसामानाधिकरण्यस्याऽभावविशेषणत्वे लक्षणेऽत्यन्तपदं व्यर्थम् , धूमाद्यधिकरण-वृत्तिवह्न्यादिभेदीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्त्वेऽपि तादृशभेदस्य प्रतियो-गिसमानाधिकरणत्वेनैव वारणात् इत्याशङ्कते—नन्विति । दीधितौ अत्यन्ताभावत्वनिरूप-कप्रतियोग्यसामानाधिकरण्यस्येति । लाभायेत्यग्रिमेणाऽन्वयः । एक एवाभावः(१) कस्य(२)चिदत्यन्ताभावः कस्य(३)चिद्भेदोपि भवति, तत्र (४)यस्याऽत्यन्ताभावः (५)स एवाऽत्यन्ताभावत्वनिरूपकप्रतियोगी तदसामानाधिकरण्यलाभायेत्यर्थः । अत्यन्ताभावत्व निरूपकप्रतियोगितया इति । प्रतियोगितानवच्छेदकमित्यत्र या प्रतियोगिता प्रविष्टा तत्राऽत्यन्ताभावत्वरूपानुयोगितानिरूपकत्वस्य च लाभायेत्यर्थः । अन्यथा—प्रतियोग्यसा-मानाधिकरण्यघटकप्रतियोगितायामत्यन्ताभावत्वरूपानुयोगितानिरूपकत्वानिवेशे । सर्वस्यैवा-ऽभावस्य-घटाभावादेः । स्वसमानाधिकरणाभावान्तराभिन्नत्वात् स्वं-घटाभावः, तत्समानाधिकरणं यदभावान्तरं पटाभावादि, तद्भिन्नत्वात् । घटाभावस्य पटाभावभेदवत्त्वा-दिति यावत् । तद्भेदस्य-पटाभावभेदस्य, स्वस्वरूपानतिरिक्ततया-हेतुसमानाधि-करणत्वेनोपादेयघटाभावात्मकतयेत्यर्थः ।

---

(१) घटाभावः । (२) घटस्य । (३) घटाभावस्य । (४) घटस्य (५) घट एव ।

न्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभाय, अन्यथा सर्वस्यैवाभावस्य स्व-
समानाधिकरणाभावान्तरभिन्नत्वात्तद्भेदस्यं स्वस्वरूपानतिरिक्ततया प्रतियोग्य-
सामानाधिकरण्यस्यैव दुर्लभत्वापत्तेः, सर्वेषामेवाऽभावानां हेतुसमानाधि-

---

णादत्यन्तपदं व्यर्थमत आह अत्यन्तपदञ्चेति । अत्यन्ताभावत्वनिरूपकं यत् प्र
तियोगित्वं तदाश्रयवैयधिकरण्यविवक्षायाः फलमाह अन्यथेति । तद्भेदस्य–स्व
समानाधिकरणाभावान्तरभेदस्य । स्वस्वरूपानतिरिक्ततयेति । अनवस्थाभयेने-
त्यादिः । दुर्लभत्वापत्तेरिति । हेतुसमानाधिकरणाभावमात्रस्यैव स्वात्मकभेदप्र-
तियोगि यदभावान्तरं तत्समानाधिकरणत्वादिति भावः । न च भावस्वरू-
पाभावस्यैव प्रतियोग्यसामानाधिकरण्यं सुलभमिति वाच्यम् । तस्याऽपि

---

घटाभावस्य पटाभावभेदरूपत्वसाधिकां युक्तिमाह अनवस्थाभयेनेत्यादिरिति ।
पटाभावभेदस्याऽतिरिक्तत्वे तद्भेदस्यातिरिक्तत्वम्, एवं तद्भेदस्यापि एवंक्रमेणाऽनव-
स्थाप्रसङ्गेने(१)त्यर्थः । स्वात्मको यो भेदस्तस्य प्रतियोगि यदभावान्तरमित्यर्थः ।
स्वं–घटाभावः तदात्मको यो भेदः पटाभावभेदः, अभावमात्राधिकरणकाऽभावस्याधि-
करणस्वरूपत्वादिति(२)भावः । तस्य प्रतियोगी पटाभावस्तत्समानाधिकरणत्वात् ।
एवं न घटाभावस्य प्रतियोगी यथा घटः तथा पटाभावोऽपि, इति पटाभावात्मकप्रति-
योगिसमानाधिकरणत्वात्प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धिःस्यादतोऽत्यन्ताभावात्वनिरूपकत्व-
निवेशः । भावस्वरूपाभावस्य—पर्वतान्यत्वाभावस्य वह्न्यभावाभावस्य चेत्यर्थः । सु-
लभमिति । तादृशाभाववृत्त्यभावस्याऽभावाधिकरणकत्वाभावेन न तत्स्वरूपतेत्यभिमानः ।
तस्यापि—भावस्वरूपाभावस्यापि । स्वसमानाधिकरणत्वेति । स्वं–वह्न्यभावभावः

---

( १ ) नचैवं पटाभावेऽपि,पटाभावभेदसत्त्वप्रसङ्गः, तदाभिन्नस्य घटाभावस्य सत्त्वादिति वाच्यम् । घटा-
भावस्य तादात्म्येनैव पटाभावभेदव्यवहारप्रयोजकत्वाभ्युपगमात् ।

( २ ) यद्यपि घटाभावादिवृत्तेः पटाभावभेदस्य घटाभावादिरूपाधिकरणस्वरूपत्वं न सम्भवति तादृश
भेदस्याऽभावमात्राधिकरणकत्वाभावात्, एवं घटाभावात्मकत्वे भावप्रतियोगिकत्वेनाऽभावमात्रप्रतियोगिकत्वा-
भावाच्च । तथापि अधिकरणभेदेनाऽभावभेदाभ्युपगमेऽभावमात्राधिकरणकत्वमक्षतमेव, एवं तादृशभेदस्य
घटाभावत्वेन भावप्रतियोगिकत्वेऽपि तादृशभेदत्वादिनाऽभावमात्रप्रतियोगिकत्वमस्त्येव, अभावमात्रप्रतियोगिक
इत्यनेनाऽभावमात्रवृत्तिप्रतियोगिताक इति वा विवक्षणीयम्, प्रतियोगितावच्छेदकभेदेन प्रतियोगिता भिन्नै-
वेति । यद्वा स्वात्मकभेदेत्यनेन घटाभावभिन्नत्वावच्छिन्नभेदोक्त्या पटाभावभेदस्याऽधिकरणरूपत्वासम्भवेऽपि न
क्षतिरिति ध्येयम् ।

इदमत्राकूतम् । अभावात्यन्ताभावो नाऽधिकरणस्वरूपः, अनवस्थाविरहात् । तथाहि समानाधिकरण-
सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण योऽभावः स प्रथमाभावप्रतियोग्यात्मा, तदभावश्च प्रथमःभावः
व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेणाभावोऽसिद्ध एव, व्यधिकरणसम्बन्धावच्छिन्नप्रति-
योगिताकः सर्वोऽप्यभावो गगनाभाव एव नित्याभावस्य कालिकेन सर्वोऽभावः, कालिकेन घटत्वाभाव एव
स्वरूपेण तदभावश्च प्रतियोगिरूपः, एवं विशेषरूपेण संसर्गता च न स्वीक्रियत इति अभावभेद एवाऽधि-
करणात्मेति सिद्धम् ।

करणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वादभावसाध्यकाऽव्याप्तेश्चेति सम्प्रदायविदः ।

---

स्वसमानाधिकरणाभावान्तरभिन्नत्वात्, अभावमात्राधिकरणक इवाऽभावमात्रप्रतियोगिकोऽपि विशिष्टाभावाद्यनात्मकोऽभावोऽधिकरणभिन्नो नेष्यते, लाघवात् । अग्रे विवक्षणीयस्य साध्यताघटकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यस्य वह्निमान् धूमादित्यादौ घटाद्यभावे सत्त्वान्न सर्वत्राऽप्रसिद्धिः, किन्तु स्वरूपसम्बन्धेन अभावस्य साध्यतायामेवेति सूचयितुमप्रसिद्धिमपहाय दुर्लभत्वमित्युक्तम् ।

---

तत्समानाधिकरणं यदभावान्तरं घटाभावस्तद्भिन्नत्वादित्यर्थः । तथाच वह्न्यभावाभावस्य प्रतियोगी घटाभावोऽपीति । ननु भाववृत्तेर्भेदस्य नाधिकरणत्वस्वरूपत्वसम्भवः, अभावमात्राधिकरणकत्वाभावादत आह अभावमात्रप्रतियोगिकोऽपीति । तथाच भाववृत्तेर्भेदस्याऽभावामात्रानधिकरणकत्वेऽपि अभावमात्रप्रतियोगिकत्वादेवाऽधिकरणस्वरूपत्वं सम्भवतीत्याशयः । विशिष्टाभावाद्यनात्मक इति । अभावप्रतियोगिकस्य विशिष्टाभावस्याप्यधिकरणरूपत्वे ह्रदे ह्रदवृत्तित्वविशिष्टघटाभावो नास्तीति प्रत्ययापत्तेः, ह्रदवृत्तित्वविशिष्टघटाभावाभावरूपस्य वह्न्यभावस्य तत्र सत्त्वात् । यद्वा विशिष्टाभावेत्यस्य विशिष्टप्रतियोगिकाभावेत्यर्थः । तथाच विशिष्टाभावस्याधिकरणरूपत्वे घटाभावस्य घटाभावप्रतियोगिकत्वापत्तिः, घटाभावप्रतियोगिकस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य घटाभावेऽपि सत्त्वेन तदात्मकत्वात् । अग्रे विवक्षणीयस्य वह्निमान् धूमादित्यत्र समवायेन वह्न्यभावमादायाऽव्याप्तिवारणायेति शेषः । घटाद्यभावे सत्त्वादिति । घटाभावात्मकप्रतियोगिनः साध्यतावच्छेदकीभूतसंयोगेनाऽधिकरणाऽप्रसिद्ध्या ग्रहीतुमशक्यतया घटात्मकप्रतियोग्यसामानाधिकरण्यस्य घटाभावे सत्त्वादित्यर्थः । अभावस्य साध्यतायामेवेति । 'इदमुपलक्षणम् । वह्निमत्त्वप्रकारकप्रमाविशेष्यतावान् धूमादित्यत्राऽप्यव्याप्तिर्बोध्या । (१)नच घटाभावानुयोगिकस्वरूपसम्बन्धेन घटाभाववद्भिन्नभेदस्यापि घटाभावस्वरूपत्वेन तत्प्रतियोगिताश्रयवह्नेः पर्वते सत्त्वेन वह्निमान्

---

(१) केचित्तु ननु अत्यन्ताभावत्वनिरूपकप्रतियोगितालाभायाऽत्यन्तपदं यदि न दीयेत भावसाध्यके वह्निमान् धूमादित्यादावव्याप्तिसम्भवे तत्परित्यागोऽनुचितः, तत्र घटाभावादेरपि घटाभाववद्भिन्नभेदस्वरूपत्वात्तत्प्रतियोगिताश्रयेण वह्निना समानाधिकरणत्वादिति चेन्न । घटाभाववत्त्वस्य स्वरूपसम्बन्धेन विवक्षणे वह्नेरपि स्वरूपेण तद्वत्त्वात्तद्भिन्नत्वविरहात् । वह्निभिन्नानुयोगिकस्वरूपेण तद्वत्त्वोक्तौ तद्भिन्नभेदप्रतियोगितावच्छेदकत्वस्य वह्नित्वादावेव स्वीकारात् । विषयितासम्बन्धेन घटाभाववद्भिन्नभेदमादायाऽव्याप्तिसम्भवेऽपि वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वघटकत्वानङ्गीकारात्, अतोऽभावसाध्यकस्थलानुसरणम् । न च तथापि घटाभाववद्वह्नित्वाभावोभयाभिन्नभेदमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् । प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशेनैव तद्वारणात् । न चैवमपि घटाभाववतः संयोगेन साध्यतायामव्याप्तिरिति वाच्यम् । स्वरूपेण साध्यतायामित्यस्य स्वरूपेण साध्यतावच्छेदकत्वे इत्यर्थः । एवं च तत्राव्याप्तिरिष्टैवम् । यद्वा घटाभाववद्भिन्नभेदस्य भावप्रतियोगिकत्वान्न घटाभावात्मकत्वमिति प्राहुः ।

अथ यदा गोत्वं तदा गौरित्यत्राऽतिव्याप्तिः, प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् ।

---

अत्यन्ताभावत्वनिरूपकप्रतियोगितानवच्छेदकत्वविवक्षायाः फलमाह सर्वेषामिति । भावभेदस्याऽतिरिक्तत्वास्वीकारादाह अभावसाध्यकेति । तथाच घटभिन्नं पटत्वादित्यादौ पटत्वसमानाधिकरणनिरुक्तप्रतियोगिव्यधिकरणगोत्वाद्यभावस्य घटभेदभिन्नत्वात् तादृशभेदस्य च गोत्वाद्यभावरूपत्वात्तत्प्रतियोगितावच्छेदकमेव घटभेदत्वमित्यव्याप्तिरिति भावः ।

सम्प्रदाय इत्यस्वरसः, तद्बीजं तूक्तविवक्षायां सर्वेषां हेतुसमानाधिकरणात्यन्ताभावानामत्यन्ताभावत्वनिरूपकेण पूर्वक्षणावृत्तित्वविशिष्टस्वाभावात्मकेन प्रतियोगिना समं सामानाधिकरण्यादभावसाध्यकाऽव्या-

---

धूमादित्यत्रापि प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धिरिति वाच्यम् । स्वावच्छिन्नभिन्नभेदस्य स्वरूपत्वानङ्गीकारात्, विशेषणरूपेण संसर्गत्वानभ्युपगमाच्च ।

वस्तुतस्तु साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य स्वनिरूपितप्रतियोगितावच्छेदकतायां निवेशान्नाऽप्रसिद्धिसम्भावना । न च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तिवारणाय साध्यताच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकानिष्ठत्वोभयाभावस्य विवक्षणीयतया विषयितासम्बन्धेन घटाभाववान्भिन्नभेदमादायाऽप्रसिद्धितादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नावच्छेदताकनिरूपकताकाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावस्य निवेशात्पारिभाषिकस्य तस्यानिवेशादिति ।

हेतुसमानाधिकरणश्चासौ अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणश्चेति हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणः, स चासौ अभावान्तरश्चेति तदात्मकस्येत्यर्थः । निरुक्तप्रतियोगिव्यधिकरणेति । अत्यन्ताभावत्वनिरूपकीभूतगोत्वनिष्ठप्रतियोगिताश्रयासमानाधिकरणेत्यर्थः । दीधितौ स्वभेदस्येति । स्वपदं साध्यपरम् । स्वाभावात्मकेनेति । स्वं-गोत्वाभावः(१) ।

[१] ननु अत्यन्ताभावत्वनिरूपकप्रतियोगित्वोपादानेऽपि घटभिन्नं पटत्वादित्यत्र हेतुसमानाधिकरणगोत्वाभावे कालिकसम्बन्धावच्छिन्नगोत्वाभावाभावस्य सत्त्वात् अत्यन्ताभावत्वरूपानुयोगितानिरूपितगोत्वाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतायाः सत्त्वात्पुनरव्याप्तितादवस्थ्यमिति चेन्न ।

प्रतियोगिवैयधिकरण्यशरीरे स्वनिरूपितप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशेनाऽदोषत् । न चाऽत्यन्तपदं व्यर्थम्, पटाभावभेदनिरूपितप्रतियोगि-

---

(१) (क) तथाच 'पूर्वक्षणवृत्तित्वविशिष्टो यो गोत्वाभावस्तस्य योऽभावस्तस्याभावः प्रथमाभाव एव, स च गोत्वाभावाऽनतिरिक्त एव, तस्य द्वितीयाभावरूपप्रतियोगिसामानाधिकरण्यात्प्रतियोग्यसमानाधिकरणाभाव एव दुर्लभ इति बोध्यम् ।

शितादवस्थ्यम् । यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वप्रवेशे तु व्यर्थमेवाऽत्यन्तपदमिति ध्येयम् ।

---

तायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहादिति वाच्यम् । तस्य तादात्म्येन घटसाध्यकघटत्वहेतौ तादात्म्येनाभावस्योपादेयतया तमादायाऽव्याप्तिपरत्वात् । भेदत्वस्याऽखण्डोपाधित्वमते स्वनिरूपितप्रतियोगितायां साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वमर्थो वाच्यः, एवं च नाऽत्यन्तपदवैयर्थ्यम् । एतेन वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे तादात्म्येन साध्यतास्थलेऽव्याप्त्यापत्तिरिति निरस्तम् । नचैवमपि वह्निप्रतियोगिकसंयोगेन वह्नेः साध्यत्वेऽव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकत्वोभयाभावस्य प्रतियोगितायां प्रवेश्यत्वात्(१) ।

---

(१) [ क ] ननु तदुपादानेऽपि कालिकसम्बन्धेन घटसाध्यकतत्क्रियात्वहेतौ अव्याप्तिः पटाभावे वर्त्तमानस्य कालिकसम्बन्धावच्छिन्नपटाभावाभावस्य पटाभावस्वरूपतया तन्निरूपितसाध्यतावच्छेकीभूतकालिकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकपटाभावत्वावच्छिन्नाधिकरणतायाः सत्त्वात्प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धिरिति चेन्न ।

हेत्वाधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वविवक्षणेनाऽदोषात् । वृत्तिता च स्वरूपसम्बन्धावच्छिन्ना ग्राह्या । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकपटाभावाभावस्वरूपानुयोगितायाः हेत्वाधिकरणनिरूपितवृत्तितावच्छेदकत्वाभावात् । न च द्रव्यत्वशून्यं सत्त्वादित्यत्रातिव्याप्तिः, निरुक्तसाध्याभावस्वरूपानुयोगितायां तादृशसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तित्वावच्छेदकत्वाभावादिति वाच्यम् । हेत्वाधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितत्वसाध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वोभयाभावस्यैव प्रतियोगितायां निवेशेन दोषाभावात् । न च कालिकेन घटाभावाभावसाध्यकतत्क्रियात्वहेतुकेऽव्याप्तिः प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेः हेतुसमानाधिकरणघटाभावाभावनिष्ठकालिकसम्बन्धावच्छिन्नघटाभावाभावाभावनिरूपितप्रतियोगितायां साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वाभावप्रयुक्तोभयाभावसत्त्वादिति वाच्यम् । यत्किंचिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितत्वघटितोभयाभावस्य निवेशेनाऽदोषात् ।

[ ख ] ननु निरुक्तोभयाभावनिवेशे पूर्वक्षणवृत्तित्वविशिष्टघटात्यन्ताभावाभावाभावमादायासम्भवविरहादग्रिमग्रन्थाऽसङ्गतिः पूर्वक्षणवृत्तिताविशिष्टघटात्यन्ताभावाभावाभावस्वरूपानुयोगितायां पूर्वक्षणनिरूपितवृत्तितावच्छेदकत्वसत्त्वेऽपि हेत्वाधिकरणनिरूपितवृत्तितावच्छेदकत्वाभावेनोभयाभावस्यैव सत्त्वादिति चेन्न ।

पूर्वक्षणपदेन घटादिरूपक्षणस्यैवोपादेयतया हेत्वाधिकरणनिरूपितवृत्तितावच्छेदकत्वस्य निरुक्तानुयोगितायां सत्त्वात्तादृशोभयाभावस्य निरुक्तप्रतियोगितायां सत्त्वेन ग्रन्थसङ्गतेः । पूर्वक्षणावच्छिन्नत्वस्य तादृशवृत्तितायामेव प्रवेशेन वा तत्सङ्गतिरिति ।

[ ग ] ननु यत्किंचिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकधर्मावच्छिन्नाभाववत्त्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणमित्यर्थेनैव निखिलदोषाणां वारणसम्भवे उभयाभावनिवेशे प्रयोजनाभावादेकाभावनिवेश एव कार्यः, तथाच, घटाभावभेदीयप्रतियोगितायां यत्किंचिद्धेत्वधिकरणवृत्तितावच्छेदकीभूतधर्मावच्छिन्नत्वस्यैव सत्त्वेन दोषाभावादत्यन्तपदं व्यर्थमिति चेन्न ।

अखण्डाभावघटकतया सार्थक्येन तादृशोभयाभावनिवेशान्न तद्वैयर्थ्यमिति ।

अथवा हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकेत्यादि निवेशेनाऽपि दोषाभावात् । वृत्तिता च स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्ना ग्राह्या इत्याहुः ।

परे तु घटसाध्यकतत्क्रियात्वादिहेतौ दोषाणां सम्भवाद इत्यस्वरसेनैव सूचितत्वात्फक्किकैव न संभवतीत्याहुः ।

गोध्वंसवत्त्वेनेति । प्राचीनमते गवात्यन्ताभावस्य गोध्वंसविरोधित्वादि-त्याशयः । न च दैशिकविशेषणतया यत्र गोध्वंसस्याधिकरणं तत्रैव गवा-त्यन्ताभावस्य विरोधित्वात् कालिकसम्बन्धेन गोध्वंसवत्यपि प्रलये तद-त्यन्ताभावसत्त्वे विरोधाऽभावान्नातिव्याप्तिरिति वाच्यम् । प्राचांमते भूतलादिदेशस्येव कालस्यापि दैशिकविशेषणतया गोध्वंसवत्त्वात्, अत एव त्वक्संयुक्तकाले विशेषणतया वायुनाशाधीनवायुस्पर्शनाशस्य सा-क्षात्कारः शब्दानित्यतायां मिश्रैरुक्तः । यद्यपि एवमपि नातिव्याप्तिसम्भ-वः, कालिकसम्बन्धावच्छिन्नगवात्यन्ताभावस्यैव प्रलये कालिकसम्बन्धे-न वर्त्तमानत्वात्, ध्वंसादिमति दैशिकसम्बन्धेनैवाऽत्यन्ताभावस्यानुप-गमात्, तथापि प्रतियोगिवैयधिकरण्याघटितस्य व्याप्यवृत्तिसाध्यकस्थ-लीयलक्षणस्याऽवश्यं दैशिकविशेषणतयाऽभावे हेतुसामानाधिकरण्यघ-टितत्वात्तस्यैवाऽतिव्याप्तिर्बोध्या ।

---

सम्प्रदायानुमताऽत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशाभिप्रायेणाऽतिव्याप्तिमाशङ्कते दी० अथेति । गोगोत्वयोः कालिकसम्बन्धेन साध्यहेतुतालाभाय गोमान् गोत्वादित्यनभिधाय कालिकसम्बन्धावच्छिन्नवृत्तित्वबोधकदाप्रत्ययघटितोदाहरणाभिधानम् । एवमग्रेपि । प्रलयस्येति । व्यभिचारनिरूपकहेत्वधिकरणस्येत्यादिः । आशय इति । एतदेवाग्रे निराकृत्य समाधेयमि-त्यवगन्तव्यम् । विरोधित्वादिति । न च समवायसम्बन्धावच्छिन्नप्रतियोगि-ताकगवात्यन्ताभावेनैव सह ध्वंसस्य विरोधेन प्रकृते कालिकसम्बन्धावच्छिन्नप्रतियोगिताकग-वात्यन्ताभावस्य विरोधित्वं न सम्भवतीति वाच्यम् । गोध्वंसवति सास्नादौ समवायेन गौर्नास्तीति बुद्धेर्ध्वंसेनैवोपपत्तौ तत्र समवायेन गवात्यन्ताभावसत्त्वे मानाभाव इति युक्तेर्विरो-धबीजभूतायाः सम्बन्धान्तरमन्तर्भाव्यापि सुवचत्वेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकग-वात्यन्ताभावेन सह विरोधस्य सम्भवात् । तत्रैव-स्वरूपसम्बन्धेन गोध्वंसवत्येव । तदत्य-न्ताभावसत्त्वे-गवात्यन्ताभावसत्त्वे, स्वरूपसम्बन्धेनेत्यादिः । न च देशे दैशिकसम्बन्धेन विरोधवत् काले कालिकसम्बन्धेन विरोधात् कालस्य कालिकसम्बन्धेन गोध्वंसवत्त्वेऽपि अतिव्याप्तिसङ्गतेर्दैशिकसम्बन्धेन गोध्वंसवत्त्वाभावेऽपि न क्षतिरिति वाच्यम् । तथासति गोध्वंसस्य महाप्रलये दैशिकसम्बन्धेनाऽसत्त्वेन संसर्गाभावनिवेशेऽप्यतिव्याप्तिवारणाऽसम्भवेन संसर्गाभावमात्रोक्तावपि इत्याद्युत्तरग्रन्थासङ्गतेः । विरोधाऽभावादिति । ध्वंसस्य विशेष णतया प्रतियोगिसमवायिनियतत्वात् कालस्य चाऽतथात्वादिति भावः । भूतलादिदेशस्ये-वेति । भूतले घटो नष्ट इत्यादिप्रतीतेः स्वरूपेण घटध्वंसविषयकत्वम्, कालिकेन ध्वंसावगाहित्वे जले घटो नष्ट इति प्रतीत्यापत्तेः । गोध्वंसवत्त्वादिति । संसारस्याऽनादितया सर्वस्यैव कालस्य दैशिकविशेषणतया आश्रयनाशजन्यगोध्वंसवत्त्वमविरुद्धमिति भावः । अत एव—प्रतियोगिसमवायिन एव दैशिकसम्बन्धेन ध्वंसवत्त्वमिति नियमे मानाभावादेव । तथापि—कालिकसम्बन्धेन गवात्यन्ताभावस्य प्रलये वृत्तावपि । अवश्यमिति । द्रव्यम् महाकालत्वादित्यादावव्याप्तिवारणायेत्यादिः । तस्यैव—प्रतियोगिवैयधिकरण्याघटितस्यैव ।

संसर्गाभावमात्रोक्तावपि यदा स्पन्दस्तदा द्व्यणुकं, यदाऽदृष्टं तदा

न च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दैशिकसम्बन्धेन हेतुमन्निष्ठात्यन्ताभावस्याऽप्रसिद्ध्या(१) तथापि नातिव्याप्तिरिति वाच्यम् । सृष्टिकालवृत्तित्वविशिष्टगोत्वादेरत्यन्ताभावस्यैव तादृशस्य प्रसिद्धत्वादिति भावः ।

मिश्रमतं निरसितुमाह संसर्गाभावेति । अत्यन्ताभावपदेनेत्यादिः । तथा

[१] ननु प्रतियोगिवैयधिकरण्यघटिताऽव्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्याऽप्यतिव्याप्तिसम्भवः, तथाहि गवात्यन्ताभावस्य प्रतियोगी यथा गौः तथा गोध्वंसप्रागभावावपि प्राचीनमतेऽत्यन्ताभावस्य त्रितयप्रतियोगिकत्वात्, तथाच प्रलये गोध्वंसरूपप्रतियोग्यधिकरणत्वस्य सत्त्वेन गवात्यन्ताभावस्य प्रतियोगिवैयधिकरण्याऽभावेन तस्य लक्षणाघटकत्वादिति चेन्न ।

(क) गवात्यन्ताभावनिरूपितप्रतियोगित्वं कालिकसम्बन्धावच्छिन्नं गोनिष्ठम् ध्वंसप्रागभावनिष्ठा च स्वरूपसम्बन्धावच्छिन्नेति सिद्धान्तः, तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्ना यादृशप्रतियोगिता तादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वस्योक्तत्वात्, एवं च साध्यतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्ना गोनिष्ठप्रतियोगितैव तदवच्छिन्नानाधिकरणत्वस्य प्रलये सत्त्वेन तस्या लक्षणघटकत्वेनाऽतिव्याप्त्यभावादिति ।

(ख) यद्वा रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्वविशिष्टाभावमादायाऽव्याप्तिवारणायाऽवच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकतया तादृशेन समवायसम्बन्धेन ध्वंसत्वावच्छिन्नत्वस्याऽप्रसिद्ध्या तेन सम्बन्धेन गोत्वावच्छिन्नस्य च तत्राऽसत्त्वेनाऽतिव्याप्त्यभावादिति ।

(ग) वस्तुतस्तु प्रतियोग्यधिकरणवृत्तित्वमवश्यं सम्बन्धविशेषनियन्त्रितं ग्राह्यम्, अन्यथा घटाद्यभावस्य कालिकादिना प्रतियोगिसामानाधिकरण्येनाऽभावाप्रसिद्ध्यापत्तेः, तच्च स्वरूपसम्बन्धेन, तथाच कालो गोमान् गोत्वादित्यत्राऽतिव्याप्त्यभावः । न च घटभिन्नं पटत्वादित्यादावव्याप्तिरिति वाच्यम् । स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेनैव तथात्वस्योक्तत्वादिति ।

अत्यन्ताभावस्यैवेति । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्येत्यादिः । तादृशस्य—दैशिकविशेषणतया हेतुसमानाधिकरणस्य । गोत्वस्य ध्वंसाभावादिति भावः । प्रसिद्धत्वादिति । [१]ननु शुद्धसाध्यतावच्छेदककस्थलीयलक्षणे प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वं निवेशितम्, एवं च तादृशगोत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वाभावेन कथमभावप्रसिद्धिरिति चेन्न ।

तत्र निरवच्छिन्नत्वपदेनाऽवच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावस्य विवक्षितत्वात्, अन्यथा गोमान् सृष्टिकालत्वादित्यत्र यथाश्रुतनिरवच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिः स्यात् तत्र प्रलयवृत्तित्वविशिष्टगोत्वाभावस्यैव लक्षणघटकतया तत्र निरवच्छिन्नत्वाभावादेिति ध्येयम् ।

महाप्रलये गोत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसोपगन्तृमते गोध्वंसमादाय नो-

(१) नित्यस्य प्रतियोगिन एव सत्त्वात्, जन्यमात्रस्यैव ध्वंससत्त्वादित्यभिप्रायः ।

च प्रलये गोत्वावच्छिन्नध्वंसवत्त्वादेव(१) नातिव्याप्तिरिति भावः। न च गोध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेऽपि साध्यतावच्छेदकसम्बन्धीभूतकालिकविशेषणतावच्छिन्नप्रतियोगिताकत्वविरहात् कुतस्तमादायाऽतिव्याप्तिव्युदास इति वाच्यम्। साध्यतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्नस्यैव(२) हेतुसमानाधिकरणाभावप्रतियोगित्वस्य लक्षणत्वेनातिव्याप्तिरित्याशङ्कायामाह दीधितौ–संसर्गाभावप्रतियोगित्वोक्तावपीति। अत्यन्ताभावपदे·

---

(१) अन्यथा ध्वंसस्याऽत्यन्ताभावविरोधाङ्गीकर्त्तृप्राचीनमते महाप्रलये गौर्नास्तीतिप्रतीत्यनुपपत्तेरिति भावः। यद्यपि ध्वंसस्य तद्व्यक्तिप्रतियोगिकत्वस्यैवाऽनुभविकतया प्रतियोगितातिप्रसक्तस्य गोत्वस्य न प्रतियोगितावच्छेदकत्वसम्भवः। न च यथा गौर्नास्तीति प्रतीतिः सामान्यधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावावगाहिनी तथा गौर्नष्ट इति प्रतीतिरपीति वाच्यम्। गौरस्तीतिबुद्धिकालेपि अत्र गौर्नष्ट इति बुद्ध्युत्पत्ते ध्वंसस्य गोत्वावच्छिन्नप्रतियोगिकत्वास्वीकारात्। तथापि एकजातीयेषु चरमव्यक्तिध्वंससमये तज्जातीयसामान्यध्वंसप्रतीतेरानुभविकत्वे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं ध्वंसे स्वीकार्यम्, तत्प्रतियोगितायां अतीतनिखिलव्यक्तिसाधारणतयाऽनागतस्य तज्जातीयस्याऽविद्यमानतया गोत्वं न तदातिप्रसक्तमित्याशयेनाऽह गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारे इति। अपिना गौर्नष्ट इति प्रतीतेः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य प्रामाणिकत्वे विवादः सूचितः।

(२) अथात्र तादात्म्येनाऽभावसाध्यकतद्व्यक्तित्वहेतावव्याप्तिः, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणसंसर्गाभावाऽप्रसिद्धेरिति चेन्न। अभावविषयकयत्किञ्चिज्जन्यज्ञानविषयताध्वंसमादायाऽव्याप्तिव्युदाससम्भवात्। न च तथापि तादात्म्येनाऽत्यन्ताभावसाध्यकाऽत्यन्ताभावभेदान्यतरत्वहेतावतिव्याप्तिः, तत्राऽत्यन्ताभावभेदेऽत्यन्ताभावत्वविरहेण यत्किञ्चिज्जन्यज्ञानविषयताध्वंसस्यैव लक्षणघटकत्वादिति वाच्यम्। साध्यतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्नत्वपदेन साध्यतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्नत्वयत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकावच्छिन्नत्वोभयाभावस्य प्रतियोगितायां विवक्षितत्वात्।

यद्वा साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वयत्किञ्चिद्धेत्वधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतधर्मानवच्छिन्नत्वोभयाभावस्तत्र निवेश्यः। केचित्तु एषाऽव्याप्तिरिष्टैवेति प्राहुः।

एतेन विषयितासम्बन्धेन व्याप्यवृत्तित्वानित्यज्ञानवृत्तिजन्यज्ञानविषयत्वस्य नित्यज्ञानवृत्तिलक्षणसम्बन्धस्य वा साध्यतायां नित्यज्ञानत्वहेतावव्याप्तिः तादृशप्रतियोगिताकसाध्यध्वंसस्य हेतुमति सत्त्वेन लक्षणघटकत्वात्, एवमात्मनस्तादात्म्येन साध्यतायां सत्तादिहेतावतिव्याप्तिः, तादृशप्रतियोगिताकसाध्यसंसर्गाभावाऽप्रसिद्धेः, तादृशविषयिताध्वंसस्यैव लक्षणघटकत्वादित्यपि निरस्तम्।

न च यद्यपि यत्किञ्चिद्धेत्वधिकरणवृत्तित्वं साध्यतावच्छेदकसम्बन्धेन तदापि सत्तावान् प्रमेयत्वादित्यादावतिव्याप्तिः सामान्यानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या तस्य धर्त्तुमशक्यत्वात्, यदि च साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत्त्वं वृत्तितायां निवेश्यते, तदा घटवन्नित्यज्ञानत्वादित्यादावव्याप्तिः नित्यज्ञाने विषयितया सर्वस्यैव सत्त्वात्तादृशाभावाप्रसिद्धिरिति वाच्यम्। साध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्धस्वप्रतियोगितावच्छेदकीभूतसम्बन्धैतदन्यतरसम्बन्धेन तादृशवृत्तित्वस्य वाच्यत्वात्। न च स्वप्रतियोगितावच्छेदकसंसर्गस्याऽप्रसिद्धिरिति वाच्यम्। प्रतियोगितावच्छेदकसंसर्गत्वेनैव निवेश्यत्वात्। न च संयोगेन प्रमेयसाध्यकगुणत्वादावेरुद्धहेतावतिव्याप्तिः। निरुक्तवृत्तित्वाप्रसिद्धिभिया समवायादिना साध्याभावस्य प्रतियोगितायां निरुक्तोभयाभावस्याऽसत्त्वात् गुणभेदाभावादेर्लक्षणघटकत्वादिति वाच्यम्। स्वरूपसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन सत्तादिवृत्तियत्किञ्चिज्जन्यज्ञानविषयताव्यक्तित्वावच्छिन्नप्रतियोगिताकविशेषणतयाऽभावत्वावच्छिन्नप्रतियोगिताकस्वरूपसम्बन्धेन वा साध्याभावस्यैव प्रसिद्धत्वात् तादृशसम्बन्धाना प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वविरहेण साध्यतावच्छेदके तादृशवृत्तितावच्छेद·

क्षणे प्रवेशनीयत्वात्तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भावः । यदा स्पन्द इति । स्पन्दवति खण्डप्रलये सर्गान्तरीयद्व्यणुकप्रागभाववत्त्वेन द्व्यणुकत्वावच्छिन्नध्वंसविरहादतिव्याप्तिः ।

न च खण्डप्रलये स्पन्दसत्त्वे मानाभावः । 'ब्रह्मणो वर्षशतमायुः' इत्यागमप्रसिद्धेरेव मानत्वात् । नहि क्रियां विना मुहूर्तादिघटितस्य वर्षस्य सम्भव इति ।

ननु महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिस्तदानीमपि चरमद्व्यणुकनाशानुगुणस्य परमाणुस्पन्दस्य सत्त्वात्तत्कालोत्पन्नपरमाणूत्तरसंयोगेन प्रलयपूर्वक्षण एव पश्चात्तस्य निनाश्यत्वात्,

नेत्यादिः । अत्यन्ताभावत्वघटकनित्यत्वांशपरित्यागेन तथैव बोधनादिति भावः । प्रलये—महाप्रलये । तस्य—साध्यतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्नत्वस्य । स्पन्दवति—पुनर्द्व्यणुकोत्पत्त्यनुरोधेन परमाणुस्पन्दवति । खण्डप्रलये—जन्यद्रव्यानधिकरणे । एवं च द्व्यणुकवान् स्पन्दादित्यत्र स्पन्दाधिकरणे खण्डप्रलये द्व्यणुकाऽसत्त्वेपि द्व्यणुकसामान्यध्वंसप्रागभावयोरप्यसत्त्वादतिव्याप्तिरिति भावः । अत्र व्यभिचारित्वं न महाप्रलये तत्र स्पन्दाभावात्, परन्तु गोत्वावच्छिन्नध्वंसवति महाप्रलयपूर्वकाले स्पन्दसत्त्वेन व्यभिचारनिरूपकाधिकरणं तदेव तमादाय गोसाध्यकस्पन्दहेतौ नातिव्याप्तिसम्भावना, अतो द्व्यणुकस्य साध्यतानुसरणम् । तथाच महाप्रलयपूर्वकाले द्व्यणुकत्वावच्छिन्नध्वंसविरहाद् भवत्यतिव्याप्तिरित्यभिमानः । एतादृशाभिमानं च 'नन्वि'त्यादिना निराकरिष्यत इत्यवधेयम् ।

नन्विति । स्थूलेषु विनष्टेषु त्रसरेणुविनाशार्थं अदृष्टवदात्मसंयोगात् द्व्यणुकारम्भकपरमाणौ क्रिया, ततो विभागः, तत आरम्भकसंयोगनाशः, तत उत्तरदेशसंयोगो द्व्यणुकनाशश्च, ततः क्रियानाशस्त्रसरेणुनाशश्च, ततः उत्तरदेशसंयोगनाशः स एव महाप्रलय इत्युच्यते । महाप्रलयः—उत्तरसंयोगनाशक्षणः, तत्पूर्वतृतीयक्षणे द्व्यणुकनाशक्षणे इति यावत् । महाप्रलयपूर्वतृतीयक्षणे स्पन्दोऽस्तीत्यत्र किं मानमत आह तदानीं—तृतीयक्षणे । चरमद्व्यणुकनाशानुगुणस्य—तन्नाशप्रयोजकस्य । तत्कालोत्पन्नेति । द्व्यणुकनाशकालोत्पन्नेत्यर्थः । पूर्वक्षणे एवं—त्रसरेणुनाशक्षणे एव, तस्य—कर्मणः, कार्यद्रव्येण—त्रसरेणुना, आश्र-

---

कत्वविरहात्, स्वरूपसम्बन्धेन सत्ताभाववत्तादृशविषयताव्यक्तौ तादृशक्षणसम्बन्धव्यक्तौ वा तादृशवृत्तित्वस्य प्रसिद्धत्वात्, एवं च क्षणसम्बन्धवान्नित्यज्ञानत्वादित्यादौ साध्यध्वंसस्यादेर्लक्षणघटकत्वान्नाव्याप्तिः । एवं तादात्म्येन साध्यके सत्त्वहेतौ सम्बन्धान्तरेण साध्याभावस्यैव लक्षणघटकत्वान्नातिव्याप्तिः । एवं घटवान्नित्यज्ञानत्वादित्यादौ समवायादिना घटाद्यभावमादाय नाव्याप्तिः । न च यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकावच्छिन्नत्वाभावप्रवेशनैव सामञ्जस्ये प्रतियोगितायां तादृशोभयाभावप्रवेशो व्यर्थ इति वाच्यम् । अखण्डाभावघटकतया सार्थक्यात् । न च साध्यतावच्छेदकावच्छिन्नत्वयत्किञ्चिद्वृत्तितावच्छेदकावच्छिन्नत्वोभयाभाववद्धेतुसमानाधिकरणाभावप्रतियोगिता लक्षणे निवेशनीया, यत्किञ्चिद्धेत्वधिकरणवृत्तित्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभावविशिष्टं ग्राह्यम्, तावता च सर्वत्र सद्धेतौ जन्यज्ञानविषयताध्वंसादिकमादाय लक्षणसमन्वयः, अयमात्मा सत्त्वादित्यादौ साध्याभावस्य लक्षणघटकत्वेन तमादाय नातिव्याप्तिरिति वाच्यम् । आत्मनस्तादात्म्येन साध्यतायां ज्ञानादिहेतावव्याप्तेरिति दिक् ।

जन्यं ज्ञानं दुःखं वा, यदा तस्याऽदृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिः ।

द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलयादिनिष्ठध्वंसप्रागभावप्रतियोगिता-

---

तादृशपरमाणूत्तरसंयोगस्य च कार्यद्रव्येण सहैव स्वीकारान्न नित्यत्वम्, आश्रयनाशादेव तन्नाशसम्भवादत आह यदाऽदृष्टमिति । केचित्तु स्वमते द्व्यणुकस्याभावात् स्पन्दस्य च खण्डप्रलये वृत्तौ बलवत्तरप्रमाणाभावाद्य-दाऽदृष्टमित्याद्युक्तमित्याहुः । तच्चिन्त्यम् । नित्यज्ञानमादाय सद्धेतुत्ववार-णाय जन्यमिति । नित्यसुखाभिव्यक्तेर्मोक्षत्वमते सद्धेतुत्वमाशङ्क्य साध्या-न्तरमाह—दुःखं वेति ।

ननु कार्यमात्रं प्रत्यदृष्टस्य हेतुत्वात् प्रलयप्राक्क्षणेऽपि तस्य सत्त्वम्, तथा च तदानीमेव दुःखत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः, दुःखादेः स्वसाक्षात्कारनाश्यतया तदानीमसम्भवात्, उत्तरक्षणे साक्षात्कारास-म्भवात्, अविदिते प्रमाणाभावाच्च, किञ्च यावद्ब्रह्माण्डानां युगपत्प्रल-यानभ्युपगमे ब्रह्माण्डान्तरवर्त्तिदुःखमादाय सद्धेतुरेवायमत आह यदा तस्येति । अत्र च तदीयसुषुप्त्यादिसमये तदीयज्ञानविरहाद्व्यभिचारः स्फुट एव ।

द्व्यणुकत्वादेरिति । खण्डप्रलये केषाञ्चिद्ध्वंसस्य केषाञ्चित्प्रागभावस्य स-त्त्वात्तस्य प्रतियोगितातिरिक्तवृत्तित्वेनानवच्छेदकत्वादिति भावः । ननु द्व्यणुकत्वावच्छिन्नानधिकरणकालवृत्तित्वविशिष्टस्यैव तद्ध्वंसस्य प्रतियो-गितावच्छेदकमेव द्व्यणुकत्वम्, अवच्छेदकत्वञ्चान्यूनवृत्तित्वमेवेत्यत आह

---

यनाशादेव—त्रसरेणुनाशादेव ।

स्वमते—शिरोमणिमते । द्व्यणुकस्याभावादिति । तर्हि मेरुसर्षपयोः साम्य-प्रसङ्गवारणायावयवधारायाः त्रसरेणावेव विश्रामः स्वीकृतः, अपकृष्टमहत्त्वस्य च नित्यत्व-मङ्गीकृतम् । न चाऽपकृष्टमहत्त्वं प्रति अनेकद्रव्यवत्त्वं प्रयोजकमिति वाच्यम् । अप्रयोजक-त्वात् । अत एव त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वादित्यादिद्व्यणुकसाधकानुमानमप्यकिञ्चित्क-रम् । अणुत्वव्यवहारश्चापकृष्टपरिमाणैरेवोपपादनीयः । तथाच द्व्यणुकस्वीकारो नावश्यक इति ।

कार्यमात्रस्प्रतीति । लाघवादिति शेषः । यदि च महाप्रलयानभ्युपगमे एव तद-तिव्याप्तिर्न त्वभ्युपगमे तदाप्याह किञ्चेति ।

तस्य—द्व्यणुकत्वस्य । प्रतियोगितातिरिक्तेति । ध्वंसप्रागभावप्रतियो गितातिरिक्तेत्यर्थः । द्व्यणुकत्वावच्छिन्नानधिकरणेति । अनेन द्व्यणुकध्वंसस्य प्रतियो गितावच्छेदकावच्छिन्नवैयधिकरण्यं प्रदर्शितम् । तद्ध्वंसस्य—द्व्यणुकध्वंसस्य । इदमुपल क्षणम् द्व्यणुकप्रागभावस्येत्यपि द्रष्टव्यम् । अन्यूनाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वाऽस-म्भवादाह अवच्छेदकत्वं चेति । दीधितौ—सम्भव इति । तथाचाऽवच्छेदकत्व-

नवच्छेदकत्वात् । नहि तयोः सामान्याभावत्ववादिमतेऽपि एकविशेषप्रागभा-

नहीति ।

ध्वंसादिप्रतियोगितायां गोत्वादिधर्मावच्छिन्नत्वे मानाभावः(१), गौर्नेष्टे-त्यादिप्रतीतेर्गोप्रतियोगिकध्वंसाद्यवगाहितयैवोपपत्तेः, बाधनिश्चयादिप्रति-बन्धकत्वाद्यनुरोधेनैव भेदात्यन्ताभावयोर्गोत्वाद्यवच्छिन्नप्रतियोगिताकत्वो-पगमात् । नचैवं तद्गोत्वाद्यवच्छिन्नवत्ताबुद्धिं प्रति तद्गोत्वावच्छिन्नाभावव-त्तानिश्चयत्वेन विरोधितया तद्गवात्यन्ताभावस्येव तद्गोध्वंसस्याऽपि तद्गोत्वावच्छिन्नप्रतियोगिताकत्वमावश्यकमिति वाच्यम् । एकसम्बन्धेन तद्गवात्यन्ताभावग्रहेऽपि सम्बन्धान्तरेण तद्गोमत्ताबुद्ध्युत्पादात् सम्ब-न्धविशेषमन्तर्भाव्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया ध्वंसवत्ताग्रहसा-धारण्याऽसम्भवात्, ध्वंसत्वस्याभावत्वाऽघटितत्वेन तदवगाहिबुद्धेरत्यन्ता-भावसाधारण्यायोगाच्चेत्याशयेनाह मतेऽपीति ।

स्याऽनतिरिक्तवृत्तित्वनियतस्यैवाभ्युपगमादिति भावः ।

बाधनिश्चयादीति । गोमत्ताबुद्धौ गौर्नास्तीतिनिश्चयस्य न गोप्रतियोगिकाभावावगा-हित्वेन विरोधित्वम् , तस्य तद्गवात्यन्ताभावनिश्चयसाधारण्यात् , नापि गोत्वसमनियतप्रति-योगिताकाभावावगाहित्वेन यावद्गौर्नास्तीतिनिश्चयस्य विरोधित्वापातात् , अतो गोत्वावच्छि-न्नप्रतियोगिताकाभाववगाहित्वेनैव विरोधित्वस्य वाच्यतयाऽत्यन्ताभावप्रतियोगितायां सामा-न्यधर्मावच्छिन्नत्वसिद्धिः ।

एकसम्बन्धेन—संयोगसम्बन्धेन । सम्बन्धान्तरेण—समवायसम्बन्धेन । स-म्बन्धविशेषमन्तर्भाव्यैवेति । तथाच संयोगसम्बन्धावच्छिन्नगोत्वावच्छिन्नप्रकारताशा-लिबुद्धिं प्रति संयोगसम्बन्धावच्छिन्नगोत्वावच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयस्य प्रतिबन्धक-त्वमिति भावः । साधारण्याऽसम्भवादिति । ध्वंसीयप्रतियोगितायां सम्बन्धानवच्छि-न्नत्वेऽविवादादिति । ननु भूतलत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नतद्गोत्वाव-

(१) ननु अभावमात्रप्रतियोगितायामेव धर्मावच्छिन्नत्वे मानाभावः, तथाच सर्वा एव निरवच्छिन्नाः, प्रतियोगित्वसम्बन्धावच्छिन्नगोत्वपर्याप्तावच्छेदकताकप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्व-रूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्धक-त्वसम्भवात् इति चेन्न ।

[क] अभावांशेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगित्वमेवाऽन्वयिनः संसर्ग इति नियमात् ।

[ख] केचित्तु प्रतिबध्यप्रतिबन्धकभावानुरोधाभावेऽपि बाधनिश्चयाभावस्य कारणत्वानुरोधेनापि तत्स्वीकार आवश्यकः, तत्र हि तादृशनिश्चयत्वावच्छिन्नाभावत्वेनैव कारणत्वम् , अन्यथा यत्किञ्चिद्बाधनिश्चयाभावसत्त्वेऽपि तद्वत्ताबुद्ध्युत्पादापत्तेरित्याहुः ।

[ग] वस्तुतो महानसीयत्वोपलक्षितवह्न्यभाववत्तानिश्चयस्यापि केवलवह्निमत्ताबुद्धौ प्रतिबन्धकत्वात्तत्र च केवलवह्नित्वपर्याप्तावच्छेदकताकप्रकारताकत्वविरहात्तस्य प्रतिबन्धकत्वानुपपत्तिः । न च तत्रावच्छेदकतायाः महानसीयत्ववह्नित्वधर्मद्वयपर्याप्ततया नैष दोष इति वाच्यम् । वह्निमत्ताबुद्धौ महानसीयवह्न्यभाववत्ताबुद्धेरपि प्रतिबन्धकत्वापत्तेः, अतो वह्नित्वमात्रावच्छिन्नप्रतियोगिताकाभावस्य प्रतिबन्धकत्वं युक्तमिति ।

वविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोः सम्भव इति चेन्न ।

प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरोधात्, अन्यथाऽत्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात् ।

इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तथात्वम्, अपरस्य तु स्व-

---

ननु प्रतियोगिमत इवेत्यसिद्धं, तत्राऽत्यन्ताभावानुपगमादत आह अन्यथेति । अत्यन्ताभावस्येति । गोत्वादिना गवोदत्यन्ताभावस्येति । तेन गगनाद्य-भावस्य गोविशिष्टगोत्वाद्यभावस्य वा प्रलयवृत्तित्वेऽपि न क्षतिः । काल-मात्रेति । अत्र गवात्यन्ताभावस्य दैशिकविशेषणतया कालमात्राऽवृत्तित्वं प्राच्यैरिष्यत एव, सदातनत्वव्यवहारस्य कालिकविशेषणतयैव सम्भवा-दिति तु विभावनीयम् ।

ननु प्रतियोगिविशिष्टेऽपि काले तदत्यन्ताभावसत्त्वे गवाद्यवच्छेदेन इदानीं गोत्वं नास्तीत्यपि प्रतीतिः कथं न स्यादत आह इयांस्त्विति । एकस्य-प्रतियोगिमतः कालस्य, देशभेदः-प्रतियोग्यनाधारदेशः, तथात्वम्—अत्यन्ता-

---

च्छिन्नप्रकारताशालिबुद्धिं प्रति भूतलत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नतद्घो-त्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनैकरूपेण प्रतिबन्धकत्वमिति न पूर्वोक्तदोषावकाश इत्यत आह ध्वंसत्वस्येति । अनुयोगिताविशेषो हि ध्वंसत्वम्, अखण्डोपाधिरिति यावत्, ननु जन्यत्वे सति अभावत्वम्, तथाच गोध्वंसवानिति बुद्धौ ध्वंसत्वेनैव ध्वंसस्य प्रकारतया अभावत्वेन ध्वंसस्याऽप्रकारत्वादित्याशयः ।

वस्तुगतिमनुरुध्याऽतिव्याप्तिसम्पादकं ध्वंसप्रागभावयोरत्यन्ताभावविरोधमेव खण्डयति दीधितौ प्रतियोगिमत इवेति । प्रतियोगिमतः कालस्येवेत्यर्थः । ध्वंसादिमतः—प्रतियोगिध्वंसादिमत इत्यर्थः । प्रतियोगिमद्भिन्नस्येति यावत् । अविरोधात्—बाधकाभा-वात्, गोत्वावच्छिन्नात्यन्ताभावसत्त्वान्नोक्तातिव्याप्तिरिति भावः । अन्यथा—ध्वंसप्रागभावयो-रपि अत्यन्ताभावविरोधित्वे । गोविशिष्टेति । वै० आधेयतासम्बन्धेन । गोत्वा-दिनेति । गोत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्येति यावत् । स्वरूपसम्बन्धेनेति शेषः । इष्यत एवेति । इष्ट एवेत्यर्थः, कालस्य कालिकसम्बन्धेनैव जगदाधारत्वात् । विभावनियमिति । इदानीं गोष्ठे गौर्न चत्वरे इति प्रतीत्यनुपपत्तिरेव चिन्ताबीजमत्र बोध्य-म्, इदानीमपि गवादिध्वंसप्रागभावयोः सत्त्वेन गवात्यन्ताभावस्याऽसत्त्वप्रसङ्गात् । न च कालिकेन गवात्यन्ताभाववत्त्वं विषयः, तद्गोविद्यमानतादशायामपि इदानीं तद्गौर्नास्तीति प्रत्ययापत्तेः ।

प्रतियोगिविशिष्टेऽपि—कालिकसम्बन्धेन प्रतियोगिमत्यपीत्यर्थः । कथं न स्यादिति । तथाच दृष्टान्ताऽसिद्धिरिति भावः । ध्वंसाधिकरणेऽत्यन्ताभाववत्त्वस्य निरवच्छिन्नत्वेन स्वरूपाव-

रूपावच्छिन्नमिति, देशे कालस्येव कालेऽपि देशस्याऽवच्छेदकत्वात्, तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात् ।

न च संस ।भावविशेषोऽस्त्यन्ताभावः, संसर्गाभावत्वञ्च संसर्गारोपजन्यप्रभाववत्त्वम् । अपरस्येति । ध्वंसादिमतः कालस्येत्यर्थः । स्वरूपावच्छिन्नमिति । निरवच्छिन्नमित्यर्थः । तथात्वमिति—पूर्वेणाऽन्वयः ।

नन्विदानीमश्वे न गोत्वमित्यादिप्रतीतेः कालवृत्तितया अश्ववृत्तितया च गोत्वाभावमात्रावगाहितयैवोपपत्तौ देशस्य कालवृत्तितावच्छेदकत्वे मानाभाव इत्यत आह देशेति । इवार्थः सादृश्यम्, तच्चानुभूयमानत्वेन, तथाचाऽनुभव एव देशस्य कालवृत्तितावच्छेदकत्वे मानम्, अन्यथा गृहे न इदानीं गौरित्यादिप्रत्ययबलाद् गृहादिदेशस्य गवात्यन्ताभाववत्तायां कालो नाऽवच्छेदकः स्यात्, तत्र गवाभावे गृहवृत्तित्व-एतत्कालवृत्तित्वोभयावगाहितायाः सुवचत्वादिति भावः ।

नन्वेवमपि प्रतियोगिवैयधिकरण्यघटितस्याऽव्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य गोमान् गोत्वादित्यादावतिव्याप्तिरेव, गवाद्यभावस्य सृष्टिकाले प्रतियोगिसमानाधिकरणतया लक्षणाऽघटकत्वादत आह—तच्छून्ये चेति । गवादिशून्ये चेत्यर्थः । तथाच यत्किञ्चिद्वृत्त्यधिकरणावच्छेदेन प्रतियोगिवैयधिकरण्यं यदग्रे वाच्यं तस्य गवाभावेऽपि सत्त्वान्न तत्राऽतिव्याप्तिरिति भावः ।

नचेति । वाच्यमित्यन्वयः । संसर्गाभावविशेष इति । सदातनसंसर्गाभाव इत्यर्थः । संसर्गेति । स्वप्रतियोगितावच्छेदकसंसर्गेण यः प्रतियोग्यारोपस्तज्जन्यप्रतीतिविषयो योऽभावस्तत्त्वमित्यर्थः । संसर्गस्तु तादात्म्यभिन्नो ग्राच्छिन्नमित्यनुपपन्नमतो व्याचष्टे निरवच्छिन्नमित्यर्थ इति । तथात्वम्—अत्यन्ताभावत्वम् । दैशिकविशेषणतया कालिकसम्बन्धावच्छिन्नप्रतियोगिताकेत्यादिः । अनुभूयमानत्वेनेति । तथाच यथा देशे वृत्तौ कालस्याऽवच्छेदकत्वमनुभूयमानम् इदानीं गृहे गौर्नास्तीत्यनुभवबलात्, तथा कालवृत्तावपि देशविशेषस्यावच्छेदकत्वमनुभूयमानम् इदानीं अश्वे न गोत्वमिति प्रतीतिबलात्, तादृशप्रतीतेः कालावच्छेदेन देशवृत्तिः देशावच्छेदेन वा कालवृत्तिर्विषय इत्यत्र विनिगमकाभावात्, अवच्छेदकत्वाधिकरणत्वयोः सप्तम्यर्थत्वेऽपि सप्तम्या आधेयत्वमात्रार्थकतयैवोपपत्तौ तयोरवच्छेदकत्वाऽसाधकत्वात्तस्मादनुभव एव तयोरवच्छेदकत्वसाधक इत्याशयेनाह तथाचेति । अन्यथा—देशस्य कालवृत्तितावच्छेदकत्वविरहे । सुवचत्वादिति । न चेष्टापत्तिः, अनुभवविरोधात्, अन्यथा तद्गृहे गोर्विद्यमानतादशायामपि इदानीं गृहे गौर्नास्तीति प्रतीतिप्रसङ्गात्, गृहे कालान्तरावच्छेदेन एतत्काले च देशान्तरावच्छेदेन गवात्यन्ताभावस्याऽभ्युपगततया गवाभावे गृहवृत्तित्व-एतत्कालवृत्तित्वोभयावगाहित्वस्याबाधितत्वात् ।

वीतिविषयाभावस्वरूपं, जन्यताघटकनियमघटितामिति वाच्यम् ।

तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात् । एवं नियमान्तरस्याऽत्र प्रवेशेऽपि न क्षतिरित्याहुः । वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणम् ।

---

धः, तेन भेदव्युदासः । ध्वंसप्रागभावयोरपि उत्तरकालपूर्वकालावेव(१) प्रतियोगितावच्छेदकसम्बन्धाविति ताभ्यामेव सम्बन्धाभ्यां प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षहेतुरतस्तयोर्नाव्याप्तिरिति प्राचामाशयः । घटितमिति । तथाच चक्रकादिप्रसङ्ग इति भावः ।

तत्र–जन्यत्वे । नियमान्तरस्य–साध्यसम्बन्धितावच्छेदकरूपवत्त्वादिस्वरूपस्येत्यर्थः । नन्वभावबुद्धौ प्रतियोग्यारोपस्य हेतुतास्वीकारे मानाभावादुक्तसंसर्गाभावत्वघटितव्याप्तिलक्षणस्यासम्भवः, कथंचिदभावलौकिकप्रत्यक्षं प्रत्यारोपस्य हेतुतास्वीकारेऽप्यतीन्द्रियसाध्यके व्यभिचारिण्यतिव्याप्तिः, तत्र हेतुसमानाधिकरणसाध्याभावस्यातीन्द्रियतया निरुक्त-

---

उत्तरकालपूर्वकालावेवेति । अयमिदानीं यदि स्वाश्रयोत्तरकालिकसम्बन्धेन घटवान् स्यात्तदा घटवत्तयोपलभ्येतेति ध्वंसप्रत्यक्षे प्रतियोग्यारोपः कारणम्, एवं अयमिदानीं स्वाश्रयपूर्वकालिकसम्बन्धेन घटवान् स्यात्तदा घटवत्तयोपलभ्येतेति प्रागभावप्रत्यक्षेऽपीति, तथाचोत्तरकालपूर्वकालयोः सम्बन्धघटकत्वात्तयोः सम्बन्धत्वमिति । चक्रकादिप्रसङ्ग इति । स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहकत्वेन सभिभिस्वप्रसङ्ग इत्यर्थः । तथाच स्वं व्याप्तिः तद्ग्रहसापेक्षो यो ग्रहः संसर्गाभावग्रहः, तस्य नियतोत्तरवृत्तित्वरूपजन्यत्वघटकव्याप्तिरूपनैयत्यघटितत्वात्, तत्सापेक्षो यो ग्रहः अत्यन्ताभावग्रहः तत्सापेक्षो ग्रहः व्याप्तिग्रहस्तत्कत्वं व्याप्तिग्रहे । अथवा स्वमत्यन्ताभावत्वं तद्ग्रहसापेक्षो नियमग्रहः तत्सापेक्षग्रहः संसर्गाभावत्वग्रहः तत्सापेक्षत्वस्याऽत्यन्ताभावत्वग्रहे सत्त्वादिति । चक्रकादीत्यादिपदेनाऽऽत्माश्रयान्योन्याश्रययोः परिग्रहः । परम्परया व्याप्तिग्रहे तद्ग्रहस्य व्याप्तिग्रहे संसर्गाभावग्रहस्य तत्र च व्याप्तिग्रहस्याऽपेक्षितत्वात् । व्याप्यसत्त्वे व्यापकसत्त्वस्यावश्यकतया चक्रकसत्त्वे द्वयोरपि सत्त्वम्, अन्योन्याश्रयसत्त्वे चाऽऽत्माश्रयसत्त्वम् ।

जन्यत्वे इति । अत्र जन्यताघटकव्याप्तिश्च कार्यवदन्यत्वरूपेति भावः । स्वरूपस्येति । तथाच कार्यसम्बन्धितावच्छेदकरूपवत्त्वमेव कारणत्वमिति भावः ।

व्याप्तिलक्षणस्याऽसम्भव इति । उक्तसंसर्गाभावत्वस्याऽप्रसिद्धेरिति यावत् । कथञ्चिदिति । उक्तारोपं विना जायमानप्रत्यक्षस्थलेऽपि तादृशारोपं प्रकल्प्येत्यर्थः । व्यभिचारिणि–मनस्त्ववद् अणुत्वादित्यत्र । तदेव–संसर्गाभावत्वमेव । न च घटाभावा-

---

(१) स्वाधिकरणत्वस्वप्रागभावाधिकरणत्वैतदन्यतरसम्बन्धेन स्वविशिष्टक्षणकालीनत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावो ध्वंसः, स्वाधिकरणत्वस्वध्वंसाधिकरणत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावः प्रागभावः ।

अनुपदमेव च विवेचयिष्यते । संसर्गाभावत्वप्रवेशे प्रयोजनविरहो-ऽव्याप्तिश्च ।

अथ ज्ञानवान् द्रव्यत्वात्, विशेषगुणवान् मनोऽन्यद्रव्यत्वात्, जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः, साध्यशून्यानामपि हेतुमतां विषयत्वविशेषणत्वैकार्थसमवायैः साध्यवत्त्वादिति चेत् । नैवम् । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं सम्बन्धि वा तद्वृत्तित्वाभावस्योक्तत्वात् ।

---

संसर्गाभावत्वविरहादत आह वक्ष्यते चेति । भेदभिन्नाभावत्वं संसर्गाभावत्वं, सदातनत्वविशिष्टं च तदेवात्यन्ताभावत्वम्, भेदत्वं तु संसर्गविषया तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वमनुयोगिताविशेषो वेत्याशयः । यत्तु भेदत्वादिवत् संसर्गाभावत्वमप्यखण्डोपाधिरिति । तत्तुच्छम् । भेदत्वादिवदखण्डस्य संसर्गाभावत्वस्यानुभवेनाविषयीकरणात्, तान्त्रिकव्यवहारस्य भेदभिन्नाभावत्वादिनाऽप्युपपत्तेः ।

वस्तुगतिमनुरुध्याह अनुपदमिति । विवेचयिष्यत इति । तदपि वा नोपादेयमित्यादिग्रन्थेनेति शेषः । साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यघटितलक्षणमभिप्रेत्याह प्रयोजनविरह इति । धूमादिसमानाधिकरणस्य वह्न्यादिभेदस्य प्रतियोगिसमानाधिकरणत्वादेव तमादायाऽव्याप्तिविरहादिति भावः । व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितत्वात्तदभिप्रेत्याह अव्याप्तिश्चेति । तादात्म्येन गवादेः साध्यतायां तत्सम्बन्धावच्छिन्नात्यन्ताभावाऽप्रसिद्ध्या सास्नावत्त्वादावव्याप्तिरित्यर्थः ।

इदमपि–अभाववृत्तिरभावो नाधिकरणस्वरूपो न वा धर्मात्यन्ताभाव एव धर्मिणो भेद—इति मतेन, अन्यथा पटभेदस्वरूपस्य घटभेदत्वात्यन्ताभाव-

---

भावस्य घटरूपतयाऽनित्यत्वे सदातनत्वविरहादत्यन्ताभावत्वानुपपत्तिरिति वाच्यम् । अतिरिक्तत्वाभ्युपगमात् । न चाऽतिरिक्तत्वे घटाभावदशायां तदापत्तिरिति वाच्यम् । घटकालस्य तत्संसर्गत्वाभ्युपगमादिति । अथवाऽभावत्वस्य भावभेदरूपतया घटस्वरूपे तद्विरहेणाऽत्यन्ताभावत्वविरहेपि न दोष इति ।

तदपीति । अभावत्वमपीत्यर्थः ।

इदमपि–तादात्म्येन साध्यतायामव्याप्तिकथनमपि, अभाववृत्तिरभावः—अभावाधिकरणकाऽभाव इत्यर्थः । नाऽधिकरणस्वरूप इति । अस्य इति मतेनेत्यत्रान्वयः । अन्यथा–अभावाधिकरणकोऽभाव अधिकरणस्वरूप इति मतस्वीकारे धर्मिभेदधर्मात्यन्ताभावयोरैक्यमिति मत स्वीकारे च । आद्ये आह पटभेदस्वरूपस्येत्यादि । तथा च

स्य पटत्वात्यन्ताभावस्य च पटनिष्ठप्रतियोगितायामेव तादात्म्यसम्बन्धावच्छिन्नत्वादव्याप्तिविरहादिति ध्येयम् ।

ननु विषयताया वृत्त्यनियामकत्वमते ज्ञानाभावस्य गगनादौ सहजत एव प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिरत आह विशेषगुण इति । अत्र व्यभिचारनिरूपकः कालो दिक् च, तत्र काले कालिकसम्बन्धेन दिशि दैशिकसम्बन्धेन विशेषगुणस्य सत्त्वात्तदभावो न प्रतियोगिव्यधिकरण इति भवत्यतिव्याप्तिः । विशेषपदं व्यभिचारित्वरक्षार्थे । द्रव्यत्वादित्युक्तौ सम्बन्धसामान्येन विशेषगुणस्य मनस्यसत्त्वान्नातिव्याप्तिसम्भवः । का-

---

पटभेदे यो पटभेदत्वात्यन्ताभावः स पटभेदस्वरूप एव, एवं च पटभेदस्यात्यन्ताभावात्मकतया तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रसिद्धतया तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकीभूतगोत्वे सत्त्वादव्याप्तिविरहादव्याप्तिश्चेति दीधितिग्रन्थासङ्गतिः स्यादिति भावः । द्वितीये त्वाह पटत्वात्यन्ताभावस्येति । अत्रापि पटभेदस्वरूपस्येत्यन्वितम् ।

[ १ ] अथ धर्मिभेदधर्मात्यन्ताभावयोरैक्येऽव्याप्तिविरहेऽपि घटाभावे गोभेदसत्त्वात्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगितावच्छेदकत्वस्य गोत्वे सत्त्वात् सास्नादिहेतावव्याप्तिवारणाय अत्यन्ताभावत्वनिरूपकसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वपर्यन्तस्य निवेश आवश्यकः, एवं च 'अभाववृत्तिरभावो नाधिकरणस्वरूप' इति जगदीशग्रन्थोऽसङ्गत एव, तादृशमताश्रयणेऽपि अव्याप्तिसम्भवादिति चेत् ।

(क) अत्र केचित्–भावभेदस्यातिरिक्तत्वाभ्युपगमेन गोभेदमादायाऽव्याप्तिविरहेणाऽत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशनं नावश्यकमिति ग्रन्थसङ्गतिः । यदि च तादात्म्येनाऽभावसाध्यतास्थले पटाभावादौ साध्यभेदमादायाऽव्याप्तिवारणायाऽत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशात्तद्ग्रन्थासङ्गतिरिति विभाव्यते, तदा पटाभावादिहेत्वधिकरणवृत्त्यभावस्याऽभावाधिकरणकतया तादात्म्येन साध्यभेदसत्त्वाऽऽप्रसक्त्याऽव्याप्तिविरहादित्याहुः ।

(ख) वस्तुतस्तु हेतुमद्वृत्तितावच्छेदकीभूतसंसर्गाभावस्वरूपानुयोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावविवक्षणान्न दोषः । तादात्म्येन साध्यतायां सद्धेतौ साध्यभेदत्वरूपानुयोगितायामत्यन्ताभावनिष्ठत्वेऽपि हेतुमद्वृत्तितावच्छेदकत्वविरहेण साध्यभेदत्वरूपानुयोगिता न तादृशी, रूपभेदत्वरूपानुयोगितायां हेतुमद्वृत्तितावच्छेदकत्वेन घटभेदत्वात्यन्ताभावनिष्ठत्वेन तादृशत्वात् तन्निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावः साध्यतावच्छेदकेऽस्तीति, एवंरीत्या व्यभिचारिण्यतिव्याप्तिरपि नास्तीति ध्येयम् ।

गगनादौ सहजत एव प्रतियोगिव्यधिकरणत्वादिति । प्रतियोगिवैयधिकरण्ये सम्बन्धित्वाऽप्रवेशे इति शेषः । तथाच प्रतियोग्यधिकरणत्वाभावस्य हेत्वधिकरणे सत्त्वान्नातिव्याप्तिरिति भावः । घटादौ जन्ये महाकालादौ च साध्यवत्त्वेन तदन्तर्भावेन सहजतः

लोपाधित्ववद्दिगुपाधित्वस्याऽपि मनस्यसत्त्वादव्यावर्तकत्वात्, अन्यथा मनसः कालोपाधित्वमपि स्यादत उक्तम्—मनोऽन्येति । यत्तु—मूर्तमात्रस्य दिगुपाधित्वं महादिग्वृत्तितायामवच्छेदकत्वं न त्वधिकरणत्वमिति प्राचां मते सम्बन्धसामान्येनैव तस्य विशेषगुणानधिकरणत्वान्मनोऽन्यपदम्—इति । तन्मन्दम् । एवमप्यवच्छेदकतासम्बन्धेनैव मनसो विशेषगुणवत्तायास्सम्भवेन मनोऽन्यपदवैयर्थ्यापत्तेः ।

ननु स्वमते दिक्कालयोरपि ईश्वरानतिरिक्तत्वादत्र व्याप्तिरेवेत्यत आह जातीति । न च जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याऽप्रवेशादेव नातिव्याप्तिरिति वाच्यम् । समवायेनाव्यापकत्वग्रहदशायामपि सम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्यापकत्वज्ञानात् समवायेन जात्यनुमित्यापत्तेरेव प्रकृतेऽतिव्याप्तिपदार्थत्वाज्जात्यादेरपि प्रागुक्तव्याप्यवृत्तित्वविरहाच्च । अतिव्याप्तिं योजयति साध्यशून्येति । विशेषणता दिक्कृता कालिकी च । एकार्थेति । समवायस्यापि स्वात्मक एव स्वरूपसम्बन्ध इति तत्रापि जात्यैकार्थसमवायोऽस्तीत्यर्थः । [ जातिः सतीतिवत् समवायः सन्निति प्रतीतेरविशेषात् ] भावत्वात्—समवेतत्वादित्यपि केचित् । प्रतियोगितेति । तथाच ज्ञानाद्यभावस्य तादृशेन समवायसम्बन्धेन घटादौ प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिः ।

न च तादृशयत्किञ्चित्सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावोक्तौ वह्निसामान्याभावस्यापि धूमवत्पर्वतावच्छेदेन महानसीयसंयोगेन

---

प्रतियोगिवैयधिकरण्याभावात्साध्याभावस्येति गगनादिहेत्वधिकरणानुधावनम् । अन्यथा—अव्यावर्तकस्यापि तथात्वे । एवमपि अवच्छेदकतासम्बन्धेनेति । न चाऽवच्छेदकताया वृत्त्यनियामकत्वात्कथं तेन सम्बन्धेन मनसो विशेषगुणवत्त्वमिति वाच्यम् । ममान्तःकरणे कोपः ममान्तःकरणे राग इत्यादिप्रामाणिकप्रयोगदर्शनादवच्छेदकताया वृत्तिनियामकत्वस्याभ्युपेयत्वात् । अथवा चेष्टां प्रति कृतेरवच्छेदकतासम्बन्धेन कारणत्वानुरोधादवच्छेदकतायाः वृत्तिनियामकत्वं बोध्यम् । न च सम्बन्धसामान्येन प्रतियोगिव्यधिकरणाभावाप्रसिध्यैव नातिव्याप्तिर्घटाद्यभावस्यापि कालिकादिसम्बन्धेन प्रतियोगिसमानाधिकरणत्वात्, यत्किञ्चित्सम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशे तु वह्निसामान्याभावस्य महानसीयसंयोगेन प्रतियोगिव्यधिकरणत्वाद्वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । मनोन्यद्रव्यत्वाधिकरणे घटादौ अतीततत्तव्यक्त्यभावस्यैव तथात्वादिति ध्येयम् ।

स्वमते—दीधितिमते । 'दिक्कालौ नेश्वरादतिरिच्येते' इति हि तन्मतम् । प्रागुक्तव्याप्यवृत्तित्वेति । साध्यतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं सम्बन्धसामान्येन तद्वृत्त्यभावाप्रतियोगित्वरूपेत्यर्थः । स्वात्मक एव स्वरूपसम्बन्ध इति । तथाचैकार्थसमवायः स्वप्रतियोगिकसमवायप्रतियोगित्वस्वप्रतियोगिकसमवायतादात्म्य एतदन्यतररूप इत्यर्थः । स्वं—जातिः ।

प्रतियोग्यसमानाधिकरणत्वाद् वह्निमान् धूमादित्यावव्याप्तिः, स्वप्रतियोगितावच्छेदकसम्बन्धसामान्येन तथात्वोक्तौ च जातिमान् जातित्वादित्यादावतिव्याप्तिः समवायेन जात्यभावस्यैव तादात्म्येन जातिमद्भेदत्वात्तस्य च स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन यज्जातिसम्बन्धि तद्वृत्तित्वेन प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यम्। यत्किञ्चित्स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन यत्प्रतियोगिसम्बन्धि तद्वृत्तित्वाभावस्योक्तत्वात्, संयोगसामान्यावच्छिन्नवह्न्यभावप्रतियोगितायां महानसीयसंयोगत्वादिविशिष्टानवच्छेद्यतया वह्न्यभावस्य पर्वतादौ महानसीयसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेऽप्यव्याप्त्यभावादिति ध्येयम्।

ननु समवायावच्छिन्नवह्न्यभावमादाय धूमादावव्याप्तिवारणार्थमग्रे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगित्वं निवेशनीयम्, तथाच कपिसंयोगवतस्तादात्म्येन साध्यतायामव्याप्तिः, भेदमात्रस्यैव स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोगिवैयधिकरण्याऽप्रसिद्धेरत आह सम्बन्धि वेति। न च तादात्म्येन वस्तुमात्रस्यैव व्याप्यवृत्तित्वात्तादृशसम्बन्धेन प्रतियोगिवैयधिकरण्याऽप्रवेशादिदमयुक्तमिति वाच्यम्। मूलावच्छेदेन कपिसंयोगवद्भेदस्य वृक्षादौ स्वयमङ्गीकारात्तादात्म्येन कपिसंयोगवतोऽप्यव्याप्यवृत्तित्वात्। न चैवं प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावेत्यग्रिमनिष्कर्षेऽप्यप्रतीकारः। प्रतियोगितावच्छेदकसम्बन्धेन ये ये प्रतियोगिसम्बन्धिनस्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटविशिष्टहेतुमद्वृत्तित्वस्यैव

---

न च तादृशेति। प्रतियोगितावच्छेदकीभूतेत्यर्थः। जातिमद्भेदत्वादिति। धर्मात्यन्ताभावस्य धर्मिभेदस्वरूपत्वादिति भावः। यत्किञ्चित्स्वप्रतियोगित्वमिति। स्वप्रतियोगित्वं यादृशरूपावच्छिन्नसंसर्गनिष्ठावच्छेदकताकं तादृशरूपावच्छिन्नसंसर्गनिष्ठावच्छेदकताकसम्बन्धितावद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्योक्तत्वादिति(१) तात्पर्यार्थः। अव्याप्त्यभावादिति। तादृशसम्बन्धेन प्रतियोगिसामानाधिकरण्याभावस्य लक्षणाऽघटकत्वादिति भावः।

नचेति। अस्याऽप्रतीकार इत्यनेनाऽन्वयः। एवं—भेदस्याऽव्याप्यवृत्तित्वे। कपिसंयोगवतस्तादात्म्येन साध्यतायामेतद्वृक्षत्वादिहेतौ अग्रिमनिष्कर्षेऽप्यव्याप्तिः, कपिसंयोगवद्भेदस्यापि कपिसंयोगवदसम्बन्धिहेतुसम्बन्धिवृक्षवृत्तित्वादिति भावः। सिद्धान्तयति **प्रतियोगिता**

---

(१) अत्र अनुगमस्तु स्वप्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वानिरूपितवृत्तित्वं नास्तीतिप्रतीतिसिद्धोऽभावो निवेश्यः, वै० स्वावच्छेदकधर्मावच्छिन्नत्व—स्वनिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वोभयसम्बन्धेन, प्रतियोगितावच्छेदकावच्छिन्नत्वं च प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकत्वम्। तत्र न्यूनवारकपर्याप्तिनिवेशफलं विशिष्टसत्तावान् जातेरित्यत्र ग्रन्थकृतैवोक्तम्, इतरवारकपर्याप्तिफलन्तूह्यम्।

भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः, तद्विशिष्टस्य च हेत्वाधिकरणवृत्तित्वम् वाच्यम्, तेन नाऽव्याप्यवृत्तिसाध्यकासङ्गतिः ।

---

तत्र वक्तव्यत्वात् । वस्तुतस्तु तादात्म्यसम्बन्धेनापि न कस्यचित् प्रागुक्तव्याप्यवृत्तित्वमतो यथाश्रुतमेव सम्यक् । केचित्तु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां यद्धर्मावच्छिन्नत्वयत्सम्बन्धावच्छिन्नत्वोभयाभाव इत्यादिवक्ष्यमाणनिष्कर्षस्य तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिरतः प्रतियोग्यनधिकरणत्वं परित्यज्य प्रतियोग्यसम्बन्धित्वमवश्यं तत्र निवेश्यमित्याशयेन सम्बन्धित्वमुक्तमित्याहुः ।
ननु कपिसंयोगाभावस्याऽपि गुणादौ प्रतियोग्यसमानाधिकरणत्वात् कपिसंयोगी एतत्त्वादित्यादावव्याप्तिरत आह तद्विशिष्टस्येति । प्रतियोगिसामानाधिकरण्याभावविशिष्टस्येत्यर्थः, तथाच हेतुमति वृक्षादौ संयोगवद्वृत्तित्वाभावविशिष्टः संयोगाभावो नास्तीति नाव्याप्तिः । विशिष्टनिरूपिताधेयत्वमप्यतिरिक्तमित्याशयेनेदम् । यद्वा तद्विशिष्टत्वस्य हेत्वधिकरणेऽन्वयः(१), तत्र च षष्ठ्यर्थोऽधिकरणत्वं, तेन प्रतियोगिसामानाधिकरण्याभावविशिष्टस्याधिकरणं यद्धेत्वधिकरणं तद्वृत्तित्वमभावे वाच्यमित्यर्थः ।

---

वच्छेदकसम्बन्धेनेत्यादि । तत्तद्व्यक्तित्वावच्छिन्नेति । अव्याप्यवृत्तिधर्मावच्छिन्नभेदस्यैवाव्याप्यवृत्तित्वं न तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्येत्याशयः । ननु तादात्म्येन वस्तुमात्रस्यैव यथाश्रुतव्याप्यवृत्तित्वं संयोगवद्भेदस्य वृक्षादावनभ्युपगमात्, तथाच सम्बन्धित्वप्रवेशो निष्फल एवेत्यत आह वस्तुतस्त्वित्ति । तथाच यादृशाऽव्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधिकरण्याप्रवेशस्तादृशव्याप्यवृत्तित्वं तादात्म्यसम्बन्धेन नित्यमात्रसाध्यस्य, तादात्म्येन जन्यसाध्यकस्थलेऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यं प्रवेश्यम्, तत्रापि सम्बन्धित्वाप्रवेशे तादृशसम्बन्धेनाधिकरणाप्रसिद्ध्याऽव्याप्तिरतस्तन्निवेशः । एवं चाग्रिमनिष्कर्षे यथाश्रुतप्रतियोग्यसम्बन्धित्वनिवेशेऽपि कपिसंयोगवतस्तादात्म्येन साध्यतायां नाव्याप्तिरिति भावः । व्यभिचारिण्यतिव्याप्तिरिति । तादात्म्यसम्बन्धेन प्रतियोग्यधिकरणाऽप्रसिद्ध्या तस्य गृहीतुमशक्यत्वात्, सम्बन्धान्तरावच्छिन्नप्रतियोगितायामुभयाभावसत्त्वादिति भावः ।

दीधितौ एवं—प्रतियोग्यसम्बन्धित्वनिवेशे । ननु संयोगवद्वृत्तित्वाभावविशिष्टसंयोगाभावे कथं वृक्षनिरूपितवृत्तित्वाभावः, शुद्धसंयोगाभावे वृक्षनिरूपितवृत्तितायाः सत्त्वात् विशिष्टधर्मावच्छिन्नाऽऽधेयत्वकेवलावशेष्यतावच्छेदकधर्मावच्छिन्नाधेयत्वयोरैक्यादत आह विशिष्टनिरूपितेति । वैशिष्ट्यावच्छिन्नाधेयत्वमपीत्यर्थः । आधेयत्वस्याऽनतिरिक्तत्वं सर्ववादिसिद्धमतस्तद्द्योतनावश्यमत आह यद्वेति । यद्धेत्वधिकरणमिति । कपिसंयोगा-

---

(१) प्रतियोग्यसमानाधिकरणहेतुमन्निष्ठाभावेत्यत्र एकावशिष्टेऽपरवैशिष्ट्यमिति रीत्याऽन्वयेन प्रतियोग्यसामानाधिकरण्यविशिष्टः स्वहेत्वधिकरणवृत्तित्वाभाव इति लाभे तुल्यवित्तिवेद्यतया हेत्वधिकरणे प्रतियोग्यसमानाधिकरण्यविशिष्टाभावाधिकरणतालाभादिति भावः ।

तद्वद्वृत्तिभिन्नत्वं तु नार्थः, अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रस-ङ्गात् । अत्र सामानाधिकरण्यवतो न तदभाववत्त्वम्, प्रतीतिरन्यथैवोपपादित-त्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति, तच्च हेत्व-

---

यद्यपि प्रतियोग्यसमानाधिकरणत्वं हेतुविशेषणीकृत्य प्रतियोग्यसामाना-धिकरण्यविशिष्टो यो हेतुस्तदधिकरणवृत्त्यभावस्य प्रतियोगितानवच्छेद-कत्वं वाच्यम्, तावतैव संयोग्येतत्त्वादित्यादौ नाव्याप्तिसंभावना, वृक्षस्य प्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वधिकरणत्वाभावात्, तथापि कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इत्यग्रिममूलस्वरसेन हेतुसमा नाधिकरणाभावस्यैव विशेषणं प्रतियोग्यसमानाधिकरणदलमत एतावान् प्रयास इत्यवधेयम् ।

ननु भेदस्य व्याप्यवृत्तितया प्रतियोगिसमानाधिकरणभिन्नत्वोक्त्यैव प्रागुक्ताव्याप्तिवारणसम्भवे तद्विशिष्टस्येत्यादिकं विफलमत आह तद्वद्वृत्तीति। प्रतियोगिमद्वृत्तिभिन्नत्वमित्यर्थः। अत्रेति । अस्वरसादित्यन्वयः । न तदभा-ववत्त्वमिति । तथाच संयोगी सत्त्वादित्यादावतिव्याप्तिरिति भावः । ननु सं-योगाभावे गुणे न संयोगसामानाधिकरण्यमिति प्रतीतिबलादेव गुणाद्य-वच्छेदेन संयोगाभावे प्रतियोगिसामानाधिकरण्याभावसत्त्वान्नातिव्याप्ति-रत आह प्रतीतेरिति । उक्तप्रतीतिस्तु संयोगाभावनिष्ठस्य संयोगसामाना-धिकरण्यस्याऽवच्छेदकत्वाभावमेव गुणादौ संयोगानधिकरणीभूतगुणवृ-त्तित्वमेव वा संयोगाभावादाववगाहत इति भावः । वक्ष्यति मूलकारः ।

---

भावस्य गुणादौ प्रतियोगिसामानाधिकरण्याभाववत्त्वेऽपि न तद्विशिष्टस्याधिकरणं हेत्वधिक-रणं, यत्र सामानाधिकरण्यविशिष्टवत्त्वं तत्र तदभावविशिष्टाधिकरणत्वाप्रत्ययादिति भावः ।

भेदस्याऽव्याप्यवृत्तित्वे गुणावच्छेदेन कपिसंयोगाभावस्य प्रतियोगिमद्वृत्तिभिन्नत्वात्तद्दोष तादवस्थ्यमत आह भेदस्येत्यादि । तद्विशिष्टस्येत्यादिकं प्रतियोगिसामानाधिकरण्याभावमुक्त्वा तद्विशिष्टस्य हेत्वधिकरणवृत्तित्वविवक्षणमफलमित्यर्थः । दीधितौ अव्याप्यवृत्तिसाध्यक-व्यभिचारिण्यतिप्रसङ्गादिति । तथाचाऽधिकरणभेदेनाभावभेदविरहेण संयोगी सत्त्वा दित्यादौ संयोगाभावस्य संयोगवद्वृत्तित्वेन तद्भिन्नत्वाभावादभावान्तरमादायाऽतिप्रसङ्गादि त्यर्थः । प्रतियोगिसामानाधिकरण्याभावस्तु संयोगाभावे हेत्वधिकरणगुणावच्छेदेन वर्तते एवे-ति भावः । दीधितौ सामानाधिकरण्यवतो न तदभाववत्त्वम्, इदं च सामानाधि-करण्यस्य व्याप्यवृत्तित्वमभिप्रेत्य । उक्तप्रतीतिः–संयोगाभावं गुणे न संयोगसामानाधिक रण्यमित्याकारिका प्रतीतिः । अवच्छेदकत्वाभावमेव गुणादाविति । इदं च प्रात्य-क्षिकप्रतीत्यभिप्रायेण, अवच्छेदकत्वबोधकपदाभावात् । वस्तुतः संयोगाभावनिष्ठं यत्संयोग-सामानाधिकरण्यं तन्न गुणावच्छेद्यमिति प्रथमान्तार्थमुख्यविशेष्यको बोधः, एवं च तुल्यवि-त्तिवेद्यतया तादृशावच्छेदकत्वाभावविषयकबोधस्यापि सम्भवादिति ध्येयम् ।

धिकरणे बोध्यम् ।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्, तत्सामान्यस्य, यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नस्य वाऽनधिकरणत्वमुक्तम्? आद्ये अव्याप्यवृत्तिसाध्यकाऽव्याप्तिः, एकप्रतियोग्यधिकरणस्याऽपि तद्व्यक्त्यन्तरानधिकरणत्वात् । द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वा·

---

तत्र-तदपि । हेत्वधिकरणं इति । तेन कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकीभूतगुणाद्यवच्छिन्नत्वेऽपि कपिसंयोगी एतत्त्वादित्यादौ नाऽव्याप्तिः । ननु हेत्वधिकरणे प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतहेत्वधिकरणवृत्तित्वम्, तच्च व्याप्यवृत्तेरवच्छेदकत्वविरहादप्रसिद्धम् गुरुतरं चेत्यत आह प्रतियोग्यनधिकरणेति ।

कस्यचिदिति । अनधिकरणत्वमिति परेणाऽन्वयः । तद्व्यक्त्यन्तरेति । प्रतियोगिव्यक्त्यन्तरेत्यर्थः । स्वमते संयोगसामान्याभावस्य केवलान्वयित्वात् तत्साध्यकसत्त्वादिकं सद्धेतुरेवेत्यतः साध्यान्तरमाह द्रव्यत्वाभावेति । यद्यपि द्रव्यत्वाभावस्य व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसङ्गतम् । न चात्र कालिकसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावः साध्यः, स च गुणाद्यवच्छेदेन काले एवाऽव्याप्यवृत्ति·

---

शाब्दप्रतीत्यभिप्रायेणाह संयोगानधिकरणीभूतेत्यादि । तदर्थकपदवत्त्वादिति हृदयम् । वक्ष्यति—'यद्वा प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणमि'ति विशेषव्याप्तिग्रन्थे वक्ष्यति । तेन-प्रतियोगिसामानाधिकरण्यानवच्छेदकवृत्तित्वे हेत्वधिकरणनिरूपितत्वनिवेशेन । प्रतियोगिवैयधिकरण्यावच्छेदकीभूतगुणाद्यवच्छिन्नत्वेऽपि—प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतगुणवृत्तित्वेऽपीत्यर्थः । व्याप्यवृत्तेरिति । इदं च सामानाधिकरण्यस्य व्याप्यवृत्तित्वमभिप्रेत्योक्तम् । प्रतियोग्यधिकरणावृत्तित्वेत्यत्र वृत्तित्वनिवेशे गौरवं चेत्याह गुरुतरं चेति ।

परेणाऽन्वय इति । तथाच प्रतियोगितावच्छेदकेत्यादिषष्ठ्यन्तत्रयमनधिकरणत्वमित्यत्राऽन्वितमिति भावः । दीधितौ यस्यकस्यचिदिति । प्रतियोगिन इति भावः । स्वप्रतियोगितावच्छेदकसमानाधिकरणीभूता या प्रतियोगिनिष्ठाऽऽधेयता तदाश्रयस्येत्यर्थः । तत्सामान्यस्य—प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्येत्यर्थः । प्रतियोगितावच्छेदके यावत्त्वन्तु नाशंकितम्, यावत्प्रतियोगितावच्छेदकावच्छिन्नाप्रसिद्धेः । यावन्ति प्रतियोगितावच्छेदकानि प्रत्येकं तदवच्छिन्नानधिकरणत्वन्तु द्वितीयकल्पान्तर्गतमेवेति न पृथगुट्टङ्कितम् । प्रतियोगिव्यक्त्यन्तरेति । वृक्षाऽवृत्तिकपिसंयोगेत्यर्थः । तथाच प्रतियोगिवैयधिकरण्योपादानेऽपि कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तेरवारणेन तद्वैयर्थ्यमेवेति भावः । काले एवाऽव्याप्यवृत्तिरिति । कालिकसम्बन्धेन द्रव्यत्वं काले द्रव्याद्यवच्छेदेनैव, तदभावोऽपि काले द्रव्य

दित्यादावतिव्याप्तिः, साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाववत्त्वात्, नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च, स्वाभावाभावात्मकस्य विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् ।

---

रिति वाच्यम् । तथासति तस्य केवलान्वयित्वात्तत्साध्यकसत्त्वादेः सद्धेतुत्वेन तत्राऽतिव्याप्तेरुपन्यासानौचित्यात् । तथापि सत्त्वे हेतौ द्रव्यत्वाभावस्य व्यभिचारग्रहदशायामपि प्रतियोगिसामान्यानधिकरणसत्त्ववन्निष्ठाभावप्रतियोगितानवच्छेदकं द्रव्यत्वाभावत्वमित्याकारकव्यापकताज्ञानादनुमित्यापत्तिरेवाऽत्राऽतिव्याप्तिशब्दार्थः । वस्तुतो द्रव्यत्वाभावस्यापि न प्रागुक्तव्याप्यवृत्तित्वमिति ध्येयम् ।

प्रथमसाध्येऽतिव्याप्तिं ग्राहयति साध्याभाववत इति । तत्प्रतियोगीति । तस्य–संयोगात्मनः साध्याभावस्य, यः प्रतियोगी संयोगविशेषाभावः तद्वत्त्वादित्यर्थः । द्वितीये अतिव्याप्तिं योजयति नित्यत्वादीति । नित्यत्वादिविशिष्टं यद्द्रव्यत्वं तदभावात्मको यः साध्याभावस्य प्रतियोगी तदधिकरणत्वात् साध्याभाववतो द्रव्यस्येति पूर्वेणाऽन्वयः । ननु विशिष्टद्रव्यत्वाभावो न द्रव्यत्वस्वरूपस्य साध्याभावस्य प्रतियोगी किन्तु नित्यत्वादिविशिष्टद्रव्यत्वस्यैवेति द्रव्यत्वं प्रतियोग्यधिकरणमेवेत्यत आह स्वाभावेति। स्वं–नित्यवृत्तित्वविशिष्टद्रव्यत्वम् । न च नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावस्याभावो न नित्यवृत्तित्वविशिष्टद्रव्यत्वम् विशिष्टस्याऽनतिरिक्ततया जन्येऽपि नित्यवृ-

---

त्त्वानधिकरणगुणाद्यवच्छेदेनेति काले प्रतियोगितदभावयोरवच्छेदकभेदेन सत्त्वात् । अनौचित्यादिति । तथाच समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभाव एव स्वरूपसम्बन्धेन साध्यः स च व्याप्यवृत्तिरेवेति भावः । प्रागुक्तेति । साध्यतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपेत्यर्थः ।

संयोगविशेषाभावः—कपिसंयोगाभावः, तत्तत्संयोगत्वावच्छिन्नाभावाभावस्य तत्संयोगादेः संयोगसामान्यानतिरिक्ततया संयोगसामान्याभावस्येव संयोगविशेषाभावस्यापि संयोगात्मकाभावप्रतियोगित्वादिति भावः । तदधिकरणत्वादिति । हेत्वधिकरणे नित्यद्रव्ये जन्यत्वविशिष्टद्रव्यत्वाभावात्मकप्रतियोगिसत्त्वादित्यर्थः । नित्यत्वादीत्यत्र आदिना जन्यत्वस्योपग्रहादित्याशयः । स्वं नित्यत्वविशिष्टद्रव्यत्वमिति । तथाच तदभावाभावात्मकस्य नित्यत्वविशिष्टद्रव्यत्वस्य द्रव्यत्वातिरिक्तत्वाभावादित्यर्थः । न च धूमवान् वह्नेरित्यादौ भावसाध्यकेऽपि धूमाभावादेर्नित्यत्वादिविशिष्टस्वाभावादिरूपप्रतियोगिसामानाधिकरण्येन लक्षणाघटकतयाऽतिव्याप्तिसम्भवेनाऽभावसाध्यकानुधावनमफलमिति वाच्यम् । धूमाभावस्य साध्यतावच्छेदकसंयोगादिना प्रतियोगिवैयधिकरण्यसम्भवेन साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविवक्षापक्षेऽप्यऽतिव्याप्तिसंपादनाय तदनुधावनात् ।

त्तित्वविशिष्टद्रव्यत्वस्याभावो नास्तीति प्रतीतिप्रसङ्गात्, किन्तु नित्यैकत्वादिकमेवेति नातिव्याप्तिरिति वाच्यम् । विशिष्टाधिकरणतायाः प्रतीतिनियामकतयैवाऽतिप्रसङ्गभङ्गे द्रव्यत्वमपेक्ष्य नित्यानन्तसंख्यापरिमाणादौ तादृशाभावत्वकल्पनायां गौरवात्, अभावाऽभावस्यैव प्रतियोगित्वमिति सिद्धान्तप्रवादाच्च ।

नन्वेवमपि निखिलाभावस्यैव स्वाश्रयतत्तद्व्यक्तिवृत्तित्वविशिष्टं यत्स्वं तदभावात्मकस्वप्रतियोगिना समं सामानाधिकरण्यात् प्रतियोगिव्यधिकरणाभावाऽप्रसिद्ध्यैव नातिव्याप्तिः एकव्यक्तिमात्रवृत्तीनां गुणाद्यात्मकाभावानामपि पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य योऽभावस्तादृशप्रतियोगिना सार्धं सामानाधिकरण्यात् । न च वक्ष्यमाणखण्डशःप्रसिद्ध्या गगनाभाव एव प्रतियोगिव्यधिकरणः, तस्यापि नित्यवृत्तित्वविशिष्टो यो गगनाद्यभावस्तदभावात्मकेन स्वप्रतियोगिना समं सामानाधिकरण्यात्, गगनाद्यभावस्यैव संयोगादिसम्बन्धेनाऽभावत्वावच्छिन्नप्रतियोगिताकाभावतया खण्डशः प्रसिद्ध्यापि तस्य प्रतियोगिव्यधिकरणत्वाऽसम्भवाच्च । एतेन नित्यत्वादिविशिष्टस्य गगनात्यन्ताभावस्य योऽभावस्तदभावत्वं न नित्यत्वविशिष्टगगनाद्यभावस्य, तस्य केवलान्वयितया जन्येऽपि नित्यवृत्तित्वविशिष्टस्य गगनाभावस्याऽभावो नास्तीतिप्रतीतिप्रसङ्गात्, किन्तु नित्यत्वादेरेव तथात्व(१)मित्युक्तावपि न निस्तार इति चेत् ।

---

**नित्यैकत्वादिकमिति** । आदिना संख्यापरिमाणयोर्ग्रहणम् । **अतिप्रसङ्गभङ्गे**—पूर्वप्रतीत्यापत्तिरूपाऽतिप्रसङ्गभङ्गे । ननु विलक्षणाऽधिकरणतायाः प्रतीतिनियामकतयैवाऽतिप्रसङ्गभङ्गे अभावमात्रस्यैव प्रायेणाऽभेदप्रसङ्ग इत्यत आह **अभावाभावस्यैवेति** ।

**निखिलाभावस्यैव**—घटाभावादेः । **स्वं**—घटाभावादिः । द्वितीयस्वपदेनापि तस्यैव ग्रहणम्, तथाच घटाभावाश्रयतत्तद्भूतलवृत्तित्वविशिष्टघटाभावाभावात्मकप्रतियोगिनेत्यर्थः । ननु एकाधिकरणमात्रवृत्त्यभावस्य न स्वीयतत्तदधिकरणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसम्भव इत्यतोऽप्रसिद्धिं योजयति—**एकव्यक्तिमात्रवृत्तीनामिति** । गगनाभावस्य प्रतियोग्यधिकरणाऽप्रसिद्ध्या यथाश्रुतप्रतियोगिवैयधिकरण्यासम्भवादाह **वक्ष्यमाणेति** । साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नसामान्यप्रतियोगिकस्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगिताऽनवच्छेदकमित्यादिवक्ष्यमाणनिष्कर्षे इति यावत् । **संयोगादिसम्बन्धेनाऽभावत्वावच्छिन्नप्रतियोगिताकाभावतयेति** । गगनाभावस्य संयोगादिसम्बन्धेनाभावत्वा[illegible]भावसमनैयत्येन तत्स्वरूपतया अभाववाच्यत्वादिरूपप्रतियोगिसामानाधिकरण्यादिति यावत् । **एतेन**—व्यधिकरणसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणत्वकथनादेव । **तस्य**—गगनाभावस्य । **तथात्वम्**—नित्यत्वविशिष्टगगना-

---

(१) [क] न चैवं पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावाभावादेरपि पूर्वक्षणवृत्तित्वादिस्वरूप एवेति न

**अत्र नव्याः—यथाश्रुतस्य प्रागुक्तक्रमेण प्रतियोगिव्यधिकरणाभावस्याऽप्रसिद्ध्या वह्निमान् धूमादित्यादौ सर्वत्राऽसंभवः स्यात्, अतो यत्किंचित्स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत्साधनाधिकरणं तन्निष्ठाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव ल**

भावाभावत्वम्। एवं च तादृशाभावो विशेषणीभूतनित्यत्वस्वरूप एव विशिष्टस्वरूपस्य विशिष्टाभावाभावस्य विशेष्यविशेषणानतिरिक्तत्वादिति भावः(१)। एवं च प्रतियोगित्वं स्वरूपसम्बन्धविशेषः, न स्वभावाभावत्वमिति हृदयम्।

**यथाश्रुतस्य**—स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्त्विकरणकाभावस्येत्यर्थः। यत्किंचित्त्वनिवेशान्न पुनरप्रसिद्धिरित्यवधेयम्। **स्वं**—अभावः। प्रतियोगिवैयधिकरण्यं योजयति **तदीयमित्यादि**। **द्रव्यस्य**—संयोगेन घटानधिकरणद्रव्यस्य।

---

दोष इति वाच्यम्। पूर्वक्षणाऽवृत्तौ अवृत्तावपि पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावो नास्तीत्यादिप्रत्ययेन पूर्वक्षणवृत्तित्वादिमात्रस्य तादृशाभावरूपत्वासम्भवेन पूर्वक्षणवृत्तित्वविशिष्टगगनाभावादेरेव तादृशाभावरूपत्वावश्यकत्वात्।

[ख] अथैवं पूर्वक्षणवृत्तित्वविशिष्टगगनाद्यभावः पूर्वक्षणे वर्त्तते वृत्तिमन्तोऽवृत्तयो तेषु तदभावश्च पूर्वक्षणात् पूर्वं ये नष्टाः पूर्वक्षणोत्तरं ये उत्पत्स्यन्ते तेषु तदभावस्तु पूर्वक्षणे ये वर्त्तन्ते वृत्तयोऽवृत्तयो वा तेषु वर्त्तते इति फलितम्, तच्च न सम्भवति पूर्वक्षणवृत्तित्वविशिष्टगगनाद्यभावस्य पूर्वक्षणमात्रवृत्तित्वेन पूर्वक्षणकालीनवृत्त्यवृत्तिसाधारणत्वासम्भवादिति चेन्न।

कालिकसम्बन्धेन पूर्वक्षणवृत्तित्वविशिष्टगगनाद्यभावस्याऽभावीयविशेषणताविशेषसम्बन्धेन पूर्वक्षणातिरिक्तवृत्तित्वे बाधकाभावात्। न च विशिष्टाधिकरणतायां वैशिष्ट्यप्रतियोगिवृत्तित्वनिरूपकतावच्छेदकधर्मवत्त्वनियामकतया कथमेवमिति वाच्यम्। विशिष्टाधिकरणत्वं वैशिष्ट्यप्रतियोगिवृत्तित्वनियामकसम्बन्धयोरैक्यस्थले एव तन्नियमात्। अत एव गुणकर्मान्यसमवेतत्वविशिष्टसत्तावत्त्वं द्रव्ये एव, न तु गुणे, कपालसमवेतत्वविशिष्टघटवत्त्वं तु भूतलादावपि स्वीक्रियते इति संगच्छते।

[ग] मैवम्। गगनादेरपि कारणत्वसदातनत्वाद्यनुपपत्त्या वृत्तिमत्त्वस्वीकारेण पूर्वक्षणवृत्तित्वादेरेव तादृशाभावरूपत्वे बाधकाभावात्।

[घ] यद्वा हेतुत्वादिकं सम्बन्धित्वघटितमेव गगनाद्यवृत्तावपि क्षणादिकालस्य वृत्त्यनियामककालिकसम्बन्धोऽस्त्येव, एवं च पूर्वक्षणसम्बन्धादेरेव तादृशाभावरूपताङ्गीकारे न दोषः। अत एवेदानीं गगने शब्द इति प्रतीतिरपि संगच्छते, अन्यथाऽवच्छेद्यीभूतशब्दाधिकरणासम्बद्धकालस्यावच्छेदकत्वासम्भवेन तादृशप्रतीत्यनुपपत्तेरिति ध्येयम्। तादृशाभावस्य पूर्वक्षणवृत्तितारूपत्वेऽपि गगनाभावस्य संयोगेनाऽभावाभावरूपतया वाच्यत्वाभावरूपतया वा प्रतियोगिव्यधिकरणाभावस्याऽप्रसिद्धितादवस्थ्यादिति।

(१) न च विनिगमनाविरहाद्विशेष्यभूतगगनाभावरूपतैवाऽस्त्विति वाच्यम्। विशेष्यस्य गगनाभावस्य जन्येऽपि सत्त्वेन तत्र नित्यत्वविशिष्टगगनाभावाभावो नास्तीति प्रत्ययप्रसङ्गापातात्। एवं च नित्यत्वरूपविशेषणस्याऽनतिप्रसक्तत्वमेव विनिगमकमिति भावः। न च विशिष्टाभावाभावस्य विशेषणमात्रस्वरूपत्वे नित्यत्वविशिष्टद्रव्यत्वाभावाभावो नित्यत्वमेव स्यादिति वाच्यम्। नित्यत्वस्य गुणादौ, द्रव्यत्वस्याऽनित्यद्रव्येऽतिप्रसक्तत्वेन नित्यत्वविशिष्टद्रव्यत्वस्यैव तादृशाभावात्मकत्वात्। एवं च यत्र विशेषणविशेष्यान्यतरमात्रस्याऽनतिप्रसक्तत्वम्, तत्रैव तस्याऽन्यतरमात्ररूपत्वम्, यत्र च अतिप्रसक्तत्वम्, तस्योभयरूपत्वमेवेति।

क्षणे प्रवेशनीयम्, तथाच सद्धेतुस्थल इव द्रव्यत्वाभाववान् सत्त्वादित्यत्रापि संयोगेन घटाद्यभाव एव प्रतियोगिव्यधिकरणः, तदीयं घटनिष्ठप्रतियोगित्वं यादृशसंयोगसम्बन्धेनाऽवच्छिन्नम् तादृशसंयोगसम्बन्धेन साधनवतो द्रव्यस्य तदीयप्रतियोगितावच्छेदकावच्छिन्नसामान्यानाधिकरणत्वमक्षतमेव ।

---

[१] ननु पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यादावव्याप्तिर्दुर्वारैव हेतुसमानाधिकरणघटाभावप्रतियोगित्वस्य घटे इव पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेऽपि सत्त्वात्, तथाहि—स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं घटाद्यभावप्रतियोगित्वं संयोगसम्बन्धावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानाधिकरणत्वस्य हेत्वधिकरणे सत्त्वेन तद्वृत्तिर्यः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावः सोऽपि घटाभाव एव तदीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न ।

[क]प्रतियोगितयोरैक्यकरणेन तद्वारणात्, तथाहि—यत्किञ्चित्स्वीययादृशप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानाधिकरणं हेत्वधिकरणं तद्वृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीयतादृशप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयम् । अनुगमस्तु—प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकत्वादि । वै० स्वतादात्म्य—स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धेत्वधिकरणवृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिरूपितत्वोभयसम्बन्धेनेति । तथा च स्वीययादृशप्रतियोगितापदेन संयोगसम्बन्धावच्छिन्नघटनिष्ठप्रतियोगितायाः धारणे तादृशप्रतियोगितापदेन तस्या एव धारणेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नोक्तदोषावसर(१) इति ।

---

(१) [क] न च साध्यनिष्ठा संयोगसम्बन्धावच्छिन्ना प्रतियोगितैव यादृशप्रतियोगितापदेन ध्रियते तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं हेत्वधिकरणं सम्भवतीति तादृशप्रतियोगितापदेनापि तस्या धारणेनाऽव्याप्तितादवस्थ्यमिति वाच्यम् । संयोगसम्बन्धेन साध्याभावीयप्रतियोगितावच्छेदकावच्छिन्नसामान्याधिकरणत्वस्यैवाप्रसिद्धेस्तस्या धर्तुमशक्यतया स्वरूपेण साध्याभावस्य घटाभावस्वरूपत्वादिति; द्रव्यत्वाभाववान् सत्त्वादित्यादिशिरोमण्युक्तस्थले चातिव्याप्तिरस्त्येवेति संयोगसम्बन्धावच्छिन्नप्रतियोगिताया एव धारणात्, साध्यनिष्ठप्रतियोगिताया धारणे तु प्रतियोगिवैयधिकरण्यं न स्थास्यतीति भावः ।

[ख] नन्वेवमपि कालिकेन घटवान् तत्क्रियात्वादित्यादावव्याप्तिः, प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः, तत्क्रियाऽसमानकालीनकालिकसम्बन्धावच्छिन्नप्रतियोगिताकतद्व्यक्त्यभावीयप्रतियोगिताया यादृशप्रतियोगितापदेन धारणेऽपि तन्निरूपकाभावीयप्रतियोगितावच्छेदकावच्छिन्नसामान्यान्तर्गतस्य पूर्वक्षणवृत्तित्वविशिष्टतद्व्यक्त्यभावाभावस्य हेत्वधिकरणे कालिकसम्बन्धेन सत्त्वेन तदभावस्य लक्षणाऽघटकत्वात् । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य तथात्वेऽपि तस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वविरहादिति चेन्न ।

स्वीययादृशप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं स्वीययादृशसम्बन्धावच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नसामान्यस्य तेन सम्बन्धेनानधिकरणं हेत्वधिकरणम् तद्वृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीयतादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् । सम्बन्धैक्य-

तृतीये कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः, साध्याभावानां

---

न चैवमपि तदीयस्य साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वस्याऽप्रसिद्ध्या न दोषसंगतिः, पूर्वक्षणवृत्तित्वादिविशिष्टस्य घटाद्यभावस्याभाव एव तत्प्रसिद्धेरित्याहुः।

स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाव इत्यग्रिमलक्षणाभिप्रायेणेदम्, संयोगेन घटाभावस्यैव प्रतियोगिवैयधिकरण्यसौलभ्यादित्यपि वदन्ति।

तृतीयेऽव्याप्तिं दर्शयति कपीति। प्राचां मते संयोगसामान्याभावसाध्यकमात्मत्वं विरुद्धमतः कपिसंयोगसामान्याभाव उक्तः। वृक्षादौ उत्पत्तिकालावच्छेदेन गुणसामान्याभावसत्त्वाद् वृक्षत्वादिकं परित्यज्याऽऽत्म-

---

[ख]अन्ये तु पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यादौ साध्याभावस्य घटाभावात्मकस्य संयोगसम्बन्धेन प्रतियोगिव्यधिकरणतया तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाऽव्याप्तिवारणाय हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वान्न दोषः। साध्याभावस्वरूपानुयोगितायां हेत्वधिकरणवृत्तितावच्छेदकत्वाभावेन लक्षणाघटत्वादित्याहुः। तच्चिन्त्यम्।

तृतीये इति। प्रतियोगितावच्छेदकं यत्किञ्चित्त्वेनोपादाय तद्व्यक्त्यवच्छिन्नानधिकरणत्वमित्यर्थे इति यावत्। द्रव्यत्वाभाववान् सत्त्वादित्यत्र द्रव्यत्वाभावत्वरूपयत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं द्रव्ये इति नातिव्याप्तिः। गुणसामान्याभावस-

---

करणेन सर्वसामंजस्यात्। तथाहि स्वीयकालिकसम्बन्धावच्छिन्नतद्व्यक्तिनिष्ठप्रतियोगित्वस्य तथात्वेन तदीयतत्सम्बन्धावच्छिन्ना या प्रतियोगिता सा तद्व्यक्तिनिष्ठैवेति पूर्वक्षणवृत्तित्वविशिष्टतत्तद्व्यक्त्यभावाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव तद्व्यक्त्यभावस्वरूपतया तत्प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य तत्क्रियायां सत्त्वेन तत्क्रियाऽसमानकालीनतत्तद्व्यक्त्यभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति।

[ग] नन्वेवमपि स्वरूपेण प्रमेयसाध्यकवाच्यत्वहेतौ समवायेन प्रमेयाभावस्यापि लक्षणघटकत्वादव्याप्तिः। न च तत्प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावीयत्वविरहान्नाव्याप्तिरिति वाच्यम्। पूर्वक्षणवृत्तित्वविशिष्टसमवायसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि समवायेन प्रमेयाभावस्वरूपतया तन्निरूपितत्वस्य प्रमेयनिष्ठप्रतियोगितायां सत्त्वादिति चेन्न।

तथाविधहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व साध्यतावच्छेदकावच्छिन्नत्वोभयाभावः तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणात्, समवायेन प्रमेयाभावीयप्रतियोगितायामुभयोः सत्त्वात्तादृशाभावस्य लक्षणाघटकत्वादिति।

अस्त्वानुगमस्तु–प्रतियोगितावि[?]शिष्टा या तादृशोभयाभाववती प्रतियोगिता तदनवच्छेदकत्वादि। वै० स्वतादात्म्य स्वविशिष्टनिरूपकताकाधिकरणत्वाभाववद्धेत्वधिकरणवृत्त्यभावीयत्वोभयसम्बन्धेन। निरूपकतायां स्ववै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन। अत्र वै० स्वनिरूपकाभावीयत्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति न कोऽपि दोषः।

कपिसंयोगानां गुणानामधिकरणस्याऽऽत्मनः तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् ।

मैवम्, यादृश(१)प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्योक्तत्वात् ।

---

त्वं हेतुरुक्तः(२)। यद्यपि वृक्षादेः स्वसमवेतकपिसंयोगात्मकाभावप्रतियोगिनः समवेतसामान्याभावस्य द्रव्यमात्रसमवेताभावस्य चाऽनधिकरणत्वाद् वृक्षत्वादेरपि हेतुतायामव्याप्तिः सम्भवत्येव, तथापि सत्ताद्रव्यत्वयोरेव समवेताभावद्रव्यमात्रसमवेताभावयोरभावत्वम् लाघवात्, न तु कपिसंयोगाद्यात्मकसमवेतमात्रस्य तथात्वं गौरवादित्याशयः ।

---

त्वादिति । तथाच साध्याभावे प्रतियोगिवैयधिकरण्यं न घटते अतः आत्मत्वं हेतुरुक्त इति ।

लाघवादिति । सत्तादेरनुगतजातिरूपतया तेनैव समवेतसामान्याभावो नास्तीत्या-

---

(१) यादृशत्वं प्रतियोगिताविशेषणम्, अवच्छेदकविशेषणत्वे यादृशावच्छेदकविशिष्टस्याऽनधिकरणं हेत्वधिकरणं तादृशावच्छेदकभिन्नं यत्साध्यतावच्छेदकमित्यस्यैव सम्यक्त्वे प्रतियोगितादिप्रवेशवैयर्थ्यं स्यादिति ।

(२) केचित्तु ननु यथा समवेतसामान्याभावाभावद्रव्यमात्रसमवेताभावाभावयोः सत्ताद्रव्यत्वरूपत्वेन तमादाय न वृक्षत्वहेतुकेऽव्याप्तिः, तथा गुणसामान्याभावाभावस्यापि एकत्वरूपतयाऽऽत्मत्वहेतावपि नाव्याप्तिसम्भावना, कपिसंयोगाभावाभावप्रतियोगित्वं न गुणसामान्याभावे तदभावस्य एकत्वरूपतया कपिसंयोगस्वरूपत्वानभ्युपगमात्, तथाहि साध्याभावप्रतियोगितावच्छेदकीभूतकपिसंयोगाभावत्वावच्छिन्नाधिकरणत्वस्यैवाऽऽत्मनि सत्त्वात्तस्य लक्षणाघटकत्वात् । न च नित्यगतैकत्वकपिसंयोगान्यतराभावाभावस्याऽन्यतरस्वरूपतया कपिसंयोगाभावाभावस्वरूपतया च साध्याभावप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मान्तर्गततादृशान्यतराभावत्वावच्छिन्नानधिकरणत्वस्याऽऽत्मनि सत्त्वात्तद्वृत्तिसाध्याभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद् भवति शिरोमण्युक्ताव्याप्तिः, वृक्षत्वहेतुके तादृशान्यतराभावस्य वृक्षे सत्त्वान्नाव्याप्तिसम्भवोऽतो वृक्षत्वादिकं परित्यज्याऽऽत्मत्वं हेतुरुक्त इति वाच्यम् । वृक्षत्वहेतुके तुल्ययुक्त्या वृक्षत्वकपिसंयोगान्यतराभावाभावस्यान्यतरस्वरूपत्वेन कपिसंयोगाभावाभावात्मकतया तत्प्रतियोगितावच्छेदकोक्तान्यतराभावत्वावच्छिन्नानधिकरणत्वस्य वृक्षे सत्त्वेन व्याप्तिसम्भवे तत्परित्यागाऽनौचित्यात्, एवं तादृशान्यतराभावाभावानामन्यतरस्वरूपत्वमेवाऽसिद्धम्, नित्यगतैकत्वाभावकपिसंयोगाभावोभयाभाववदस्यातिरिक्तत्वात्, द्वितीयस्तु वृक्षत्वाभावकपिसंयोगाभावोभयाभाववदस्याप्यतिरिक्तत्वात्, उभयान्यतरस्वरूपत्वकल्पने गौरवादत आत्मत्वहेतुकेऽप्यव्याप्तेरसम्भवात् । न च कपिसंयोगान्यो यः कपिवृत्तिगुणस्तत्सामान्याभावाभावस्य गुणस्वरूपत्वेन साध्याभावस्वरूपतया कपिसंयोगाभावाभावस्य प्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मान्तर्गततादृशगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वस्याऽऽत्मनि सत्त्वात् तद्वृत्तिसाध्याभावस्य लक्षणघटकत्वादात्मत्वहेतावव्याप्तिः सम्भवत्येव, वृक्षत्वहेतुके चोत्पत्तिकालावच्छेदेन तादृशगुणसामान्याभावसत्त्वान्नाव्याप्तिः, नहि तादृशाभावस्य नित्यैकत्वस्वरूपत्वम्, कपिपदार्थेऽपि तस्याऽसत्त्वप्रसङ्गात्, नापि रूपादिस्वरूपत्वम्, गगनादावसत्त्वप्रसङ्गादिति वाच्यम् । वृक्षत्वहेतुकेऽपि संयोगान्यवृक्षवृत्तिसमवेतान्यसमवेताभावाभावस्य समवेतस्वरूपत्वेन कपिसंयोगात्मकसाध्याभावस्वरूपतया तादृशसमवेताभावानधिकरणत्वस्य वृक्षे सत्त्वेन तद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाऽव्याप्तेः सम्भवात् । न च तादृशाभावस्य सत्तारूपत्वमेवास्तु तावतैव वृक्षत्वहेतुके नाऽव्याप्तिरिति वाच्यम् । कपिसंयोगशून्यकाले तादृशाभावस्य कपिपदार्थे सत्त्वप्रसङ्गादिति चेन्न ।

गुणसामान्याभावस्य संयोगस्वरूपाभावप्रतियोगित्वमाविष्कर्तुं गुणत्वानुगतप्रतीत्युपपत्तौ तद्विषयस्य सकलसमवेतरूपत्वे मानाभाव इत्याशयः। एतेन समवेतसामान्याभावाभावादेः सकलसमवेतरूपत्वे गौरवेण लाघवात्सत्तादिरूपत्वे गुणसामान्याभावाभावस्यापि सकलगुणरूपत्वे गौरवेण लाघवादेकत्वादिरूपत्वमेवोचितमित्यात्मत्वादिहेतुकेऽपि नाव्याप्तिरिति निरस्तम्। एकत्वादेरजातित्वेनाननुगतत्वात्, विनिगमनाविरहेण संयोगाद्यात्मकत्वस्यापि सुवचतया आत्मत्वादिहेतावव्याप्तिसम्भवाच्च, गुणसामान्याभावो नास्तीत्यनुगतप्रतीतेरनुगतोपस्थितगुणत्वावच्छिन्नविषयकत्वौचित्याच्च(१)।

---

स्वीयप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नानधिकरणहेत्वधिकरणवृत्तीत्यत्र स्वीयप्रतियोगितायां विशेषणान्तरं प्रवेश्य वृक्षत्वहेतुकस्थलेऽव्याप्तिवारणसम्भवात्, तथाहि स्ववृत्तिपदार्थविभाजकीभूतधर्मावच्छिन्नानधिकरणवृत्तिप्रतियोगिताकाभाववृत्तित्वस्य प्रतियोगितायां निवेशात्। स्वपदेन कपिसंयोगात्मकाभावस्यैव धारणे तद्वृत्तिर्यः पदार्थविभाजकीभूतो धर्मः गुणत्वरूप एव तदनधिकरणं द्रव्यादिकम् तद्वृत्तिप्रतियोगिताकाभावस्तादृशसमवेताभावस्तादृशाभाववृत्तिप्रतियोगिता न कपिसंयोगाभावाभावीया तादृशसमवेताभावनिष्ठा, अपि तु कपिसंयोगाभावनिष्ठैवेति तदवच्छिन्नानधिकरणत्वस्य वृक्षेऽसत्त्वेन तत्स्थले नाव्याप्तिरतस्तत्परित्यज्याऽऽत्मत्वं हेतुरुक्तः। तत्र च कपिसंयोगात्मकाभावस्यैव स्वपदेन धारणेन तद्वृत्तिपदार्थविभाजकगुणत्वानधिकरणद्रव्यनिष्ठप्रतियोगिताकाभाववृत्तिर्या स्वीयकपिसंयोगान्यकपिवृत्तिगुणान्यगुणसामान्याभावनिष्ठा प्रतियोगिता तदवच्छेदकावच्छिन्नानधिकरणत्वस्याऽऽत्मनि सत्त्वात्तद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वाद् भवत्यव्याप्तिरिति। न च वृक्षत्वहेतुकस्थलेऽपि कपिसंयोगान्यकपिवृत्तिसमवेतान्यसमवेताभावाभाव एव स्वपदेन ध्रियते तद्वृत्तिर्यः पदार्थविभाजको धर्मः स च द्रव्यत्वगुणात्मकः तदनधिकरणवृत्तिप्रतियोगिताकाभावाऽवृत्तिर्या प्रतियोगिता सा तादृशसमवेताभावनिष्ठा तदवच्छेदकावच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वेन तद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिः सम्भवतीति वाच्यम्। स्वाश्रयवृत्तिपदार्थविभाजकधर्मानधिकरणवृत्तिप्रतियोगिताकाभाववृत्तिर्यादृशानुयोगितानिरूपितप्रतियोगिता तदवच्छेदकयत्किञ्चिद्धर्मावच्छिन्नानधिकरणहेतुमद्वृत्त्यभावनिष्ठतादृशानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात्। एवं च तादृशसमवेताभावाभावत्वरूपानुयोगिता यदि स्वपदेन ध्रियते, तदा तन्निरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद् वृक्षत्वहेतौ नाऽव्याप्तिः, आत्मत्वहेतुके च साध्याभावत्वरूपानुयोगितामादायैवाऽव्याप्तिरिति।

अस्यानुगमस्तु—अनुयोगिताविशिष्टानुयोगितनिरूपितप्रतियोगितानवच्छेदकसाध्यतावच्छेदकमित्यादि। वै० स्वतादात्म्यस्वविशिष्टप्रतियोगितावच्छेदकविशिष्टहेत्वधिकरणवृत्त्यभाववृत्तित्वोभयसम्बन्धेन, प्रतियोगितायां स्वै० स्वाश्रयानिरूपितत्व-स्वाश्रयवृत्तिपदार्थविभाजकधर्मानधिकरणवृत्तिप्रतियोगिताकाभाववृत्तित्वोभयसम्बन्धेन, हेतुमतिप्रतियोगितावच्छेदकवै० स्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वावच्छिन्नभेदवत्त्वसम्बन्धेन। प्रतियोगितावच्छेदकवैशिष्ट्यदानेन यत्किञ्चित्त्वस्य निवेश आयातः। न चाऽनुयोगितानिवेशस्यावश्यकतया यादृशानुयोगितानिरूपितप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशानुयोगितानिरूपितप्रतियोगितानवच्छेदकेत्यादेरेव सामंजस्ये किमभावघटितलक्षणेनेति वाच्यम्। अग्रे यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणेत्यादिलक्षणस्य कर्त्तव्यतया इदानीमभावघटितलक्षणे तात्पर्यात्, अग्रे च दोषं दत्वा तस्य खण्डनं सङ्गच्छते इति ध्येयम्।

(१) ननु वह्न्यभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वे इव वह्न्यभावघटत्वाभावान्यतराभावत्वेऽपि सत्त्वात् तादृशान्यतराभावत्वावच्छिन्नाधिकरणत्वस्य च वह्निमद्घटादौ प्रसिद्धत्वात्तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्य पर्वतादौ सत्त्वेन वह्निमान् धूमादित्यत्रैवाऽव्याप्तिसम्भवे स्थलान्तरानुधावनं किमर्थमिति चेन्न। तृतीयकल्पे प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसम्बन्धेन बोध्यम्, एवं च साध्यतावच्छेदकसंयोगसम्बन्धेन तादृशान्यतराभावत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेरव्याप्तिरिति।

णानामिदमुक्तम् । तत्प्रतियोगितेति । कपिसंयोगीयप्रतियोगितावच्छेदकेत्यर्थः ।

न च गुणसामान्याभावस्याभावो द्रव्यत्वमेव लाघवात्, न तु गुणो गौरवाद्, अतः संयोगप्रतियोगित्वं न गुणसामान्याभावस्येति वाच्यम् । घटादौ उत्पत्तिदशायां गुणसामान्याभावस्यैव सत्त्वेन द्रव्यत्वस्य तदभाववत्त्वाऽसम्भवादभावाभावस्य प्रतियोगित्वनियमाच्चेति भावः ।

यादृशेति । तथाच गुणसामान्याभावनिष्ठप्रतियोगिताया अवच्छेदकं यद् गुणसामान्याभावत्वं हेतुमतस्तदवच्छिन्नानधिकरणत्वेऽपि कपिसंयोगाभावत्वस्य तादृशप्रतियोगितानवच्छेदकत्वात्ताद्रूप्येण साध्यतायामात्मत्वहेतौ नाव्याप्तिः ।

द्रव्यत्वाभाववान् सत्त्वादित्यादौ तु द्रव्यत्वाभावत्वावच्छिन्नानधिकरणं यद्धेतुमत्तन्निष्ठाभावस्य तादृशप्रतियोगितावच्छेदकमेव द्रव्यत्वाभावत्वमतो नातिव्याप्तिरिति भावः ।

नच वह्निमान् तत्पर्वतत्वादित्यादौ तत्तद्वह्निसंयोगसम्बन्धेन साध्यतायामव्याप्तिः, तत्सम्बन्धावच्छिन्नघटाद्यभावप्रतियोगिनः तेन सम्बन्धेनाऽधिकरणाप्रसिद्धेरिति वाच्यम् । यत्प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतस्तेन सम्बन्धेन तादृशप्रतियोगिता-

---

दीधितौ यादृशेति । तथाच स्वावच्छेदकावच्छिन्नत्वसम्बन्धेन हेतुमन्निष्ठभेदप्रतियोगितावच्छेदकत्वावच्छिन्नैकभेद एव साध्यतावच्छेदके निवेश्यः, अन्यथा तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटस्य साध्यतावच्छेदके निवेशे व्याप्तेर्दुर्ज्ञेयत्वापत्तिः । तत्तत्प्रतियोगितानवच्छेदकं वह्नित्वमित्याकारकसमूहालम्बनज्ञानस्यैवाऽनुमितिहेतुतया विशिष्टपरामर्शस्यानुमितिहेतुतानुपपत्तिश्चेति बोध्यम् । अनुगमस्तु—प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकमित्यादि । वै० स्वतादात्म्य—स्वविशिष्टहेत्वधिकरणवृत्त्यभावीयत्वोभयसम्बन्धेन, हेत्वधिकरणे स्ववै०स्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेति(१) । साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशाभिप्रायेण शङ्कते नचेति सम्बन्धेन—तत्तद्वह्निप्रतियोगिकसंयोगसम्बन्धेन । यत्प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेन—साध्यतावच्छेदकसम्बन्धा-

---

(१) प्रकारविधया निवेशश्च हेत्वधिकरणवृत्तित्वार्थः प्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताको भेदः तदीयप्रतियोगितानिरूपिताऽधिकरणत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रतियोगितानवच्छेदकमित्यादि । भेदश्च यादृशप्रतियोगितानिरूपितावच्छेदकतावद्धर्मनिष्ठावच्छेदकतानिरूपितनिरूपकताकाधिकरणतावान्नेति प्रतीतिसिद्धो ग्राह्यः ।

नवच्छेदकत्वस्य विवक्षितत्वात् । घटत्वावच्छिन्नाधिकरणतासामान्यस्यैव तत्तद्वह्निनिरूपितसंयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धे-नाऽभावस्य हेतुमति सत्वेन तादृशसम्बन्धेन घटाद्यभावस्यैव प्रतियोगि-व्यधिकरणत्वसम्भवात् ।

तादृशाभाववत्वं च हेतुमतो निरवच्छिन्नविशेषणतयैव वाच्यम्, अतः कपिसंयोगाधिकरणत्वाभावस्य वृक्षवृत्तित्वेऽपि तत्साध्यक एतत्वादौ नाव्याप्तिः ।

अत्र प्रतियोगितावच्छेदकधर्मावच्छिन्नत्वं साध्यतावच्छेदकताघटक सम्बन्धेनैव ग्राह्यम्, तेनाऽयःपिण्डस्य कालिकादिसम्बन्धेन यद् धूमत्व-विशिष्टं तृणादिकं संयोगेन तस्याधिकरणत्वेऽपि धूमवान् वह्नेरित्यादौ ना-तिव्याप्तिः ।

प्रतियोगितावच्छेदकताघटकसम्बन्धेन तदवच्छिन्नत्वनिवेशे तु प्रति-योगितावच्छेदकत्वामित्यत्राऽवच्छेदकत्वं साध्यतावच्छेदकताघटकसम्ब-

---

वच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसम्बन्धेनेत्यर्थः(१) ।

तादृशाभाववत्वञ्च—प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभा ववत्ता चेत्यर्थः । वृक्षवृत्तित्वेऽपीति । अव्याप्यवृत्तेरधिकरणतापि अव्याप्यवृत्तिरिति हृद यम्, तेन अस्य नातिव्याप्तिरित्यनेनाऽन्वयः । कालिकादिसम्बन्धेन यद् धूमत्ववि शिष्टं तृणादिकमपीति । [१]ननु येन केनचित्सम्बन्धेन प्रतियोगितावच्छेदकाविशिष्टे यस्तदधिकरणतायाः सर्वत्रैव सत्वेन प्रतियोगिव्यधिकरणाऽभावाप्रसिद्ध्याऽव्याप्तिसम्भवेऽति व्याप्त्यनुधावनमनुचितमिति चेन्न ।

स्ववृत्तिवाच्यत्वादिपरम्परायाः सम्बन्धत्वानङ्गीकारपक्षे तत्पर्वतसंयुक्तासमानकालीनघटा दिव्यक्त्यवच्छिन्नाभावस्य लक्षणघटकत्वेनाऽव्याप्तिविरहात् । न च द्रव्यत्वसाध्यकाऽऽत्मत्व-हेतुकेऽसमानकालीनव्यक्तेरपि विषयितासम्बन्धेन ज्ञाने सत्वेनाऽऽत्मनि साध्यतावच्छेदकसमवा-

---

(१) प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावश्च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, अन्यथा कालिकेन सर्वस्यैव हेतुमतः प्रतियोग्याधिकरणतावत्त्वात्प्रतियोग्यनधिकरणहेत्वधिकरणाऽप्रसिद्धे. एवं च तादृशस्वरूपसम्बन्धे तादृशाधिकरणताप्रतियोगिकत्वं निवेशनीयमिति भावः.।

न च प्रतियोगितावच्छेदककोटौ अधिकरणतात्वप्रवेशो व्यर्थः, तादृशाधिकरणताप्रतियोगिकस्वरूपसम्ब न्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपितसामान्याभाववत्त्वं हेतुमत इत्यस्यैव सम्यक्त्वा दिति वाच्यम् । वाच्यं प्रमेयत्वत्वादित्यादौ प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपितप्रमेयत्वनिष्ठा-धेयत्वस्य स्वरूपसम्बन्धावच्छिन्ननिरूपकताकप्रमेयत्वनिष्ठाधिकरणत्वस्य च प्रमेयत्वात्मकतया ऐक्येन प्रति-योगिव्यधिकरणाभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् । न च तादृशाधिकरणतात्वावच्छिन्नप्रतियोगिकस्वरूपसम्ब-न्धेन निवेशे न दोष इति वाच्यम् । वह्निमान् धूमादित्यादावव्याप्तेः, वह्न्यभावप्रतियोगितावच्छेदकावच्छिन्न निरूपकतानिरूपितत्वावच्छिन्नस्य तादृशाधिकरणतात्वावच्छिन्नप्रतियोगिकस्वरूपेण सत्त्वासम्भवात् । अनु-गमस्तु—प्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वम् । वै० स्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतात्वाव च्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति ।

न्धेनैव ग्राह्यम्, अन्यथा विषयितासम्बन्धेन रूपत्वावच्छिन्नस्य ज्ञानादेः पृथिव्यादौ समवायेनाऽभावस्य सत्त्वाद् रूपवान् पृथिवीत्वादित्यादावव्याप्तिप्रसङ्गात् ।

वस्तुतः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं यत्प्रतियोगितावच्छेदकत्वं तन्निरूपितस्वरूपसम्बन्धेनैव निरुक्तप्रतियोगितावच्छेदकत्वस्याभावः साध्यतावच्छेदकधर्मे वक्तव्यः, तेन वह्निमान् धूमादित्यादौ यत्र वह्नित्वादिनिरूपितसमवायादिसम्बन्धेन वह्नित्वादेः साध्यतावच्छेदकत्वं तत्र तादृशसम्बन्धावच्छिन्नस्य प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्याऽप्रसिद्धावपि न क्षतिरिति ध्येयम्(१) ।

यसम्बन्धेन प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धिरिति वाच्यम् । विषयितायाः संसर्गत्वानभ्युपगमेऽव्याप्तिविरहात् । न च तथापि प्रतियोगिव्यधिकरणाभावाऽप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम् । तदयोगोलकसंयुक्ताऽसमानकालीनतद्व्यक्तित्वावच्छिन्नाभावस्यैव प्रतियोगिव्यधिकरणत्वसम्भवादिति ध्येयम् ।

वस्तुत इति । तन्निरूपितस्वरूपसम्बन्धेनैवेति । तत्प्रतियोगिकस्वरूपसम्बन्धेनैवेत्यर्थः । पूर्वकल्पे स्वयमस्वरसमाह तेन—वस्तुत इत्यादिकल्पादरेण । वह्नित्वादिनिरूपितसमवायादिसम्बन्धेन—वह्नित्वप्रतियोगिकसमवायसम्बन्धेन । तादृशसम्बन्धावच्छिन्नस्य—वह्नित्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नस्य । न क्षतिरिति । तादृशप्रतियोगितावच्छेदकत्वाभावोऽवश्यं स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको वाच्यः, अन्यथा तादृशघटाभावीयप्रतियोगितावच्छेदकतायाः कालिकादिना वह्नित्वे सत्त्वादव्याप्तिप्रसङ्गात् । एवं च तादृशस्वरूपे साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिकत्वमपि निवेशनीयमिति भावः । तथाच तत्सम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धस्य

(१) नन्वत्र घटाभावीयप्रतियोगितावच्छेदकताया एव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वप्रसिद्धिः, विशिष्टस्य शुद्धानतिरिक्तत्वादिति चेन्न ।

वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानशुद्धसमवायेन वह्नित्वविशिष्टविषयकज्ञानान्यतरत्वहेतौ हेतुसमानाधिकरणस्यापि साध्याभावस्य शुद्धसमवायेन वह्नित्वविशिष्टसमानाधिकरणतया लक्षणाघटकत्वादतिव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वपदेन साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यत्प्रतियोगितावच्छेदकनिष्ठनिरूपकतावच्छेदकत्वं तादृशावच्छेदकताकत्वं विवक्षणीयम्, रूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अत्र तादृशरूपवृत्ति यत्प्रतियोगितावच्छेदकत्वमित्युक्तौ तद्दोषतादवस्थ्यादिति ध्येयम् । एवं वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ हेतुसमानाधिकरणशुद्धसमवायेन वह्नित्वविशिष्टाभावीयप्रतियोगितावच्छेदकताया अपि साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वादव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यदवच्छेदकत्वं तदेव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वपदेन विवक्षितम्, वृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तथा चोक्तमतद्वयेऽपि वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायामप्रसिद्धिरिति भावः ।

अत्र यादृशप्रतियोगितावच्छेदकधर्मे तादृशप्रतियोगिताश्रयाधिकरणीभूतयद्व्यक्तिनिष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकः तत्तद्व्यक्तिभेदकूटवत्त्वमेव यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्यार्थो बोध्यः, तेन धूमवानित्यादिप्रतीतेरवश्यक्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेवोपपत्तौ धूमत्वाद्यखण्डधर्मावच्छिन्नाधिकरणतायां मानाभावाद् धूमादिसामान्याभावप्रतियोगितावच्छेदकं यद् धूमत्वादिकं तदवच्छिन्नाधिकरणत्वाप्रसिद्धावपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः, धूमाधिकरणतत्तद्व्यक्तिभेदकूटवत्त्वमादायैव धूमसामान्याभावस्य प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यसम्भवादिति ध्येयम् ।

---

घटत्वादिनिष्ठप्रतियोगितावच्छेदकतायाः व्यधिकरणसम्बन्धतया तेन सम्बधेन प्रतियोगितावच्छेदकत्वाभावः केवलान्वयीति नाव्याप्तिरिति भावः ।

[१]अथैवं हेतुसमानाधिकरणाभावप्रतियोगितानिरूपिताभाववत्साध्यतावच्छेदकमित्येवास्तु किमवच्छेदकतात्वेनाऽवच्छेदकतानिवेशेनेति चेन्न ।

प्रतियोगितावान्नास्तीत्यभावप्रतियोगितावच्छेदकतावतः साध्यत्वे घटत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितानिरूपितवृत्तितायास्तादृशसाध्यतावच्छेदके सत्वादव्याप्त्यापत्तेः । न च तादृशप्रतियोगितानिरूपितावच्छेदकत्वीयस्वरूपसम्बन्धेन तत्प्रतियोगितानिरूपितवृत्तित्वाभावस्य साध्यतावच्छेदके सत्वान्नाव्याप्तिरिति वाच्यम् । आधेयतया आधेयस्वरूपतया तादृशप्रतियोगितानिरूपितप्रतियोगितात्वनिष्ठावच्छेदकतास्वरूपाधेयतायास्तादृशावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेन साध्यतावच्छेदके सत्वादिति ध्येयम् ।

अत्र यादृशप्रतियोगितावच्छेदकधर्मे इति । तादृशेति । हेतुसमानाधिकरणाभावीयेत्यर्थः । भेदकूटवत्त्वमिति । तेन वह्निमान् धूमादित्यादौ वह्न्यधिकरणयत्किञ्चिद्व्यक्तिभेदमादाय नाव्याप्तिरिति भावः । तेनेति । अस्य नातिव्याप्तिरित्यनेनाऽन्वयः । धूमवान्वह्नेरित्यादौ तादृशप्रतियोगिताश्रयधिकरणं धूमाधिकरणमात्रं धूमत्वादौ तन्निष्ठाधिकरणतानिरूपितानिरूपकतानवच्छेदकत्वसत्त्वेऽपि अधिकरणतानिरूपितानिरूपकतावच्छेदकत्वाभावादेवोभयाभावसत्त्वात्, विशिष्टसत्तावान् जातेरित्यादौ च तादृशप्रतियोगिताश्रयाधिकरणं द्रव्यमेव न तु गुणादि, तत्र तादृशप्रतियोगिताश्रयाधिकरणत्वेऽपि तन्निष्ठाधिकरणतानिरूपितानिरूपकतानवच्छेदकत्वस्य द्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य च द्वयोः विशिष्टसत्तात्वे सत्वात् द्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वविरहेण द्वयोरभावसत्त्वात्तद्भेदकूटवत्त्वमादाय गुणादौ विशिष्टसत्ताभावस्य प्रतियोगिव्यधिकरणत्वादिति । कुत इत्याकाङ्क्षायामाह धूमाधिकरणेत्यादि ।

अत्र यद्व्यक्तिपदेनाऽयोगोलकादेरपि धर्तुं शक्यतया तस्यापि उक्तपारिभाषिकप्रतियोग्यधिकरणत्वेनाऽतिव्याप्तिः स्यादतः प्रतियोगिताश्रयाधिकरणीभूतेति ।

[१]अथात्र प्रतियोगिताश्रयाधिकरणत्वमवश्यं साध्यतावच्छेदकसम्बन्धेन प्राह्यम् . अ·

न्यथा धूमवान् वह्नेरित्यादौ कालिकादिसम्बन्धेन प्रतियोगिताश्रयाधिकरणत्वमादाय धूमाभावस्य निरुक्तप्रतियोगिवैयधिकरण्यासम्भवेन निरुक्तप्रतियोगिव्यधिकरणहेत्वधिकरणतत्तद्योगोलकासमानकालीनवस्त्वभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तिः स्यात्, तथाच वह्निमान् धूमादित्यादौ तद्वह्निप्रतियोगिकसंयोगेन साध्यतायामव्याप्तिः, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताश्रयाधिकरणत्वघटितनिरुक्तप्रतियोगिवैयाधिकरण्याप्रसिद्धेः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिताश्रयाधिकरणत्वनिवेशे तु प्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गात्, तथाचोक्ताऽव्याप्तिर्दुर्वारैव । न च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत्त्वं विवक्षणीयम्, तथाच संयोगसंबन्धावच्छिन्नघटाद्यभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसत्त्वेऽपि साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नत्वविरहादेव प्रतियोगितायामुभयाभावसत्त्वात्तादृशाभावमादायोक्तस्थले लक्षणसमन्वय इति वाच्यम् । प्रमेयविशिष्टस्य पर्वतानुयोगिकसंयोगेन साध्यतायां तद्धूमादिहेतौ तादृशोभयाभाववत्प्रतियोगिताकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाप्रसिद्धेः, साध्यतावच्छेदकावच्छिन्नत्वपदेन साध्यतावच्छेदकताव्यापकावच्छेदकतानिरूपितत्वविवक्षया उक्तस्थले घटाद्यभावप्रतियोगितायां प्रमेयनिष्ठावच्छेदकतानिरूपितत्वसत्त्वेऽपि साध्यतावच्छेदकताव्यापकत्वविरहादेव निरुक्तोभयाभावसत्त्वेनाव्याप्तिवारणेऽपि साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यघटितलक्षणस्य तत्राव्याप्तिर्दुर्वारैवेति चेन्न ।

एतत्कल्पे कालो घटवान् महाकालत्वादित्यादाविव तत्र तत्राव्याप्तिसत्त्वेऽपि क्षत्यभावादिति ध्येयम्(१) ।

न च विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावप्रतियोगितावच्छेदकीभूतसत्तात्वे गुणनिष्ठाधिकरणतावच्छेदकत्वघटितोभयाभावसत्त्वेन यत्पदेन धर्तुं शक्यतया साध्याभावस्य लक्षणाघटकत्वेनाऽभावान्तरमादायाऽतिव्याप्तिवारणाय स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्व्यक्तिनिष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो

---

(१) [क] केचित्तु हेत्वधिकरणवृत्तित्वसाध्यतावच्छेदकसम्बन्धानवच्छिन्नत्वोभयोभाववत्त्वं यादृशप्रतियोगिताश्रयाधिकरणत्वे निवेशनीयम्, न तु साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयाधिकरणत्वं निवेशनीयम्, एवं च न काप्यनुपपत्तिरित्याहुः ।

[ख] अन्ये तु प्रतियोगितावच्छेदकसम्बन्धेनैव तादृशाधिकरणत्वस्य निवेशः । न तु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यापि निवेश इति । न च समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतीयस्वरूपसम्बन्धेन तादृशावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षितत्वात् । न च कालो घटवान् महाकालत्वादित्यादावव्याप्तिसम्पादक-'ननु'इत्यादिग्रन्थानुत्थानापत्तिः, एतादृशरीत्यैव तत्र परिष्कारसम्भवादिति वाच्यम् । भट्टाचार्याणां तत्र "प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धे" इत्यादिना कटाक्षकरणवत्, एतद्दोषस्यापि कटाक्षान्तर्गतत्वे क्षत्यभावादिति वदन्ति ।

गितावच्छेदकत्वस्य(१) सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य(२) च द्वयोर्व्यतिरेकः तथाविधस्वाश्रयाश्रयवत्तद्व्यक्तिभेदकूटवत्त्वमित्यर्थः ।

---

(१) अन्यतरवारकपर्याप्त्यनिवेशे विषयितया वह्निसाध्यके वह्निविषयकमहानसीयवह्निविषयकज्ञानान्यतरत्वहेतावतिव्याप्तिः वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतायाः महानसीयवह्निविषयकज्ञाने सत्त्वेन तन्निष्ठाधिकरणताकनिरूपकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वाभावप्रयुक्तोभयाभावस्य तादृशरूपे सत्त्वेनाऽभावान्तरस्यैव लक्षणघटकत्वात् ।

(२) [क] न्यूनवारकमात्रपर्याप्तिनिवेशे धूमत्वगतैकत्वे तदुभयसत्त्वेन धूमवान् वह्नेरित्यत्र घटाभावमादायाऽतिव्याप्तिः स्यात् । स्वाव.च्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्, अन्यथा कालिकेन धूमत्वावच्छिन्नाधिकरणताया अयोगोलकेऽपि सत्त्वेन यत्वेनाऽयोगोलकादेरपि धर्तुं शक्यतयाऽन्याभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तेर्दुर्वारत्वात्, अनवच्छेदकत्वदलेऽपि निरूपकता साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा ज्ञानाभावस्य विषयितया साध्यतायां तज्ज्ञानघटविषयकज्ञानाभावविषयकज्ञानान्यतरत्वहेतौ प्रतियोगित्वसम्बन्धावच्छिन्ननिरूपकतामादायाऽतिव्याप्तेरवारणाद । अधिकरणतावच्छेदकत्वदलेऽपि निरूपकता तथैव ग्राह्या, अन्यथा विषयितासम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वघटितोभयोरेव धूमत्वगतैकत्वे सत्त्वेनाऽतिव्याप्त्यापत्तेः ।

[ख] अथ वह्निप्रतियोगिकसंयोगेन वह्निसाध्यके घटत्वावच्छिन्ननिरूपकतायां तादृशसम्बन्धावच्छिन्नत्वाभावादव्याप्तिः । न च साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य निरूपकतायां निवेशान्न दोष इति वाच्यम् । कालिकसम्बन्धावच्छिन्नघटत्वावच्छिन्ननिरूपकतायामपि तादृशोभयाभावसत्त्वाद् घटाभावोऽपि न लक्षणघटक इति वह्निमान् धूमादित्यादावव्याप्तेः । न च पर्वताऽसमानकालीनव्यक्तिविशिष्टाभावमादायाव्याप्तिवारणमिति वाच्यम् । वृत्त्यनियामकसम्बन्धेन साध्यतास्थलानुरोधेन सम्बन्धितानिवेशस्यावश्यकतया स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन तदधिकरणताया अपि पर्वतादौ सत्त्वादव्याप्तेर्दुर्वारत्वात् ।

अत्रोच्यते तादृशोभयाभाववद्यत्किञ्चित्सम्बन्धावच्छिन्ननिरूपकतेत्येवं निवेशेनैव सद्धेतौ संयोगादिसम्बन्धावच्छिन्ननिरूपकतामादाय लक्षणसंगतिः । असद्धेतौ अन्यसम्बन्धावच्छिन्ननिरूपकतायां नोभयाभाववत्त्वमिति नातिव्याप्तिशंकेति ध्येयम् ।

अस्यानुगमस्तु—यादृशप्रतियोगित्वाभाववद्धेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकेत्यादि । प्रतियोगित्वाभाववत्त्वं च स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वसम्बन्धेन । हेत्वधिकरणे रूपवृत्तित्वं च स्वनिष्ठाधिकरणताकयत्किचित्सम्बन्धावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व-स्वकालीनाधिकरणताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन । घटत्वावच्छिन्नप्रतियोगित्वाभावस्य तादृशसम्बन्धेन हेत्वधिकरणे सत्त्वाल्लक्षणसमन्वयः ।

(ग) ननु घटत्वपटत्वोभयवान् द्रव्यत्वादित्यादौ साध्याभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपानवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताया अप्रसिद्ध्या साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायातिव्याप्तिरिति चेन्न ।

साध्यतावच्छेदके प्रमीयप्रकारतावच्छेदकत्वनिवेशेनैव तद्वारणात् । नचैवं प्रमीयत्वनिवेशस्यावश्यकत्वे प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभाववद्धेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकेत्यादि निवेश्यतां किमुभयाभावनिवेशेन । विरुद्धघटत्वपटत्वोभयसाध्यके च तादृशोभयत्वावच्छिन्नप्रकारितानिरूपितविशेष्यत्वस्य प्रमात्मकज्ञानीयतादृशसम्बन्धेनाभावस्य हेत्वधिकरणे सत्त्वेन तद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन नातिव्याप्तिरिति वाच्यम् । वह्निमान् धूमादित्यादौ वह्न्यभावप्रतियोगितावच्छेदकधर्माव-

नन्वत्र प्रतियोगित्वं नातिरिक्तः पदार्थः 'प्रतियोगित्वादिकन्तु स्वरूपसम्बन्धविशेष' इत्याद्युत्तरग्रन्थाविरोधात्, किन्तु स्वरूपसम्बन्धविशेषः, स च यदि प्रतियोगिस्वरूपः. तदा वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवः, पटादिस्वरूपस्यैकस्यैव पटाद्यभावप्रतियोगित्वस्य पटत्वावच्छिन्नवत् द्रव्यत्वसमवेतत्वज्ञेयत्वावच्छिन्नतया तादृशावच्छेदकीभूतज्ञेयत्वावच्छिन्नस्य हेतुमति सत्वेन प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेः। न च प्रतियो-

---

नातिरिक्तः पदार्थइति । प्रतियोगित्वं पदार्थविभाजकीभूतधर्मावच्छिन्नप्रतियोगिताकभेदकूटाभाववदित्यर्थः, नातोऽतिरिक्तपदार्थत्वाभावसाधने सिद्ध्यासिद्धिभ्यां व्याघातः। प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धेरिति ।

[क] नन्वत्र विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्य स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वाभाववदित्यर्थो वाच्यः, एवं च तादृशपटत्वघटितसमुदायत्वावच्छिन्ननिरूपकताकाधिकरणत्वाभावस्य पर्वतादौ सत्वात्कथमसम्भव इति चेन्न।

पटगगनोभयाभावप्रतियोगितायाः पटरूपतयोभयत्वमपि तत्प्रतियोगितावच्छेदकम्, तथाचोभयत्वघटितसमुदायत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽसम्भवतादवस्थ्यात् ।

[ख] न च सामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकारमते यादृशप्रतियोगितावच्छेदकधर्मे उक्तोभयाभावः तत्तद्व्यक्तिभेदकूटवद्धेत्वधिकरणकाभावस्य प्रतियोगिव्यधिकरणाभावपदेन विवक्षणीयतया नोक्ताऽसम्भवः, तादृशप्रतियोगितापदेन हेतुमन्निष्ठाभावीयतत्तत्प्रतियोगित्वस्य धर्तव्यतया घटस्वरूपं यत्प्रतियोगित्वं तदाश्रयाधिकरणीभूतं यद्भूतलादिकं तत्तद्भेदकूटस्य हेतुमति सत्त्वादिति वाच्यम्। एवंसति वह्निमान् धूमादित्यादावव्याप्तिः, वह्न्यभावस्य निरुक्तप्रतियोगिव्यधिकरणत्वात्, तादृशाभावीयमहानसीयवह्न्यादिस्वरूपं यत्प्रतियोगित्वं तदाश्रयाधिकरणं यद्यत्तदन्यत्वस्य हेतुमति सत्त्वात्, अतस्तद्वारणाय स्वनिरूपकाभावीयप्रतियोगित्वसम्बन्धेन प्रतियोगिताश्रयत्वं विवक्षणीयम्, तथाच वह्निसामान्याभावीयप्रतियोगित्वस्य निखिलवह्निस्वरूपत्वेन उक्तसम्बन्धेन तदाश्रयत्वस्य निखिलवह्नौ सत्त्वात्तदधिकरणीभूततत्तद्व्यक्तिभेदकूटस्य हेत्वधिकरणेऽसत्त्वात्, एवं चाऽसंभवस्य नासङ्गतिरिति ध्येयम्।

[ग] न च तथापि प्रतियोगितासम्बन्धेन वह्निसाध्यकतदभाववत्वहेतौ लक्षणगमनात्कथमसंभवः, साध्यतावच्छेदकीभूतप्रतियोगितासम्बन्धेन घटाद्यभावस्य प्रतियोगिव्यधिकरणत्वादिति वाच्यम्। प्रतियोगितासम्बन्धेन घटाद्यभावीयघटस्वरूपप्रतियोगित्वस्य जातिमदभावी-

---

च्छिन्नप्रकारतानिरूपितविशेष्यत्वघटोभयाभावस्य हेतुमति सत्त्वादव्याप्त्यापत्त्या तादृशविशेष्यतात्वावच्छिन्नसामान्याभावस्यैव निवेशनीयतया प्रमीयविशेष्यत्वभ्रमीयविशेष्यत्वान्यतरप्रतियोगिकस्वरूपेण तादृशविशेष्यताया हेतुमति सत्त्वाद्धेतुद्वयसाध्यकेऽव्यभिचारिणि अतिव्याप्तिवारणाय प्रमीयविशेष्यतात्वावच्छिन्नप्रतियोगिकस्वरूपेण तदभावस्य निवेशनीयतया न वह्निमान् धूमादित्यादौ वह्न्यभावप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतायास्तादृशसम्बन्धेन कुत्राप्यसत्त्वेन तादृशाभावस्य हेतुमति सत्त्वेन बाधकाभावादव्याप्तेर्न्नलेपत्वादिति दिक् ।

गितावच्छेदकस्वरूपमेव प्रतियोगित्वमित्यदोषः। समवायेन वह्नेः साध्यत्वे धूमादावतिव्याप्तिप्रसङ्गात्, समवायावच्छिन्नवह्न्यभावस्य वह्नित्वरूपं यत्प्रतियोगित्वं समवायवत्संयोगस्यापि तदवच्छेदकसम्बन्धतया स्वावच्छेदकीभूततादृशसम्बन्धेन साधनवतः प्रतियोग्यनधिकरणत्वाभावात्। प्रतियोगितावच्छेदकीभूतयत्किञ्चित्सम्बन्धेन प्रतियोग्यनधिकरणत्वोक्त्या तद्वारणे तु संयोगेन वह्निसाध्यके धूमादावव्याप्तिः, समवायावच्छिन्नवह्न्यभावस्यैव समवायेन प्रतियोग्यधिकरणस्य वह्नित्वरूपं यत्प्रतियोगित्वं तस्यैव संयोगेनाऽप्यवच्छिन्नत्वादिति चेत्।

अत्र वदन्ति—प्रतियोगिस्वरूपं तदवच्छेदकस्वरूपं वा यत्प्रतियोगित्वं तदपि कस्यचिदभावस्य केनचिद्धर्मेण सम्बन्धेन वाऽवच्छिन्नं व्यवहारबलात्, नतु सर्वेण सम्बन्धेन धर्मेण वा, 'समवायावच्छिन्नवह्न्यभावप्रतियोगित्वं न संयोगावच्छिन्नमि'त्यादिव्यवहारात्. तथाच यदभावीययप्रतियोगित्वरूपतया तत्प्रतियोगितावच्छेदकीभूतजात्यन्तर्गतवह्नित्वावच्छिन्नाधिकरणत्वस्य हेतुमति सत्त्वात्प्रतियोग्यधिकरणाभावाऽप्रसिद्धेरिति(१)। अथवा प्रतियोगित्वादेः संसर्गत्वास्वीकारमतेऽसंभव उक्त इति।

[घ] न च तथापि विषयितया घटस्य साध्यत्वे घटज्ञानत्वादिहेतौ पटाद्यभावस्यैव प्रतियोगिव्यधिकरणत्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्कथमसंभव इति वाच्यम्। कालिकेन घटत्वविशिष्टाभावप्रतियोगित्वस्य पटादिसाधारणतया पटाद्यभावप्रतियोगित्वं यत्पटस्वरूपं तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन तत्र लक्षणाऽगमनात्। यद्वा विषयत्वादेः संसर्गत्वे मानाभावादिति।

न चेति। अस्याऽदोष इत्यनेनाऽन्वयः। अतिव्याप्तिप्रसङ्गादिति। अतिप्रसङ्गं योजयति समवायावच्छिन्नेति। [१]ननु वह्निमान् धूमादित्यादौ हेतुमन्निष्ठघटाद्यभावीयघटत्वरूपं यत्प्रतियोगित्वं तस्य प्रमेयवदभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वेन तदवच्छेदकीभूतप्रमेयावच्छिन्नाधिकरणत्वस्य हेतुमति सत्त्वेन सर्वत्राऽसंभवसंभवेऽतिव्याप्तिदानमनुचितमिति चेन्न। स्वतादात्म्यस्वावच्छेदकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टं यदवच्छेदकं तदवच्छिन्नानधिकरणत्वविवक्षणात्संभव इति। जन्यमात्रस्य कालोपाधित्वानुपगमे धूमवान् वह्नेरित्यत्र नातिव्याप्तिरिति ध्येयम्। धर्मेण वा—अवच्छिन्नमिति पूर्वेणाऽन्वयः। तथा चेति।

(१) ननु शुद्धसाध्यतावच्छेदककस्थले प्रतियोगितायां निरवच्छिन्नावच्छेदकताकत्वस्य निवेशितत्वात् प्रतियोगितायाः प्रतियोगिस्वरूपत्वे वह्निमान् धूमादित्यादौ हेतुमन्निष्ठघटाद्यभावीयघटादिनिष्ठं यत्प्रतियोगित्वं तस्यापि जातिमदभावीयप्रतियोगितावच्छेदकतावच्छेदकीभूतजातित्वावच्छिन्नावच्छेदकताकत्वस्य सत्त्वेन घटाद्यभावस्य लक्षणाघटकत्वादव्याप्तिरिति चेन्न।

निरवच्छिन्नावच्छेदकताकप्रतियोगिताकत्वपदेन साध्यतावच्छेदकनिष्ठा किंचिद्धर्मावच्छिन्नावच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतानवच्छेदकं यादृशाभावीयप्रतियोगितात्वं तादृशाभावस्य विवक्षितत्वात्। उक्तस्थले घटाद्यभावप्रतियोगितात्वस्य साध्यतावच्छेदकनिष्ठजातित्वावच्छिन्नावच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतानवच्छेदकत्वसत्त्वेन घटाद्यभावस्य लक्षणघटकत्वान्न काप्यनुपपत्तिरिति ध्येयम्।

यत्प्रतियोगितावच्छेदकसम्बन्धेन यदभावीययत्प्रतियोगितानिरूपितावच्छेदकीभूतधर्मावच्छिन्नासम्बन्धित्वं हेतुमतः तदभावीयतत्प्रतियोगितानिरूपितावच्छेदकताशून्यत्वं साध्यतावच्छेदके निवेश्यमित्यदोषः, यत्प्रतियोगितेत्यपहाय यादृशप्रतियोगितेत्यभिधानादेव तादृशार्थलाभात् । न च प्रतियोगितावच्छेदकरूपं यदि प्रतियोगित्वं तदा 'यदभावीययादृशप्रतियोगितावच्छेदसम्बन्धेन तदभावीयतादृशप्रतियोगित्वावच्छिन्नस्यानधिकरणत्वं हेतुमत' इत्येव सम्यक्, प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशो व्यर्थ इति वाच्यम् । वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः हेतुमन्मात्रस्यैव वह्निधूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणाः ।

---

यदभावीयप्रतियोगितात्वावच्छिन्नावच्छेद्यतानिरूपितावच्छेदकताश्रयसम्बन्धेनेत्यर्थः । तदभावीयतत्प्रतियोगितेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यादिः(१) । संयोगादिना पटत्वाद्यवच्छिन्नाभावप्रतियोगित्वस्य पटादिस्वरूपत्वेऽपि तदीयप्रतियोगितानिरूपितावच्छेदकत्वं पटत्वादेरेव न तु ज्ञेयत्वादेरतस्तदवच्छिन्नासम्बन्धित्वादेव, पटत्वाद्यवच्छिन्नप्रतियोगित्वस्य प्रतियोगिवैयधिकरण्यनिरूपकत्वसम्भवान्नासम्भवः । समवायावच्छिन्नवह्न्यभावप्रतियोगित्वस्य वह्नित्वादिस्वरूपत्वेऽपि तदीयप्रतियोगितावच्छेदकसम्बन्धः समवाय एव न तु संयोगादिः, अतः समवायेन वह्नेः साध्यत्वे संयोगेन धूमादिहेतौ नातिव्याप्तिरिति संक्षेपः । व्यर्थ इति । शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वादिति भावः । प्रतियोगित्वावच्छिन्नाधिकरणत्वादिति । तथा च प्रतियोगित्वस्योभयत्वस्वरूपत्वेऽपि उभयत्वत्वेनैव तदवच्छिन्नाधिकरणत्वमयोगोलकादौ नाभ्युपेयते 'वह्निधूमोभयवदयोगोलकमि'त्यप्रत्ययात्, प्रतियोगितात्वेन तदवच्छिन्नाधिकरणत्वमभ्युपेयते प्रतियोगितात्वेन तादृशोभयत्वस्याऽव्यासज्यवृत्तितया 'वह्निधूमोभयाभावप्रतियोगिमदयोगोलकमि'ति प्रत्ययादिति भावः । प्रतियोगितावच्छेदकीभूतोभयत्वेन तादृशोभयत्वस्य व्यासज्यवृत्तितया तदवच्छिन्नसम्बन्धित्वं न प्रत्येकाधिकरणस्येति न प्रकृतेऽतिव्याप्तिरिति समुदितभावार्थः ।

हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वं हेत्वधिकरणवृत्त्यभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं च विशिनष्टि दीधितौ—अत्र चेत्यादिना । सामानाधिकरण्यं च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वम् । तत्र हेतुनिष्ठा वृत्तिता यादृशसम्बन्धावच्छिन्ना तेन सम्बन्धेन हेत्वधिकरणं बोध्यम्, एवं सामा-

---

(१) तेन समवायेन वन्ह्यभावीयवह्नित्वादिस्वरूपं यत्प्रतियोगित्वं तदवच्छेदकीभूतसमवायसम्बन्धेन तदभावीयप्रतियोगितानिरूपितावच्छेदकीभूतवन्हित्वावच्छिन्नासम्बन्धि पर्वतादि तदभावीयतत्प्रतियोगितावच्छेदकत्वस्य वन्हित्वे सत्वेऽपि तदीयतत्प्रतियोगिता न साध्यतावच्छेदकसम्बन्धावच्छिन्ना, यदीयप्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्ना तदीयतत्प्रतियोगितावच्छेदकसम्बन्धेन तदीयतत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नासम्बन्धित्वस्य हेतुमतोऽभावाव संयोगेन वन्ह्यभावादिकमादाय न दोषः, परन्तु संयोगेन घटाद्यभाव एव तादृशः तदीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य वन्हित्वादौ सत्त्वान्न कुत्रापि दोषः ।

अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टस्तेन सम्बं-

---

ग्राह्यसामानाधिकरण्य इति । परामर्शविषयसामानाधिकरण्य इत्यर्थः । 'सम्ब न्धविशेषेणैव साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिः, तत्प्रतिब- न्धकतयैव विरोधस्य हेत्वाभासत्वमि'ति मतेनेदम् । यदि च 'येन केनाऽपि सम्बन्धेन साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिः, स्वव्यापक- साध्यसम्बन्धितामात्रं वा व्याप्तिः, व्यापकत्वदले साध्यसाधनयोः सम्बन्ध- विशेषप्रवेशादेवातिप्रसङ्गभङ्गादि'ति विभाव्यते, तदा परामर्शेन साधनस्या- नुमित्या च साध्यस्य ग्राह्यं यत् पक्षतावच्छेदकेन सार्द्धं सामानाधिक- रण्यं तत्र प्रविष्टो यादृशः सम्बन्ध इत्यर्थो बोध्यः ।

धूमवान् वह्नेरित्यादौ महानसीयसंयोगेन सद्धेतौ संयोगमात्रेण हेतु- मत्तामादायाऽव्याप्तिः, एवं द्रव्यत्वसाध्यके घटानुयोगिकसमवायेन सत्त्वा-

---

नाधिकरण्यघटकसाध्यनिष्ठा निरूपकता यादृशसम्बन्धावच्छिन्ना तादृशसम्बन्धावच्छिन्ना प्रति- योगिता बोध्येति समुदितार्थः । सम्बन्धविशेषेणैव—साध्यतावच्छेदकहेतुतावच्छेदकस- म्बन्धाभ्यामेवेत्यर्थः । सामानाधिकरण्यज्ञानादनुमितिरिति । यत इत्यादिः । तत्प्रतिबन्धकतयैवेति । सम्बन्धविशेषघटितविरोधज्ञानस्य "साध्यासामानाधिकरणो हेतुरित्याकारकस्य" सम्बन्धविशेषघटितसामानाधिकरण्यज्ञानं प्रत्येव विरोधितया साध्यताव- च्छेदकसम्बन्धसाधनतावच्छेदकसम्बन्धघटितसामानाधिकरण्यमेव परामर्शविषय इति । एवकारेण साक्षादनुमितिप्रतिबन्धकत्वव्यवच्छेदः । विरोधस्य—हेतुनिष्ठसाध्यासामानाधिक- रण्यस्य । हेत्वाभासत्वमिति । तच्चानुमितेस्तत्कारणीभूतज्ञानस्य वा यद्विषयकं ज्ञानं विरोधि तत्त्वम् । इदम्—ग्राह्यसामानाधिकरण्येति ।

विरोधज्ञानस्य गोत्वाऽसमाधिकरणोऽश्वत्वम्, अश्वत्ववानयमिति निश्चयविशिष्टनिश्च- यत्वेन गोत्वव्यापकीभूताभावप्रतियोगि अश्वत्वमश्वत्ववानयमिति निश्चयविशिष्टनिश्चयत्वेन वा साक्षादनुमितिप्रतिबन्धकतयैव हेत्वाभासत्वोपपत्तिरिति वदतां मतमवलम्ब्याह यदि चेति । स्वव्यापकेति । स्वं—हेतुः । अत्र तु सामानाधिकरण्यस्यापि न प्रवेश इति हृदयम् । अतिप्रसङ्गभङ्गादिति । गोत्ववान् अश्वत्वादित्यादौ व्याप्तिलक्षणाऽतिप्रसङ्ग- भङ्गादित्यर्थः । हेतुतावच्छेदकसम्बन्धेन पक्षे हेतुमत्ताज्ञानात् साध्यतावच्छेदकसम्बन्धेन तत्र साध्यानुमितिः फलम्, एवं च तादृशपरामर्शेन साधनस्य पक्षतावच्छेदकेन सार्द्धं सामा- नाधिकरण्यमवगाह्यते, अनुमित्या च साध्यस्य पक्षतावच्छेदकेन सार्द्धं सामानाधिकरण्यमव- गाह्यते इति मतेनाऽऽह तदेति । नन्वत्र ग्राह्यसामानाधिकरण्ये महानसानुयोगिकसंयोग एव प्रविष्टो नतु तद्भिन्नाऽयोगोलकानुयोगिकसंयोगादिः, तेन हेत्वधिकरणं नाऽयोगोलकादिः, किन्तु महानसादिरेव तन्निष्ठतादृशाभावप्रतियोगितानवच्छेदकत्वस्य वह्नित्वे सत्त्वान्नाव्याप्ति- रत आह—एवं द्रव्यत्वसाध्यके इत्यादि । इदं च न्यूनवारकपर्याप्तिनिवेशफलम् । हेतु- तावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्तु समवायेन धूमाधिकरणधूमावयवमादाय वह्निमान्

न्धेन यो हेतुमान् तत्र वर्तमानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगितायाः अनवच्छेदकत्वं बोध्यम्, तेन धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगितायाः, धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगितायाः अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।

---

दिहेतौ समवायमात्रेण तद्वृत्तामप्रसिद्धायाऽप्रसिद्धितो 'यः सम्बन्ध' इत्यपहाय 'यादृशः सम्बन्ध' इत्युक्तम् ।

साध्यस्य चेति । ग्राह्यसामानाधिकरण्ये प्रविष्ट इत्यन्वयः । धूमाधिकरणे तत्तत्संयोगेन वह्न्यभावसत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरतो यादृश इत्युक्तम् । तेन सम्बन्धेन यो हेतुमान् इत्यस्य फलमाह धूमसमवायीति । प्रतियोगितायाः इति । अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिरित्यन्वयः । साध्यस्य चेत्यादेः फलमाह धूमसंयोगीत्यादि ।

ननु तादात्म्येन गवादेः साध्यत्वे सास्नादावव्याप्तिस्तत्र साधनवन्निष्ठान्योन्याभावप्रतियोगितायाः साध्यतावच्छेदकतादात्म्यसम्बन्धावच्छिन्नत्वे मानाभावस्य स्वयमेव बौद्धाधिकारटिप्पण्यामुक्तत्वात्, एवं धनी चैत्रत्वादित्यादौ स्वत्वनियामकस्वामित्वादिसम्बन्धेन धनादेः साध्यतायाम-

---

धूमादित्यादावव्याप्तिवारणाय । एवं द्रव्यत्वसाध्यकसमवायेन सत्त्वादिहेतौ घटानुयोगिकसमवायेन सत्ताधिकरणे साध्याभावविरहादतिव्याप्तिवारणायेतरवारकपर्याप्तिर्निवेश्या । तथा च हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यन्निरूपकत्वं तन्निरूपिताधिकरणत्वेत्यादि । रूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

दीधितौ यादृशः सम्बन्धः इति । साध्यतावच्छेदकसम्बन्ध इत्यर्थः । इतरवारकपर्याप्तिनिवेशायाह धूमाधिकरणे तत्तत्संयोगेनेति । एवं महानसीयसंयोगेन वह्नेः साध्यतायां धूमादिहेतौ धूमाधिकरणे संयोगेन वह्न्यभावविरहेणाभावान्तरमादायाऽतिव्याप्तिवारणाय न्यूनवारकपर्याप्तिर्निवेश्या, तथाच साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगिता तादृशप्रतियोगिताकाभाव इत्यर्थः । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

सास्नादाविति । सास्ना च गोरवयवविशेषः, तस्य समवेतत्वसम्बन्धेन हेतुतायामित्यर्थः । मानाभावस्येति । अत्यन्ताभावप्रतियोगितायां सम्बन्धावच्छिन्नत्वसाधकस्य प्रतिबध्यप्रतिबन्धकभावाद्यनुपपत्त्यादेर्भेदस्थलेऽवतारासम्भवात्, सम्बन्धस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमेन तादात्म्यस्य सम्बन्धत्वाभावाच्च, घटो द्रव्यमिति शाब्दप्रतीत्यनुरोधेन प्रकारतायास्तादात्म्यसम्बन्धावच्छिन्नत्वेऽपि प्रतियोगितायां तदभ्युपगमोऽप्रामाणिक

यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं हेतुमतो वक्तव्यम्, तथाच सम्बन्धभेदेन प्रतियोगिता न विशेषणीया।

ऽपि तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरत आह यद्वेति। यत्तु प्रतियोगितावच्छेदकसम्बन्धेन तद्वैयधिकरण्यं प्रवेश्य पुनः प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धेनावच्छिन्नत्वविवक्षायां गौरवमतो 'यद्वे'त्यादिकल्प इति। तन्न। तत्र स्वरूपाद्सम्बन्धान्तरावच्छिन्नतत्तदनन्ताभावप्रतियोगितावच्छेदकभेदकूटघटितत्वेन 'यद्वे'त्यादिकल्पस्यैव गुरुतरत्वादित्याहुः। सम्बन्धभेदेन—साध्यतावच्छेदकसम्बन्धभेदेन।

न चोक्तमतद्वय एव पर्वताद्यनुयोगिकसंयोगादिना वह्न्यादेः साध्यतायाम् तत्तद्धूमेऽव्याप्तिः, तादृशप्रतियोगितावच्छेदकसम्बन्धेन प्रतियो-

एवेति भावः। उक्तत्वादिति। अन्योन्याभावत्वमखण्डोपाधिरेव यथा ध्वंसत्वादिकम्, न तु तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमित्याद्युक्तत्वादिति भावः। ननु तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभाव इति प्रतीतिबलादेव तत्सम्बन्धावच्छिन्नत्वं प्रतियोगितायां स्वीकार्यम्, तदतिरिक्तवृत्त्यनियामकसम्बन्धावच्छिन्नत्वं तु नेत्यत आह स्वामिति। स्वामित्वसम्बन्धस्य प्रतियोगितावच्छेदकत्वे मानाभावादिति शेषः। दीधितौ प्रतियोग्यसम्बन्धित्वमिति। तेन तादात्म्येन साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्वस्याऽप्रसिद्धावपि न क्षतिः।

प्रतियोगितावच्छेदकभेदकूटघटितत्वेनेति। [१]ननु प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्यैव निवेशे प्रतियोगितायां नानासम्बन्धावच्छिन्नत्वस्य लक्षणे सत्त्वेऽपि भेदप्रतियोगितावच्छेदककोटौ प्रतियोगितावच्छेदकत्वादेरुपलक्षण(१)तयैव निवेशेन 'यत्तु'मते गौरवस्याभावेन गौरवाभिधानमसङ्गतमिति चेन्न। 'यत्तु'मते वृत्त्यनियामकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां स्वीकृत्य प्रकारान्तरेणाऽवतरणं दत्तम्, अन्यथा जगदीशोक्तावतरणस्यैव सम्यक्त्वात्, तथाच विषयितासम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताककंबुग्रीवादिमत्त्वावच्छिन्नाभावस्यापि लक्षणघटकत्वेन तत्प्रतियोगितावच्छेदकभेदस्यापि कूटान्तर्गततया तत्प्रयुक्तं 'यद्वा'कल्पे गौरवम्। प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे च विषयितासम्बन्धावच्छिन्नकंबुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितावच्छेदकभेदस्याऽप्रवेशेनाऽल्पतरकूटस्यैव प्रवेशेन लाघवमिति सर्वं समञ्जसम्।

[२]नन्वेवमपि प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावस्यैव लक्षणे निवेश्यतया कूटस्याऽप्रवेशेन 'यत्तु'मते एव लाघवमिति चेन्न।

प्रतियोगिवैयधिकरण्यघटितकल्पे स्वत्वघटितत्वेन भेदकूटस्यैव व्यभिचारिण्यतिव्याप्तिवारणायाऽवश्यं निवेशनीयतया तद्ग्रन्थसङ्गतेः(२)।

(१) तथाच प्रमेयधूमहेतुकस्थले गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वपक्षे नाव्याप्तिः।

(२) [क]ननु हेत्वधिकरणवृत्तिप्रतियोगितावच्छेदकत्वाभाववत्साध्यतावच्छेदकमिति प्रतियोगिव्यधि

एवंस्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयम् , न त्वधि-गिनो यदधिकरणम् तदन्यत्वस्य, साध्यतावच्छेदकसम्बन्धेन यत् प्रतियो-गिसम्बन्धि तदन्यत्वस्य च हेतुमत्यसिद्धेरिति वाच्यम् । तादृशप्रतियो-गितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषणता विशेषेणसा-ध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषेणताविशेषेणवा तादृशप्रतियोग्यधिकरणत्वसामान्याभावस्योक्तत्वात् , अन्यथा कालिकादि सम्बन्धेन सर्वस्यैव हेतुमतः प्रतियोग्यधिकरणतावत्त्वात् प्रतियोग्यन-धिरणहेत्वधिकरणाऽप्रसिद्धेः ।

ननु सम्बन्धविशेषेण साध्यसाधनयोः सामानाधिकरण्यप्रवेशे तादा-त्म्येन हेतुसाध्यभावेऽव्याप्तिस्तादृशसम्बन्धेन हेतुसाध्ययोरधिकरणाऽप्र-सिद्धेरत आह एवं स्थिते इति । सम्बन्धविशेषस्यात्र निवेशे स्थित इत्य-र्थः । सामानाधिकरण्यादावित्यादिपदेन हेतुसामानाधिकरण्यप्रविष्टहेत्व-

तदन्यत्वस्येति । तादृशप्रतियोगितावच्छेदकसम्बन्धेन यत्प्रतियोगिनोऽधिकरणप्रसिद्धिः तत्प्रतियोगि पर्वतादिसंयोगि घटाद्येव तदनधिकरणत्वस्य हेतुमत्यसत्त्वात् , तद्भिन्नप्रतियोगि-नश्च तेन सम्बन्धेनाऽधिकरणाऽप्रसिद्धेः । अन्यथा—तादृशाधिकरणत्वसामान्याभावप्रतियोगि-तायां सम्बन्धविशेषावच्छिन्नत्वाप्रवेशे । वृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावं व्यवस्थाप-यितुमुपक्रमते नन्विति । सम्बन्धविशेषेण—साध्यतावच्छेदकसम्बन्धेन साधनता-वच्छेदकसम्बन्धेन चेत्यर्थः ।

केचित्तु ननु प्रतियोगिवैयधिकरण्ये सम्बन्धित्वं प्रवेश्य तादात्म्येन व्यापकतानिर्वाहेऽपि तादृशव्यापकताघटितव्याप्तिर्न निर्वहति तादृशसाध्यतावच्छेदकसम्बन्धेन साध्याधिकरणाऽप्रसि-द्ध्या तद्घटितसाध्यसामानाधिकरण्याप्रसिद्धेरित्यत आह दीधितौ—एवं स्थिते इति । प्रतियोगि

---

करणत्वघटितलक्षणस्यानुगमं कृत्वा सामान्याभावनिवेशः सम्भवति, हेत्वाधिकरणवृत्तित्वं च प्रतियोगिताया स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतावत्त्वसम्बन्धावच्छिन्नस्व-निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । एवं च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वकल्पे सम्ब-न्धस्य द्विधा प्रवेशे गौरवमिति चेन्न ।

एतादृशपरम्परायाः संसर्गत्वास्वीकारे कूटनिवेशस्यावश्यकतया 'यत्तु'मतखण्डनसङ्गतिसम्भवात् ।

[ख]नन्वेवं प्रकारमुद्रया निवेशोऽस्तु, तथाहि—हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परयाऽ-वच्छेदकतावत्प्रतियोगितावच्छेदकत्वाभाववत्साध्यतावच्छेदकमिति विवक्षितम् । भेदश्च स्वप्रतियोगितावच्छे-दकावच्छिन्ननिरूपकतानिरूपिताधिकरणतानिष्ठावच्छेदकताकप्रतियोगिताकः इतरवारकन्यूनवारकपर्याप्तिस-हितो निवेश्य इति 'यत्तुमतस्यैव' सम्यक्त्वे तत्खण्डनमनुचितमिति चेन्न ।

अव्याप्यवृत्तिएकत्वप्रतियोगिकपर्याप्त्यनङ्गीकर्तुर्जगदीशस्य मते तथानिवेशासम्भवात्कूटनिवेशस्यो-चितत्वादिति ध्येयम् । अथवा तद्रूपवान् तद्रसादित्यादौ तद्घटवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परया-वच्छेदकतावत्प्रतियोगितावच्छेदकत्वापेक्षया हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेद-कतावत्प्रतियोगितावत्प्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्धेर्निवेशाऽसम्भवात्कूट-निवेशस्यावश्यकत्वादिति दिक् ।

करणत्वम्, तथाच धर्मिणोऽपि व्याप्यत्वं व्यापकत्वञ्च निर्वहति। तथाहि-तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धित्वम्। एवं धर्मिणो धर्मव्याप्यत्वव्यापकत्वे बोध्ये।

---

धिकरणत्वस्य परिग्रहः। प्रयोजनमाह तथाचेति। धर्मिणोऽपीति। तादात्म्ये न व्याप्यत्वं व्यापकत्वं च निर्वहति इत्यर्थः, अन्यथा तादात्म्येन हेतोः साध्यस्य चाधिकरणाऽप्रसिद्ध्या न तन्निर्वाह इति भावः। योऽन्योन्याभाव इति। योऽभाव इति वक्तुमुचितमन्योन्याभावत्वनिवेशे वैयर्थ्यादिति ध्येयम्। तदनवच्छेदकवह्निमत्त्वेति। वह्निमत्त्वञ्च न वह्न्यधिकरणत्वं, तच्चाधिकरणव्यक्तीनां भेदेऽप्यभिन्नमित्याशयेनेदम्। अत्र साध्यसाधनयोरिव तदीयसम्बन्धयोरपि भेदेन व्याप्तेर्भेदात्तादात्म्येन हेतुसाध्यकस्थले हेतुमन्निष्ठाभावाप्रतियोगिसाध्यतादात्म्यमेव व्याप्तिर्वक्तुमुचिता लाघवादित्यपि वदन्ति। एवमिति। सामानाधिकरण्यादौ सम्बन्धित्वनिवेशे कृते इत्यर्थः। धर्मिण इति। वस्तुन इत्यर्थः। तथाच गौः सास्नावत्त्वाद्वह्निमान् धूमवत इत्यादौ तादात्म्यसम्बन्धेन व्यापकता व्याप्यताऽपि सङ्गच्छत इति भावः।

---

वैयधिकरण्यशरीरे सम्बन्धित्वनिवेशे स्थिते सतीत्यर्थः। सम्बन्धित्वं निवेशनीयमिति। तथाच साध्यसामानाधिकरण्यं साध्यसम्बन्धिसम्बन्धित्वम्, अभावस्य हेतुसामानाधिकरण्यमपि हेतुसम्बन्धिवृत्तित्वम्(१) तदेवादिपदेन ग्राह्यमिति प्राहुः। तथा चेति। धर्मिणो धूमवदादेः, व्याप्यत्वं-वह्निमदादिरूपधर्मिनिरूपितव्याप्यत्वम्। धर्मिणो-वह्निमदादेः-व्यापकत्वं-धूमवदादिधर्मिनिरूपितव्यापकत्वमित्यर्थः। तदेव दर्शयति तथाहीत्यादिना। योऽभाव इति वक्तमुचितम् इति। तथाच वस्तुगतिमनुरुध्य तथोक्तम्, तस्यैव तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वात्, न तु तत्त्वेन निवेशे इत्याशयः। ध्येयमिति। चिन्तावीजन्तु अन्योन्याभावत्वस्याऽनुयोगिताविशेषरूपत्वेन वैयर्थ्यम्। ननु वह्निमत्त्वं यदि वह्निः स च प्रत्येकं धूमवत्सम्बन्धिनिष्ठान्योन्याभावप्रतियोगितावच्छेदक एवेत्यत आह— वन्ह्यधिकरणत्वमिति। तदपि स्वरूपसम्बन्धविशेषश्चेत्तदाऽधिकरणभेदाद्भिन्नमेवेति तद्दोषतादवस्थ्यमत आह-अधिकरणव्यक्तीनां भेदेपीति। तथाचाऽधिकरणत्वमतिरिक्तमेवाऽधिकरणभेदेप्यभिन्नमिति भावः। केचित्तु परम्परासम्बन्धेन वह्नित्वस्यैव वह्निमत्त्वात्, तदनवच्छेदकेत्यस्य तदवच्छेदकतानवच्छेदकवह्नित्वावच्छिन्नेत्यर्थकत्वाद्वेत्याहुः। वदन्तीत्यस्वरसः,

---

(१) वृत्तित्वमपि सम्बन्धित्वं ग्राह्यम्, अन्यथा वृत्त्यनियामकव्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभेदेऽन्यनाभावे साध्ये वृत्त्यत्वाद्यावतिव्याप्त्यापत्तेरिति भावः।

अत एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं संगच्छते। यथाच यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टत्वज्ञाने यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयोर्विशिष्टानुमितिः, तेन न धूमावयवे संयोगेन, न वा समवायेन पर्वते वह्निधीः, तथैवावगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिद्धयति, कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन, संयोगेन वा वह्निविरहाणि स्वा-

---

ननु तादात्म्येन धर्मिणो धर्मव्याप्यतायामपसिद्धान्त इत्यत आह अत एवेति। धर्मिणो धर्मव्याप्यत्वादेवेत्यर्थः। तत्र तत्र—व्यतिरेक्यादिग्रन्थे। ननु समवायेन जलादौ पृथिवीत्वाभावव्याप्यपरतयैव तद्ग्रन्थसंगतिरित्याशङ्क्य,(१) तथासति पृथिव्यां जलादिभेदसाधनार्थं तदुपन्यासो न स्याद् व्यापकताघटकसम्बन्धावच्छिन्नव्यापकाभावेन व्याप्यताघटकसम्बन्धावच्छिन्नव्याप्याभावस्यैव सिद्धेरित्यन्वयिदृष्टान्तपूर्वकं परिहरति यथाचेति। पक्षविशिष्टेति। पक्षविषयकेत्यर्थः। प्राचां मते पक्षविशेष्यकज्ञानस्येव पक्षप्रकारकज्ञानस्यापि कारणत्वात्। धूमावयव इति। न वह्निधीरित्यन्वयः। कथमिति। नियम उपपद्यते इति परेणाऽन्वयः। महानसे संयोगेनेति। न निवर्त्तत इत्यन्वयः। न संयोगावच्छिन्नाभा

---

तद्वीजन्तु हेतुनिष्ठेत्युक्तौ द्रव्यं घटपटोभयस्मादित्यत्र तादात्म्येन हेतुतायां कुत्रापि हेतौ द्रव्यं नेतिभेदस्याऽसत्त्वादतिव्याप्तिः, हेतुमन्निष्ठेत्युक्तौ हेतुमत एवाऽप्रसिद्धतया नातिव्याप्तिरिति विभावनीयम्। धूमवह्निमतोर्व्याप्यव्यापकभावमुक्त्वा धर्मिणो धूमवदादेर्वह्न्यादिरूपधर्मव्याप्यत्वं, धर्मिणो वह्निमदादेर्धूमादिरूपधर्मव्यापकत्वं चाह दीधितौ—एवमिति। आशङ्क्येति। अतस्तद्ग्रन्थसम्परत्यर्थं धर्मिणो धर्मव्याप्यत्वोपष्टम्भासङ्गतिरित्याशङ्कां परिहरतीति परेणान्वयः। तथासति—तद्ग्रन्थस्य तादृशव्याप्यपरत्वे सति। ननु तद्ग्रन्थस्य जलादीनां समवायेन पृथिवीत्वाभावव्याप्यत्वपरत्वे कथं पृथिवीत्वाभावाभावेन जलादिभेदो न सिध्यतीत्यत आह व्यापकाभावेनेत्यादि। व्याप्याभावस्यैव सिद्धेरितीति। इति नियमात्परिहरतीत्यर्थः। अन्वयिदृष्टान्तपूर्वकमिति। अन्वयिनि व्याप्यताघटकसम्बन्धेन व्याप्यताज्ञानाद् व्यापकताघटकसम्बन्धेनैव व्यापकः सिध्यतीति नियमं दृष्टान्तविधया दर्शयन् व्यतिरेकिणि प्रकृतनियमं दर्शयित्वा तादृशाशङ्कां दूरीकरोतीति समुदिततात्पर्यार्थः। न वह्निधीरित्यन्वय इति। एतेनाऽन्वयिनि तादृशनियमबीजं दर्शितम्। व्यतिरेकिणि तादृशनियमे साधकमप्याह—कथमन्यथेत्यादि। नियम उपपद्यत इति। तथाच तादृशनियमान्यथानुपपत्तिरेव साधिकेति भावः।

---

(१) आशङ्कामित्येव पाठः प्राचीनलिखितपुस्तके।

वयवे धूमः समवायेन न निर्वर्त्तते, निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते, तथाच तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहाद्व्यापकनिवृत्त्या तादात्म्येनैव तेषामभावः सिद्ध्यति, स एव चाऽन्योन्याभावः। इत्थमेव च तादात्म्याद् वृक्षशिंशपयोर्व्याप्तिनिश्चय इति संगच्छते।

---

वोऽनुमितौ भासते इति तदर्थः। निवर्त्तते चेति। धूम इति पूर्वेणाऽन्वयः। तादात्म्येनैवेति। समवायेन व्याप्यतायान्तु समवायेन जलात्यन्ताभाव एव सिद्ध्येदिति जलभेदसाधनार्थं तद्ग्रन्थावतारो न स्यादिति भावः। नन्वेतावतापि तादात्म्यसम्बन्धेन जलाभावः सिद्धो न तु जलान्योन्याभाव इति तद्दोषतादवस्थ्यमत आह स एव चेति। धर्मिणो धर्मव्याप्यत्वे प्राचां संवादमुपन्यस्य धर्मिणो धर्मव्यापकत्वे तमाह इत्थमेव चेति।

धर्मिणो धर्मव्यापकत्वे युक्तिमप्याह—अत एवेति। धर्मिणो धर्मव्यापकत्वादेवेत्यर्थः। ननु इयं गौरित्यनुमितिर्गवेतराऽवृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात्समवायेन निरवच्छिन्नगोत्वसाध्यकैव भविष्यति साध्यवदन्यावृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधाद् धर्मिणो धर्मव्यापकत्वस्वीकारोऽनुचित इत्यत उक्तम्—गोत्वत्वेति। गोत्वत्वं-गवेतरावृत्तित्वम्, तथाच गवेतरावृत्तित्वरूपाया गोत्वव्याप्तेरज्ञानदशायामुत्पन्नाया 'इयं गौरि'त्यनुमितेर्गोत्वविधेयकत्वाऽसंभवाद् गोविधेयकत्वमेवेति तदनुरोधादवश्यं धर्मिणो धर्मव्यापकत्वं वाच्यमित्याशयः।

---

गवेतरावृत्तित्वमिति। अत्र गवेतरावृत्तित्वमात्रस्य गोत्वत्वशब्दार्थत्वे उदक्षरत्वापत्तिरत आह—तथाचेति। साध्यवदन्यावृत्तित्वरूपव्याप्तेरग्रहदशायामित्यर्थः।

केचित्तु गोत्वत्वरूपसाध्यतावच्छेदकानुपस्थित्या गोत्वसाध्यकानुमित्यौपयिकव्याप्तेर्दुर्ग्रहतया गोत्वसाध्यकानुमित्यसम्भवेना'ऽयं गौरि'त्याकारकानुमितेरपलापप्रसक्त्या गोसाध्यत्वमावश्यकम्। ननु गोः साध्यत्वेऽपि गोत्वत्वं धर्मितावच्छेदकीकृत्यैव व्यापकत्वमनुमितिहेतुर्वाच्यः, अन्यथा व्यभिचारस्य हेत्वाभासत्वानुपपत्तेः, तथाच गोसाध्यकानुमितिरपि गोत्वत्वाद्यनुपस्थितिदशायां न सम्भवति धर्मितावच्छेदकप्रकारकज्ञानविरहेण व्यापकतावच्छेदकत्वज्ञानविरहादिति चेन्न। वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायेणेदमभिहितम्। तत्र स्वरूपतःसाध्यतावच्छेदकप्रकारकोभयाभावावगाहिज्ञानस्य हेतुतया गोत्वत्वज्ञानानपेक्षणादिति प्राहुः। गोत्वविधेयकत्वाऽसम्भवात्—स्वरूपतो गोत्वविधेयकत्वाऽसम्भवात्, व्यापकसामानाधिकरण्यज्ञानं यद्धर्मिणि व्यापकतावच्छेदकत्वमवगाहते तद्धर्मप्रकारेण साध्यानुमितौ कारणम्, न तु स्वरूपत साध्यानुमिताविति भावः।

ननु (तादात्म्येन) गोः साध्यत्वेऽपि गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकव्याप्तिधियोऽनुमितिहेतुत्वात्तत्र च धर्मितावच्छेदकविधयैव गोत्वत्वग्रहस्याऽपेक्षितत्वात् तदग्रहे गोविधेयकानुमितिरप्यनुपपन्नेत्यत आह—आदीति । आदिना पक्षधर्मतापरिग्रहः, तथाच गवेतरावृत्तित्वरूपव्याप्तेः सास्नाव्यापकतावच्छेदकताग्रहे धर्मितावच्छेदकतयोपस्थितिध्रौव्येऽपि तद्विशिष्टस्य यत्र न पक्षधर्मताधीस्तत्रैवा'यं गौरि'त्यनुमितेर्गोविधेयकत्वमावश्यकमिति तदनुरोधेनैव तादात्म्येन व्यापकत्वं वाच्यमित्याशयः ।

यत्तु—शुद्धगोत्वावच्छिन्नविधेयकानुमितिं प्रति गोत्वनिष्ठनिरवच्छिन्नविशेष्यताकमेव प्रतियोगितानवच्छेदकत्वज्ञानं हेतुः, अतो गोत्वत्वाग्रहेऽपि गोत्वे सास्नादिव्यापकतावच्छेदकत्वग्रहसम्भवाद् गोसाध्यकानुमितेर्नानु-

---

तदग्रहे—गोत्वत्वाग्रहे। धर्मितावच्छेदकतयोपस्थितिध्रौव्येऽपीति ।

[१] अथ सास्नाव्यापकतावच्छेदकताग्रहे धर्मितावच्छेदकविधया गवेतरावृत्तित्वरूपगोत्वत्वस्योपस्थितिध्रौव्येऽपि सास्नाहेतुकस्थले तस्य व्याप्तित्वं न सम्भवति, तथाहि गोत्वत्वघटकीभूतगवेतरावृत्तित्वं गवेतरानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावः, साध्यवदन्यावृत्तित्वघटकवृत्तित्वं च हेतुतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम् , सास्नायाः समवेतत्वसम्बन्धेनैव हेतुतया तत्सम्बन्धावच्छिन्नवृत्तित्वस्यैव तद्घटकत्वम् , एवं च सास्नाहेतुकस्थलीयगोत्वसाध्यकानुमितिजनकतावच्छेदकीभूतं गवेतरावृत्तित्वं गवेतरनिरूपितसमवेतत्वसम्बन्धावच्छिन्नवृत्तित्वाभाव इति तयोर्भेदसत्त्वात्तदुपस्थितिध्रौव्येऽपि साध्यवदन्यावृत्तित्वरूपव्याप्तेरलाभेन कथं गोत्वविधेयकानुमितिस्वीकारः, तथाच तदुपस्थितावपि गोविधेयकत्वमनुमितावश्यं स्वीकार्यम् , एवं च यदा तादृशव्याप्तिविशिष्टहेतोः पक्षवृत्तित्वज्ञानं नास्ति तदा गोविधेयकानुमितिरेव स्वीकर्त्तव्येत्युत्तरकरणमसङ्गतमिति चेन्न ।

[ क ] साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानस्य कारणतावच्छेदककुक्षौ हेतुतावच्छेदकसम्बन्धस्याऽप्रवेशेन सास्नाव्यापकतावच्छेदकत्वविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपव्याप्तिज्ञानकाले गोरूपहेतुकस्थलीयसाध्यवदन्यावृत्तित्वव्याप्तिज्ञानस्य सम्भवेन(१) गोत्वविधेयकानुमितेः स्वीकर्तुं शक्यतया गोविधेयकत्वे प्रमाणविरहादित्येन शङ्केति, तद्धेतुकस्थले च हेतुतावच्छेदकसम्बन्धः समवाय एव इति न काऽप्यनुपपत्तिः ।

[ ख ] परे तु गोपदं पृथिवीपरं, तथाच सास्नारूपहेतुः समवायसम्बन्धेन यत्र वर्त्तते तत्र पृथिवीत्वमप्यस्तीति न तत्र सम्बन्धभेद इति वदन्ति ।

[ग] अन्ये तु नैयायिकमते भ्रमात्मकपरामर्शात्सदनुमित्यङ्गीकारात्समवायेन सास्नाहेतुकगोत्वानुमित्यङ्गीकारे क्षत्यभावात्सास्नायाः समवायसम्बन्धेन हेतुत्वमिति न काऽप्यनुपपत्तिरित्याहुः ।

---

(१) साध्यवदन्यावृत्तित्वरूपव्याप्तिविशिष्टपरामर्शस्य तादृशव्याप्त्यवच्छिन्नप्रकारताशालिनिश्चयत्वेनैव कारणतया गवेतरासमवेतत्वोपस्थितौ तदवच्छिन्नगोरूपादेः परामर्शादनुमितेर्गोत्वविधेयकत्वसम्भवादिति तात्पर्यम् ।

अत एव गोत्वत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्यापकत्वग्रहे सास्नादिना तादात्म्येन गौः, तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिद्ध्यति ।

---

पपत्तिः, अभावलौकिकप्रत्यक्ष एवाऽधिकरणतावच्छेदकस्वरूपेण तदुपस्थितेर्हेतुत्वात्-इति मतम् । तत्तुच्छम्, व्यभिचारज्ञानाप्रतिबध्यतया तादृशव्यापकताग्रहस्यानुमित्यहेतुत्वात्,

अन्यथा तुल्ययुक्त्या शुद्धगोत्वविधेयकानुमितिं प्रति निरवच्छिन्नगोत्वविशेष्यताकस्य प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावाप्रतियोगित्वज्ञानस्य हेतुत्वा'दयं गौरि'त्यनुमितेर्गोत्वत्वाद्यनुपस्थितावपि गोत्वरूपधर्मसाध्यकत्वस्य दुर्वारत्वापत्तेरिति दिक् ।

प्राञ्चस्तु-गोतादात्म्यस्य सास्नाव्यापकत्वग्रहादेव गोस्तादात्म्येन सिद्धिसम्भवान्न तदनुरोधेन गोस्तादात्म्येन व्यापकत्वस्वीकारो युक्तः, सम्बन्धगतव्यापकत्वग्रहादेव सम्बन्धिनोऽनुमितेर्मिश्रादिसंमतत्वादत उक्तम्-गोत्वत्वाद्यग्रहदशायामिति । गोतादात्म्यत्वाद्यग्रहदशायामिति तदर्थ-इत्याहुः । तच्चिन्त्यम् । गोत्वत्वाद्यग्रहदशायामित्यस्य 'गोत्वत्वेनाऽग्रहो यस्मादि'ति व्युत्पत्त्या गोत्वबाधनिश्चयदशायामित्यर्थः, तथाच तदानीमयं गौरित्यनुमित्यर्थं धर्मिणो धर्मव्यापकत्वमवश्यं स्वीकार्यमित्यपि वदन्ति । गौरिति । सिद्ध्यतीति परेणान्वयः । गोर्व्यतिरेकादिति । तादात्म्येनेत्यनुषज्यते ।

---

तद्विशिष्टस्य—गवेतरावृत्तित्वविशिष्टस्येत्यर्थः, तथाच 'गवेतरावृत्तित्वविशिष्टसास्नादिमानयमि'ति यत्र न व्याप्तिविशिष्टपक्षधर्मताधीस्तत्रैवेत्यर्थः । व्यभिचारज्ञानाप्रतिबध्यतयेति । व्यभिचारज्ञानमप्रतिबध्यं यस्य तस्य भावस्तया, व्यभिचारज्ञानाऽप्रतिबन्धकतयेत्यर्थः । अन्यथा-व्यभिचारज्ञानाप्रतिबध्यज्ञानस्याऽनुमितिहेतुत्वे, साक्षादनुमितिप्रतिबन्धकतयैव व्यभिचारस्य हेत्वाभासत्वादिति भावः । गोस्तादात्म्येन सिद्धिसम्भवादिति । असति प्रतिबन्धके इति शेषः ।

न च गोतादात्म्यस्य गोत्वरूपतया गोतादात्म्यत्वेन व्यापकताग्रहे गोत्वत्वग्रहस्यावश्यकत्वमेवेति वाच्यम् । तादात्म्यस्याऽतिरिक्तत्वाभ्युपगमात्, अन्यथा तादात्म्यसम्बन्धेन वह्न्यादीनां साध्यत्वे तत्तद्रूपादिहेतौ हेत्वधिकरणवृत्त्यभावप्रतियोगिनः साध्यतावच्छेदकतादात्म्यसम्बन्धेन सम्बन्धिनोऽप्रसिद्ध्याऽव्याप्त्यापत्तेः, तथाविधतादात्म्यस्य वह्नित्वादिरूपतया घटपटादेर्व्यधिकरणसम्बन्धत्वादिति । तच्चिन्त्यमिति । तादात्म्येन व्यापकत्वग्रहे संसर्गमर्यादया तादात्म्यस्वरूपेण तादात्म्यग्रहेण कथं गोतादात्म्यत्वाद्यग्रहसम्भव इति चिन्ताबीजम् । धर्मगतव्यापकत्वज्ञानाद्धर्मिणोऽनुमितिरिति सर्वानुमतत्वं चिन्ताबीजमित्यपरे । हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकं गोतादात्म्यत्वमित्याकारकधियो'ऽयं गौरि'त्यनुमितिहेतु तादृशज्ञानस्य 'गोतादात्म्यवानि'त्यनुमितावपि हेतुतया तादृशज्ञानानन्तरमनुमितेर्नियमतोऽ-

एवं च संयोगेन गगनादेरपि द्रव्यत्वाव्याप्यत्वम्, वृत्त्यनियामकसंयोगमात्रस्याऽभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि, तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात् ।

सिद्धिरपि तस्य तथैव, न तु वृत्तिनियामकसम्बन्धेन, तेनाऽसम्बन्धि-

---

एवं चेति । सामानाधिकरण्यादौ सम्बन्धित्वप्रवेशे चेत्यर्थः । संयोगत्वेन संयोगमात्रस्य प्रतियोगितावच्छेदकसम्बन्धत्वे वृत्त्यनियामकसंयोगस्यापि तत्त्वं सर्वसिद्धमतो मात्रपदम् । सम्बन्धरूपत्वे इति । अन्यथा तादृशप्रतियोगिताकाभावाऽप्रसिद्ध्या गगनादेः पृथिवीत्वव्यापकत्वं दुर्घटमेव स्यादिति भावः । तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि द्वितीयकल्पानुसारेण व्यापकत्वं सम्पादयति, साध्यतावच्छेदकसम्बन्धेनेति । तथाच सम्बन्धान्तरावच्छिन्नघटाद्यभावमादायैव लक्षणसमन्वय इति भावः । द्रव्यत्वस्य गगनाऽसंयुक्तविभ्वन्तरे तद्व्यभिचारित्वाद्धेत्वन्तरमाह–पृथिवीत्वादीति । व्यापकत्वमिति । गगनादेरिति पूर्वेणाऽन्वयः ।

ननूत्पत्तिकाले जन्यस्य प्रलयकाले नित्यस्य पृथिवीमात्रस्य गगनाभाववत्वात् कथं तस्य पृथिवीत्वव्यापकत्वमत आह–तदभाववतोऽपीति । गगनादेरभाववतोऽपीत्यर्थः । संयोगेन–वृत्त्यनियामकसंयोगेन, तत्सम्बन्धित्वात्–गगनादिसम्बन्धित्वात् ।

नन्वेवं निरुक्तव्याप्तिज्ञानात् घटो गगनवानित्यनुमितिः प्रमा स्यादत आह–सिद्धिरपीति । तथैव–वृत्त्यनियामकसंयोगेनैव, तथाच तादृशसम्बन्धेन यं गौः, अयं गोतादात्म्यवानिति द्विविधविषयताशालित्वापत्तिरिति चिन्ताबीजमित्यस्मद्गुरुचरणाः ।

सम्बन्धित्वप्रवेशे चेत्यर्थ इति । तथाच द्रव्यं गगनादित्यत्र गगनादेरधिकरणाऽप्रसिद्धावपि संयोगेन गगनसम्बन्धिवृत्तित्वस्याऽभावे, गगने च साध्यवत्सम्बन्धित्वस्य प्रसिद्ध्या यथोक्तव्याप्तिसत्त्वादिति भावः । तद्व्यभिचारित्वात्–गगनव्यभिचारित्वात् । विभुद्वयसंयोगानभ्युपगमाद् गगनाऽसंयुक्तद्रव्ये आत्मादौ द्रव्यत्वस्य व्यभिचारित्वादित्यर्थः । तस्य–गगनस्य । पृथिवीत्वव्यापकत्वम्–पृथिवीत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, तथाच तादृशगगनाद्यभावश्च न साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमन्निष्ठ इत्यभावान्तरमादाय लक्षणसत्त्वं निष्प्रत्यूहमिति भावः ।

दीधितौ तस्य–गगनस्य, तेन–वृत्तिनियामकसंयोगेन । असम्बन्धित्वादिति । तथाच तत्सम्बन्धेन गगनसम्बन्धिसम्बन्धत्वरूपसाध्यसामानाधिकरण्याप्रसिद्धेः । ननु तत्सम्बन्धघटितसामानाधिकरण्यस्य परामर्शाऽविषयत्वेऽपि वृत्त्यनियामकसंयोगघटितसाध्यसामानाधिकरण्यावगाहिपरामर्शाद् वृत्तिनियामकसंयोगसम्बन्धेन गगनानुमितौ बाधकाभाव

त्वात् अव्यापकत्वाच्च, व्यक्तीभविष्यति चैतदुपरिष्टात् ।

नन्वष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य विशेषणताविशेषणा-

---

गगनानुमितेः प्रमात्वमिष्टमेवेति भावः । तेनाऽसम्बन्धित्वादिति । येन सम्ब-न्धेन साध्यसामानाधिकरण्यं परामर्शे भासते तेनैव सम्बन्धेन साध्यानु-मितेः फलत्वादिति भावः । सामानाधिकरण्यधियो हेतुत्वस्य, तदंशे संब-न्धविशेषनिवेशस्य वाऽनङ्गीकारमतेऽप्याह—अव्यापकत्वाच्चेति । तेनेत्यनुष-ज्यते, तथाच यादृशसम्बन्धेन साध्यस्य हेतुव्यापकत्वं गृह्यते तेनैव संब-न्धेन साध्यसिद्धिः फलम्, अतो वृत्तिनियामकसम्बन्धेन साध्यस्य हेतु-व्यापकत्वासम्भवादेव न तेन साध्यस्य प्रमानुमितिरिति भावः । ननु वृत्तिनियामकसंयोगेनापि गगनस्य पृथिवीत्वादिव्यापकत्वं दुर्वारम्, ता-दृशसम्बन्धेन गगनसम्बन्धप्रसिद्ध्या गगनाभावस्य प्रतियोगिव्यधिकरण-त्वाभावात्, तादृशाभावान्तरप्रतियोगित्वस्य च गगनादावसत्त्वादत आह—व्यक्तीत्यादि । इदम्—वृत्तिनियामकसम्बन्धेन गगनादेरव्यापकत्वम्, तथाच निरुक्तप्रतियोगिप्रतियोगिकत्वेत्यादिना वक्ष्यमाणं प्रतियोग्यसामानाधिक-रण्यं वृत्तिनियामकसम्बन्धेन गगनाभावेऽपि स्थास्यतीति भावः ।

(नन्विति) । कालिकसम्बन्धेन गोत्वादौ साध्ये घटादिकालोपाधिमात्रवृ-त्तिघटत्वादिहेतौ नाव्याप्तिः, विभिन्नकालीनतत्तद्व्यक्तित्वावच्छिन्नाभावस्यैव घटादौ प्रतियोगिवैयधिकरण्यसम्भवादत उक्तम्(१) अष्टद्रव्यातिरिक्तेति। पृथि-व्यादिचतुर्द्रव्यातिरिक्तेति तु ज्यायः, गगनादेः कालत्वविरहादेव तद्व्युदा-सादिति ध्येयम् । कर्मात्मकखण्डकालस्यापि विभिन्नकालीनतत्तद्व्यक्तित्वा-वच्छिन्नाभावप्रतियोग्यनधिकरणत्वप्रसिद्ध्या तन्मात्रवृत्तिस्पन्दत्वादिहेतौ नाऽव्याप्तिरतश्चरमं द्रव्यपदम्(२) । तथाविधकालत्वादावप्युक्तदिशा ना-

---

इत्यत आह—येनेत्यादि ।

हेतुव्यापकत्वासम्भवादेवेति । वृत्त्यनियामकसंयोगेनैव गगनाभावस्य प्रतियो-गिसमानाधिकरणतया वृत्तिनियामकसंयोगेन प्रतियोगिव्यधिकरणाभावप्रतियोगिताया गगने सत्वेन तत्सम्बन्धस्य व्यापकतानाघटकत्वादिति भावः । वक्ष्यमाणमिति । साध्यतावच्छे-दकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चि-न्निष्ठव्यक्त्यनुयोगिकत्वसामान्योभयाभाव इत्यादिना वक्ष्यमाणमित्यर्थः ।

कालिकसम्बन्धेन घटादिसाध्यकमहाकालत्वहेतावप्रसिद्धिनिबन्धनामव्याप्तिमाशङ्कते दी-धितौ नन्वित्यादिना ।

---

(१) तथाच गोत्ववान् घटत्वादित्यत्र कालत्वस्य हेतुना न सम्भवति अष्टद्रव्यातिरिक्तद्रव्यात्मककाल-वृत्तित्वाभावात्, घटात्मककाले सत्त्वात् ।

(२) एवं गोत्ववान् स्पन्दत्वादित्यत्रापि, द्रव्यात्मककालमात्रवृत्तित्वाभावात् ।

ऽव्याप्यवृत्ति किमपि व्यापकं न स्यात् ।

स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्त्तमानस्याऽभावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेन सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य च कालेऽसम्भवात् ।

---

ऽव्याप्तिरतो मात्रपदम् । स्वरूपसम्बन्धेन हेतुतालाभाय धर्मपदम् , अन्यथा कालिकेन महाकालत्वाद्यधिकरणघटादौ प्रतियोगिव्यधिकरणाऽतीततत्त्व्यक्तित्वावच्छिन्नाभावप्रसिद्ध्या नाऽव्याप्तिरिति ध्येयम् । तादृशधर्मस्य महाकालत्वादेः समवायादिना व्यापकत्वं संयोगाद्यव्याप्यवृत्तेः सुघटमित्यत उक्तम्—विशेषणतेति । कालिकविशेषणतेत्यर्थः ; व्याप्यवृत्तिप्रमेयत्वादेः प्रतियोगिवैयधिकरण्याघटितमेव कालिकसम्बन्धावच्छिन्नव्यापकत्वं सम्भवतीत्यत उक्तम्—अव्याप्यवृत्तीति । तादृशं साध्यं घटादिकं द्रव्यत्वादिकं च, तद्वतोऽपि कालस्य तदनधिकरणदेशावच्छेदेन कालिकसम्बन्धावच्छिन्नतदभाववत्वात् , न ह्येवंविधो वाच्यत्वादिः, तदनधिकरणदेशाऽप्रसिद्ध्या तदवच्छेदेन कालिकसम्बन्धावच्छिन्नवाच्यत्वाभावस्य कालेऽसम्भवादिति भावः ।

न स्यादिति । तथाच कालो घटवान् महाकालत्वादित्यादौ व्याप्तिलक्षणाऽव्याप्तिरिति भावः । प्रथमविवक्षानुसारेण दोषं सङ्गमयति—स्वावच्छेदकेति । प्रतियोगितावच्छेदकसम्बन्धेनेत्यर्थः । काले-महाकाले । तत्सम्बन्धावच्छिन्नत्वस्य-साध्यतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नत्वस्य, असम्भवादिति परेणाऽन्वयः । द्वितीयविवक्षानुसारेणाह—तेन सम्बन्धेनेति । साध्यतावच्छेदकीभूतकालिकसम्बन्धेनेत्यर्थः ।

---

ध्येयमिति । तान्त्रिकैर्महाकालस्याऽष्टद्रव्यातिरिक्तपदेनैवाऽभिधानेन चतुर्द्रव्यातिरिक्तेत्यभिधानेऽन्यपरत्वशङ्कानिरासाय विशिष्याभिधानापेक्षा स्यात् , तथाभिधाने तु तैर्महाकालस्यैव तथाभिधानेनाऽन्यपरत्वशङ्काया असम्भवेन न विशिष्याभिधानापेक्षेति तथाऽभिधानमावश्यकमिति भावः ।

प्रथमविवक्षानुसारेणेति । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टानधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानिवेशकल्पाभिप्रायेणेत्यर्थः । दोषं—तादृशप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरूपं दोषम् । दीधितौ असम्भवादिति । कालिकसम्बन्धेन वृत्तिमन्मात्रस्यैव महाकाले वृत्तेः, अवृत्तिगगनादेश्च तेन सम्बन्धेन सम्बन्धिनोऽप्रसिद्ध्या कस्यापि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमद्वृत्तित्वासम्भवात् , समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य तथात्वेऽपि तत्प्रतियोगितायाः साध्यतावच्छेदकीभूतकालिकसम्बन्धानवच्छेद्यत्वादिति भावः । द्वितीयविवक्षानुसारेणेति । साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्ब-

न्धिहेतुमद्वृत्त्यभावीयसम्बन्धावच्छिन्नत्वाविशेषितप्रतियोगितानिवेशकल्पाभिप्रायेणेत्यर्थः । गगनाद्यभावप्रतियोगिनस्तेन सम्बन्धेन सम्बन्धिरूपप्रतियोग्यप्रसिद्ध्या तेन सम्बन्धित्वासिद्धिं स्फुटीकर्तुं प्रतियोग्यसम्बन्धित्वस्येत्यनभिधाय यत्प्रतियोगिसम्बन्धि तदन्यत्वस्येत्यसमासेनाऽभिधानम् ।

[ १ ] अथ 'नत्यादि'त्यक्षरानुरोधेनाऽऽपत्तिः प्रदर्शिता, सा च न सम्भवति, तथाहि अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रधर्मनिरूपितव्यापकत्वाभावस्याऽऽव्याप्यवृत्तिधर्मे आपत्तिर्न सम्भवति, तादृशधर्मनिरूपितव्यापकत्वस्यैवाऽप्रसिद्ध्या तदभावस्याऽऽपादयत्नाऽसम्भवात् ; 'प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहप्रयुक्तः, किं वा साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वासम्भवप्रयुक्तो व्यापकत्वासम्भव' इति जगदीशनोक्तत्वात् । न च तादृशमहाकालत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशधर्माभावस्याऽव्याप्यवृत्तितावच्छेदकघटत्वादावापत्तिर्दीयते, तादृशसम्बन्धस्य व्याप्यवृत्तिप्रमेयत्वादौ प्रसिद्ध्या घटत्वादावसत्त्वेन तादृशाभावस्य तत्र सत्त्वादिति वाच्यम् । इष्टत्वात् , तथाहि—तत्सम्बन्धावच्छिन्नप्रतियोगिताकतादृशधर्माभावस्य नापत्तिः सम्भवति, तादृशधर्मे तदभावस्य स्वतः सिद्धत्वात् । न चाऽष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्याऽन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याव्याप्यवृत्तितावच्छेदकधर्मे आपत्तिः, अन्यतरसम्बन्धश्च स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपः, तथाचाऽन्यतरसम्बन्धघटकप्रथमसम्बन्धः प्रमेयत्वादौ प्रसिद्धः, द्वितीयस्तु महाकालत्वरूपधर्मस्य व्यधिकरणसम्बन्धः, तादृशान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकतादृशधर्माभावस्याऽव्याप्यवृत्तितावच्छेदके सत्त्वेनाऽऽपत्तिः सम्भवत्येव, नह्यत्रापीष्टापत्तिः सम्भवति, प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वस्य वस्तुगत्या घटत्वादौ सत्त्वेन विशेषरूपेण निवेशाकरणेन व्यापकत्वासम्भवादिति तस्यैवाऽऽपत्तिर्दीयते, आपादकं च प्रतियोगिव्यधिकरणहेतुसामानाधिकरणाभावीयप्रतियोगितात्वव्यापकीभूताभावप्रतियोगितानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावत्सम्बन्धावच्छिन्नाऽव्याप्यवृत्तितावच्छेदकत्वमेव । किं वा हेत्वधिकरणवृत्तिभेदीयप्रतियोगितावच्छेदकीभूता याऽधिकरणता तन्निरूपितनिरूपकतानवच्छेदकसम्बन्धावच्छिन्नाऽव्याप्यवृत्तितावच्छेदकत्वमेव साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितमेकं, साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वं प्रतियोगिता च यथाकथंचित्सम्बन्धावच्छिन्नेति द्वितयिम्, तथाच कालो घटवानित्यत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहेण तादृशाभाव एव व्यापकः । द्वितीये कालिकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्याऽसत्त्वेनान्यतरसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्यैव सत्त्वेन तादृशनिरूपकतानवच्छेदकसम्बन्धः कालिक एव भविष्यतीति वाच्यम् । आपाद्यबुद्धिं प्रति आपाद्याभावनिश्चयस्य बाधमुद्रया कारणत्वेन तस्याऽसत्त्वेन तादृशापत्तेः कर्तुमशक्यत्वात् तादृशधर्माभावस्य तत्र सत्त्वेन तदभावस्यासत्त्वादिति चेत् ।

(क) अत्र ब्रूमः—अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिमहाकालत्वरूपधर्मलिङ्गकाऽव्या-

प्यवृत्तिघटादिविधेयकानुमितिः यदि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुमान्पक्ष इति निरूप्यनिरूपकभावापन्नविषयताशालिज्ञानजन्या न स्यात्तदाऽभ्रान्तपुरुषसमवेता न स्यादित्यापाद्यापादकभावस्यैव प्रकृते सम्भवात्, प्रकृते तथा व्याप्तेरप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयताशालिज्ञानसम्भवान्न कोऽपि दोष इति ।

(ख)(१)वस्तुतो ग्रन्थोऽयमनुमानपरः, तथाहि—अव्याप्यवृत्तिपदार्थः अष्टद्रव्यातिरिक्तद्-

---

(१) [ख] (२) केचित्तु स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकमहाकालत्वरूपतादृशधर्माभावः साध्यः, पक्षहेतू पूर्वोक्तावेव । न चान्यतरसम्बन्धस्य प्रवेशे प्रयोजनविरहः प्रतियोगिवैयधिकरण्यघटितसम्बन्धेनैव निर्वाहादिति वाच्यम् । स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धकथनेन व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिरपि न सम्भवतीति ध्वनितमित्यस्यैवाऽन्यतरसम्बन्धप्रवेशप्रयोजनस्य सत्त्वात् । न च तादृशधर्माभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगिताकस्याव्याप्यवृत्तितावच्छेदके सर्वदैव सत्त्वेन सिद्धसाधनमिति वाच्यम् । प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वस्य वस्तुगत्या घटत्वे सत्त्वेन विशेषरूपेण प्रतियोगिवैयधिकरण्यानिवेशाभावप्रयुक्तव्यापकतावच्छेदकत्वस्य तत्राऽसत्त्वस्य संशयो भवति, अत एव संशयस्थले न सिद्धसाधनमिति, अत एव च पर्वतो वह्निमानित्यत्र न सिद्धसाधनमिति । न च हेतुकुक्षौ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धावच्छिन्नाऽव्याप्यवृत्तितावच्छेदकत्वं हेतुरेवाऽस्तु व्यापकत्वप्रवेशो व्यर्थ इति वाच्यम् । 'प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावादि'ति जगदीशेनोक्तम्, तेन कस्याश्चिदपि प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वं नास्तीति ध्वनितम्. अस्माभिरपि तथैव निवेशनं कृतमिति नान्यत्प्रयोजनमित्याहुः ।

(ख) ( २ ) अन्ये तु अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य महाकालत्वव्यापकतावच्छेदकत्वाभावः साध्यते ।

ननु महाकालत्वाधिकरणवृत्तिप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वाभावः, उत महाकालवृत्त्यभावप्रतियोगितानवच्छेदकत्वाभावः साध्यते ? नाद्यः, प्रतियोगिवैयधिकरण्यस्याऽप्रसिद्ध्या साध्याप्रसिद्धेः, नान्त्यः, महाकालवृत्त्यभावप्रतियोगितानवच्छेदकत्वस्याऽसत्त्वेन तदभावस्य सर्वदैव सत्त्वेन सिद्धसाधनापत्तेः । न च स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकमहाकालत्वाभावः साध्यते महाकालत्वस्य तत्सम्बन्धस्याऽप्रसिद्धावपि तत्क्रियात्वादीनां तत्प्रसिद्धतया व्यधिकरणसम्बन्धेन तदभावसिद्धिरिति वाच्यम् । अव्याप्यवृत्तिपदवैयर्थ्यापत्तेः । निरुक्तसम्बन्धेन महाकालत्वाभावस्य व्याप्यवृत्तिवाच्यत्वादिसाधारणत्वात् ।

अत्रोच्यते । महाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वमहाकालत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकमहाकालत्वाभावः साध्यते महाकालत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्यैव वाच्यत्वे सत्त्वेन तदभावस्याऽसत्त्वात् । न च सम्बन्धधर्मिकोभयाभावघटितव्यापकत्वस्याऽनुसरणेऽपि निरुक्तसम्बन्धावच्छिन्नमहाकालत्वाभावानुमाने दुष्टत्वाभावादप्रयोजकमनुमानमिदमिति वाच्यम् । सम्बन्धधर्मिकोभयाभावघटितव्यापकत्वज्ञानादनुमितेरुत्पत्त्या प्रतियोगिवैयधिकरण्यघटितव्यापकत्वाभावसत्त्वेऽपि क्षत्यभावात् । हेत्वधिकरणवृत्त्यभावप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितात्वव्यापकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावीयप्रतियोगितानिरूपितावच्छेदकतावत्सम्बन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्वविशिष्टवृत्तितावच्छेदकत्वं हेतुः । हेत्वधिकरणवृत्त्यभावस्तु तत्प्रतियोगिताविशिष्टनिरूपकताकाधिकरणता नास्तीति प्रतीतिसिद्धः । अत्र तत्सम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वस्य वाच्यत्वादावपि सत्त्वेन हेतोर्व्यभिचरित्वापत्त्याऽव्याप्यवृत्तितावच्छेदकत्वनिवेशः । अव्याप्यवृत्तितावच्छेदकत्वनिवेशेनैव सामञ्जस्येऽन्यत्सर्वं हेतावप्रयोजकत्वशङ्कानिरासार्थम् । तत्सम्बन्धावच्छिन्नवृत्ति-

ननु महाकालान्यत्वविशिष्टघटाभाव एव महाकाले प्रतियोगिव्यधिकरणः सुलभः। न चात्र विशेषणताविशेषशब्देन महाकालनिरूपितविशेषणताया एव विवक्षितत्वात्तादृशसम्बन्धेन निरुक्तप्रतियोगिवैयधिकर-

---

ण्यात्मककालमात्रवृत्तिधर्मनिरूपितप्रतियोगिवैयधिकरण्यघटितव्यापकत्वप्रकारकज्ञानीयविशेष्यत्वाभाववान् साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाववृत्तितादृशधर्मकालीनाऽव्याप्यवृत्तिपदार्थत्वात्। विशेष्यत्वाभावश्च प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, प्रमात्वं सर्वांशे भ्रमभिन्नत्वम्। हेतुघटकवृत्तित्वं च धर्मे स्वाश्रयवृत्तिप्रतियोगितात्वव्यापकत्वसम्बन्धेन। प्रतियोगित्वे स्वाधिकरणवृत्तित्वं च स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। द्वितीयहेतुश्च प्रतियोगितात्वव्यापकतादृशधर्माधिकरणावृत्तित्वकालीनाऽव्याप्यवृत्तिपदार्थत्वम्, तादृशधर्माधिकरणाऽवृत्तित्वं च साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेति।

नन्विति। घटे महाकालान्यत्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन, तच्च स्वरूपेण महाकालान्यत्वाधिकरणे कालिकेन वृत्तित्वरूपम्, एवं च सामानाधिकरण्यघटकविशेषणविशेष्योभयसम्बन्धाभ्यां तदुभयवत्त्वस्य विशिष्टवत्त्वनियामकतया महाकाले महाकालान्यत्वविशिष्टघटवत्त्वाऽसम्भवात्, तथाचोक्तं 'प्रतियोगिव्यधिकरणः सुलभ(१)' इति। वैशिष्ट्यं च

---

तावच्छेदकत्वविशिष्टाव्याप्यवृत्तितावच्छेदकत्वस्य हेतुत्वे स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणव्याप्यतावच्छेदकमादाय हेतोर्व्यर्थविशेषणत्वापत्त्याऽव्याप्यवृत्तितावच्छेदकत्वविशिष्टतत्सम्बन्धावच्छिन्नव्याप्यवृत्तितावच्छेदकत्वानुसरणम्। ननु अव्याप्यवृत्तितावच्छेदकत्वविशिष्टतत्सम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वमादाय पुनरपि व्यर्थविशेषणत्वमिति चेन्न। अव्याप्यवृत्तितावच्छेदकत्वविशिष्टतत्सम्बन्धावच्छिन्नव्याप्यवृत्तितावच्छेदकत्वाधिकरणताया हेतुत्वेन दोषाभावात् निरुक्तकेवलतादृशसम्बन्धावच्छिन्नाधिकरणतायाश्च भिन्नत्वात् द्वितीयपक्षे हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावन्निरूपकतात्वव्याप्यकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावीयपरम्परावच्छेदकतावत्सम्बन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्वविशिष्टवृत्तितावच्छेदकत्वं हेतुः, हेत्वधिकरणवृत्त्यभावस्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वं नास्तीति प्रतीतिसिद्ध इत्याहुः।

[ख] (४) अपरे तु अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य महाकालत्वलिङ्गकानुमितीयकालिकसम्बन्धावच्छिन्नविधेयतावच्छेदकत्वाभावः साध्यते, महाकालत्वलिङ्गकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकपक्षविषयतानिरूपितहेतुविषयतानिरूपितवृत्तित्वविषयतानिरूपिताधिकरणविषयतानिरूपितसाध्यविषयतानिरूपितप्रमीयविषयत्वाभावो हेतुः, तथाचैतदनुमानस्याग्रे दुष्टत्वमिति वदन्ति।

(१) ननु महाकालान्यत्वविशिष्टघटाभावस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकत्वविरहेण कथमयमभावो लक्षणघटक इति चेन्न।

[क] 'तादृशसाध्यं घटादिकं द्रव्यत्वादिकं चे'ति लेखनस्वरसादादिपदग्राह्यद्रव्यत्वादिसाध्यके एव तादृशाभावधारणात्, घटसाध्यके चादिपदग्राह्यमहाकालान्यत्वविशिष्टघटाभावमादायैव लक्षणसमन्वयसम्भवात्।

[ख] केचित्तु महाकालान्यत्वविशिष्टाभावे तात्पर्यादिति वदन्ति।

[ग] वस्तुतस्तु साङ्कर्याद् घटत्वं यदि नाना तदा पार्थिवघटत्वसाध्यतावच्छेदकस्थले महाकालान्यत्वविशिष्टतैजसघटाभावः, तैजसघटसाध्यकस्थले च पार्थिवघटाभावो लक्षणघटक इत्यत्रैव ग्रन्थतात्पर्यादिति।

**ध्याऽप्रसिद्ध्यैवोक्ताभावस्याऽपि प्रतियोगिवैयधिकरण्यासम्भव इति वाच्यम् । तथासति 'कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया किमपि व्यापकं न स्यात्' इत्यस्यैव सम्यक्त्वेऽष्टद्रव्यातिरिक्तत्वाभिधानस्य सन्दर्भविरोधापत्तेः, 'स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु' इत्यग्रिमग्रन्थविरोधाच्च, महाकालीयविशेषणतया गगनादेर्वृत्तिमत्त्वेऽपि तादृशसम्बन्धसामान्ये**

---

महाकालान्यनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तिःस्वरूपं महाकालान्यवृत्तित्वविशिष्टघटे एव पर्यवसानम्, तदभावीयप्रतियोगितावच्छेदकावच्छिन्नस्य तेन सम्बन्धेनाऽधिकरणत्वं महाकालान्यकाले एव(१), विषयितातिरिक्तसम्बन्धेन(२) तद्धर्मिवृत्तित्वविशिष्टनिरूपिततत्सम्बन्धावच्छिन्ना(३)नुयोगितायाः तद्धर्मिनियतत्वात् । **तादृशसम्बन्धेन**–महाकालानुयोगिककालिकसम्बन्धेन । **निरुक्तप्रतियोगिवैयधिकरण्याप्रसिद्ध्यैव**—महाकालानुयोगिककालिकसम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्ध्यैव । **उक्ताभावस्यापि**—महाकालान्यत्वविशिष्टघटाभावस्यापि । **प्रतियोगिवैयधिकरण्याऽसम्भव इति** । तादृशविशिष्टघटस्य महाकालान्यकालनिरूपितकालिकसम्बन्धेनैव खण्डकाले एव सत्त्वात् । **तादृशविशेषणतया**—महाकालानुयोगिककालिकविशेषणतया । **सन्दर्भविरोधापत्तेरिति**(४) । महाकालानुयोगिककालिकेन गोत्वादिसाध्यकघटादिकालोपाधिमात्रघटत्वादेर्महाकालानुयोगिककालिकेन हेतावव्याप्तिसम्भवे महाकालत्वपर्यन्तानुधावनस्य सन्दर्भविरोधादिति भावः ।

---

(१) न च तादृशविशिष्टाधिकरणतया महाकालेऽनभ्युपगमे, महाकालस्य जगदाधारत्वानुपपत्तिरिति वाच्यम् । तादृशाधिकरणत्वासत्त्वेऽपि घटाद्यधिकरणतामादायैव जगदाधारत्वोपपत्तिः, विशिष्टस्य विशेष्यानतिरिक्तत्वात् ।

(२) तेन इच्छाविषयत्वविशिष्टघटादीनिरूपितविषयितया ज्ञाने सत्त्वेनेच्छाविषयत्वाभाववान् घटत्वादित्यादौ इच्छाविषयत्वविशिष्टघटादिरूपबाधे हेत्वाभासलक्षणस्य नाऽव्याप्तिः ।

(३) तेन विशेषणतया ह्रदवृत्तित्वविशिष्टवह्न्यभावादेर्विषयितया सम्बन्धित्वं ज्ञाने नानुपपन्नम्, अत एव ह्रदो वह्निमानित्यादौ ह्रदादिवृत्तित्वविशिष्टवह्न्यभावादिरूपबाधस्य हेत्वाभासत्वमुपपद्यते ज्ञाननिष्ठविषयितया यादृशविशिष्टवत्त्वम् अनुमितिप्रतिबन्धकतावच्छेदकं तादृशस्यैव दोषत्वादिति भावः ।

(४) नन्वत्राऽष्टद्रव्यातिरिक्तवृत्यात्मककालमात्रवृत्तिपर्यन्तस्य वैयर्थ्यसम्भवेऽष्टद्रव्यातिरिक्तमात्रस्य व्यर्थतापत्तिः कथं संगच्छते इति चेन्न ।

कालिकसम्बन्धस्यं लाभार्थं कालपदोपादानात् । इदानीं तत्पदेनैव महाकालानुयोगिककालिकसम्बन्धलाभः कृत इति । न च तथापि मात्रपदस्यापि वैयर्थ्यसम्भवे तदनभिधानमनुचितमिति वाच्यम् । अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य उभयावृत्तिधर्मव्यापकत्वाभावः साध्यते, व्यापकता च स्वाश्रयानुयोगिककालिकविशेषणतया ग्राह्या, तथाच तत्क्रियानुयोगिकविशेषणतासम्बन्धेन क्रियात्वहेतुकेऽव्याप्तेः सूचितत्वात्, मात्रपदस्योभयावृत्त्यर्थकतया सार्थक्यात् । नच धर्मव्यापकत्वाभाव एव स्वाश्रयानुयोगिककालिकविशेषणतया साध्यतामिति वाच्यम् । धर्मपदेनोभयवृत्तिस्पन्दत्वरूपादीनामप्युपादेयतया स्पन्दत्वाश्रयानुयोगिककालिकविशेषणतया स्वासमानकालीनतन्नक्षत्रेरभावस्यैव प्रतियोगिव्यधिकरणतया स्पन्दत्वहेतुकेऽव्याप्त्यभावादिति ध्येयम् ।

ननु महाकालान्यत्वविशिष्टघटाभाव एव महाकाले प्रतियोगिव्यधिकरणः सुलभः। न चात्र विशेषणताविशेषशब्देन महाकालनिरूपितविशेषणताया एव विवक्षितत्वात्तादृशसम्बन्धेन निरुक्तप्रतियोगिवैयधिकर-

---

ण्यात्मककालमात्रवृत्तिधर्मनिरूपितप्रतियोगिवैयधिकरण्यघटितव्यापकत्वप्रकारकज्ञानीयविशेष्यत्वाभाववान् साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाववृत्तितादृशधर्मकालीनाऽव्याप्यवृत्तिपदार्थत्वात्। विशेष्यत्वाभावश्च प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, प्रमात्वं सर्वांशे भ्रमभिन्नत्वम्। हेतुघटकवृत्तित्वं च धर्मे स्वाश्रयवृत्तिप्रतियोगिताकत्वव्यापकत्वसम्बन्धेन। प्रतियोगित्वे स्वाधिकरणवृत्तित्वं च स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। द्वितीयहेतुश्च प्रतियोगितात्वव्यापकतादृशधर्माधिकरणावृत्तित्वकालीनाऽव्याप्यवृत्तिपदार्थत्वम्, तादृशधर्माधिकरणाऽवृत्तित्वं च साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेति।

नन्विति। घटे महाकालान्यत्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन, तच्च स्वरूपेण महाकालान्यत्वाधिकरणे कालिकेन वृत्तित्वरूपम्, एवं च सामानाधिकरण्यघटकविशेषणविशेष्योभयसम्बन्धाभ्यां तदुभयवत्त्वस्य विशिष्टवत्त्वनियामकतया महाकाले महाकालान्यत्वविशिष्टघटवत्त्वाऽसम्भवात्, तथाचोक्तं 'प्रतियोगिव्यधिकरणः सुलभ(१)' इति। वैशिष्ट्यं च

---

तावच्छेदकत्वविशिष्टाव्याप्यवृत्तितावच्छेदकत्वस्य हेतुत्वे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्वसमानाधिकरणव्याप्यतावच्छेदकमादाय हेतोर्व्यर्थविशेषणत्वापत्त्याऽव्याप्यवृत्तितावच्छेदकत्वविशिष्टतत्सम्बन्धावच्छिन्नव्याप्यवृत्तितावच्छेदकत्वानुसरणम्। ननु अव्याप्यवृत्तितावच्छेदकत्वविशिष्टतत्सम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वमादाय पुनरपि व्यर्थविशेषणत्वामिति चेन्न। अव्याप्यवृत्तितावच्छेदकत्वविशिष्टतत्सम्बन्धावच्छिन्नव्याप्यवृत्तितावच्छेदकत्वाधिकरणताया हेतुत्वेन दोषाभावात् निरुक्तकेवलतादृशसम्बन्धावच्छिन्नाधिकरणतायाश्च भिन्नत्वात् द्वितीयपक्षे हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावन्निरूपकतात्वव्याप्यकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावीयपरम्परावच्छेदकतावत्सम्बन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्वविशिष्टवृत्तितावच्छेदकत्वं हेतुः, हेत्वधिकरणवृत्त्यभावस्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वं नास्तीति प्रतीतिसिद्ध इत्याहुः।

[ ख ] ( ४ ) अपरे तु अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य महाकालत्वलिङ्गकानुमितीयकालिकसम्बन्धावच्छिन्नविधेयतावच्छेदकत्वाभावः साध्यते, महाकालत्वलिङ्गकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकपक्षविषयतानिरूपितहेतुविषयतानिरूपितवृत्तित्वविषयतानिरूपिताधिकरणविषयतानिरूपितसाध्यविषयतानिरूपितप्रमीयविषयत्वाभावो हेतुः, तथाचैतदनुमानस्याप्रे दुष्टत्वमिति वदन्ति।

( १ ) ननु महाकालान्यत्वविशिष्टघटाभावस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकत्वविरहेण कथमयमभावो लक्षणघटक इति चेन्न।

[ क ] 'तादृशसाध्यं घटादिकं द्रव्यत्वादिकं च'ति लेखनस्वरसादादिपदग्राह्यद्रव्यत्वादिसाध्यके एव तादृशाभावधारणात्, घटसाध्यके चादिपदग्राह्यमहाकालान्यत्वविशिष्टघटाभावमादायैव लक्षणसमन्वयसम्भवात्।

[ ख ] केचित्तु महाकालान्यत्वविशिष्टाभावे तात्पर्यादिति वदन्ति।

[ ग ] वस्तुतस्तु साङ्कर्याद् घटत्वं यदि नाना तदा पार्थिवघटत्वसाध्यतावच्छेदकस्थले महाकालान्यत्वविशिष्टतैजसघटाभावः, तैजसघटसाध्यकस्थले च पार्थिवघटाभावो लक्षणघटक इत्यत्रैव ग्रन्थतात्पर्यादिति।

ध्याऽप्रसिद्ध्यैवोक्ताभावस्याऽपि प्रतियोगिवैयधिकरण्यासम्भव इति वाच्यम् । तथासति 'कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया किमपि व्यापकं न स्यात्' इत्यस्यैव सम्यक्त्वेऽष्टद्रव्यातिरिक्तत्वाभिधानस्य सन्दर्भविरोधापत्तेः, 'स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु' इत्यग्रिमग्रन्थविरोधाच्च, महाकालीयविशेषणतया गगनादेर्वृत्तिमत्त्वेऽपि तादृशसम्बन्धसामान्ये

---

महाकालान्यनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वरूपं महाकालान्यवृत्तित्वविशिष्टघटे एव पर्यवसानम्, तदभावीयप्रतियोगितावच्छेदकावच्छिन्नस्य तेन सम्बन्धेनाऽधिकरणत्वं महाकालान्यकाले एव(१), विषयितातिरिक्तसम्बन्धेन(२) तद्धर्मिवृत्तित्वविशिष्टनिरूपिततत्सम्बन्धावच्छिन्ना(३)नुयोगितायाः तद्धर्मिनियतत्वात् । **तादृशसम्बन्धेन**—महाकालानुयोगिककालिकसम्बन्धेन । **निरुक्तप्रतियोगिवैयधिकरण्याप्रसिद्ध्यैव**—महाकालानुयोगिककालिकसम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्ध्यैव । **उक्ताभावस्यापि**—महाकालान्यत्वविशिष्टघटाभावस्यापि । **प्रतियोगिवैयधिकरण्याऽसम्भव इति** । तादृशविशिष्टघटस्य महाकालान्यकालनिरूपितकालिकसम्बन्धेनैव खण्डकाले एव सत्वात् । **तादृशविशेषणतया**—महाकालानुयोगिककालिकविशेषणतया । **सन्दर्भविरोधापत्तेरिति**(४) । महाकालानुयोगिककालिकेन गोत्वादिसाध्यकघटादिकालोपाधिमात्रघटत्वादेर्महाकालानुयोगिककालिकेन हेतावव्याप्तिसम्भवे महाकालत्वपर्यन्तानुधावनस्य सन्दर्भविरोधादिति भावः ।

---

(१) न च तादृशविशिष्टाधिकरणताया महाकालेऽनभ्युपगमे, महाकालस्य जगदाधारत्वानुपपत्तिरिति वाच्यम् । तादृशाधिकरणत्वासत्त्वेऽपि घटाद्यधिकरणतामादायैव जगदाधारत्वोपपत्तिः, विशिष्टस्य विशेष्यानतिरिक्तत्वात् ।

(२) तेन इच्छाविषयत्वविशिष्टघटादिनिरूपितविषयिताया ज्ञाने सत्त्वेनेच्छाविषयत्वाभाववान् घटत्वादित्यादौ इच्छाविषयत्वविशिष्टघटादिरूपबाधे हेत्वाभासलक्षणस्य नाऽव्याप्तिः ।

(३) तेन विशेषणतया ह्रदवृत्तित्वविशिष्टवह्न्यभावादेर्विषयितया सम्बन्धित्वं ज्ञाने नानुपपन्नम्, अत एव ह्रदो वह्निमानित्यादौ ह्रदादिवृत्तित्वविशिष्टवह्न्यभावादिरूपबाधस्य हेत्वाभासत्वमुपपद्यते ज्ञाननिष्ठविषयितया यादृशविशिष्टवत्त्वम् अनुमितिप्रतिबन्धकतावच्छेदकं तादृशस्यैव दोषत्वादिति भावः ।

(४) नन्वत्राऽष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिपर्यन्तस्य वैयर्थ्यसम्भवेऽष्टद्रव्यातिरिक्तमात्रस्य व्यर्थतापत्तिः कथं संगच्छते इति चेन्न ।

कालिकसम्बन्धस्यं लाभार्थं कालपदोपादानात् । इदानीं तत्पदेनैव महाकालानुयोगिककालिकसम्बन्धलाभः कृत इति । न च तथापि मात्रपदस्यापि वैयर्थ्यसम्भवे तदनभिधानमनुचितमिति वाच्यम् । अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य उभयावृत्तिधर्मव्यापकत्वाभावः साध्यते, व्यापकता च स्वाश्रयानुयोगिककालिकविशेषणतया ग्राह्या, तथाच तत्क्रियानुयोगिकविशेषणतासम्बन्धेन क्रियात्वहेतुकेऽव्याप्तेः सूचितत्वात्, मात्रपदस्योभयावृत्त्यर्थकतया सार्थक्यात् । नच धर्मव्यापकत्वाभाव एव स्वाश्रयानुयोगिककालिकविशेषणतया साध्यतामिति वाच्यम् । धर्मपदेनोभयवृत्तिस्पन्दत्वरूपादीनामप्युपादेयतया स्पन्दत्वाश्रयानुयोगिककालिकविशेषणतया स्वासमानकालीनतद्व्यक्तेरभावस्यैव प्रतियोगिव्यधिकरणतया स्पन्दत्वहेतुकेऽव्याप्त्यभावादिति ध्येयम् ।

महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकत्वविरहात्तादृशघटत्वावच्छिन्नाभावस्यैव निरुक्तक्रमेण प्रतियोगिवैयधिकरण्यसम्भवेन पूर्वमतस्यैव सम्यक्त्वात् इति चेन्न।

इदानीं महाकालान्यत्वविशिष्टो घटः, कालोऽयं महाकालान्यत्वविशिष्टघटवानित्यादिप्रतीत्या महाकालस्यापि तत्तत्कालोपाध्यवच्छेदेन महाकालान्यत्वविशिष्टघटवत्त्वात्, अन्यथोक्तप्रतीत्या खण्डकाले एव विशिष्टघटवत्त्वावगाहने वस्तुमात्रस्यैव महाकालेऽसत्त्वप्रसङ्गात्, इदानीं तदानीमितिप्रतीतिव्यतिरेकेण महाकालविषयिण्याः प्रतीतेः स्वरसतः कुत्राप्यसत्त्वात्।

नचैवं खण्डकालस्याधिकरणत्वे मानाभावः। पटध्वंसविशिष्टः कालः पटवदन्य इत्यादिप्रतीतेः प्रमात्वानुरोधेनैव खण्डकालस्यापि तथात्वादिति सिद्धान्तानुसारी पन्थाः।

परे तु महानसीयवह्नित्वेन वह्निघटोभयत्वेन वाऽवच्छिन्नप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिभियाऽवश्यं साध्यतावच्छेदकाभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छिन्नैव हेतुसामानाधिकरणाभावप्रतियोगिता लक्षणे निवेशनीया, प्रत्येकमुभयत्र पर्याप्तिसम्बन्धेनाऽसतो धर्मस्य तादृशसम्बन्धेनोभयवृत्तित्वासम्भवेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वनिवेशायोगात्, एवं च प्रकृते महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य प्रतियोगितायाः साध्यतावच्छेदकभिन्नेन(१) महाकालान्यत्ववैशि-

---

महाकालस्यापीति। महाकालान्यवृत्तित्वानिरूपकस्यापि महाकालस्येत्यर्थः, तथा च तेन सम्बन्धेन तद्धर्मिवृत्तित्वविशिष्टनिरूपिततत्सम्बन्धानुयोगितायास्तद्धर्मिनैयत्ये यथा विषयितातिरिक्तत्वं तत्सम्बन्धे निवेश्यते तथा कालिकसम्बन्धातिरिक्तत्वमपीति न काचिदनुपपत्तिरिति भावः। **महाकालान्यत्वविशिष्टघटवत्त्वात्**—तत्तत्कालोपाध्यवच्छिन्नमहाकालनिष्ठतादृशघटाधारत्वावगाहनात्, **अन्यथा**—उक्तप्रतीत्या महाकाले तादृशघटाधारत्वानवगाहने। नन्विदानीं घटः, तदानीं पट इत्यादिप्रत्ययेन महाकालनिष्ठाधिकरणतावच्छेदकत्वमेव एतत्कालादीनामवगाह्यते न त्वधिकरणत्वम्, तदा खण्डकाले कालिकेनाधिकरणत्वसाधकप्रत्ययान्तराभावात्तेषां कालिकेनाधिकरणत्वं न स्यात्प्रमाणाभावादित्याशङ्कते नचेति। एवं—'इदानीं महाकालान्यत्वविशिष्टो घट' इत्यादिप्रतीत्या महाकाले महाकालान्यविशिष्टघटवत्त्वावगाहने। **प्रमात्वानुरोधेनैवेति**। एतादृशप्रतीतेर्महाकालविषयकत्वे तत्र पटवदन्यत्वविरहेण भ्रमत्वापातादिति भावः।

**तथात्वादिति**। इदानीं घटः तदानीं पट इत्यादिप्रतीत्या खण्डकालस्यापि कालिकेन घटपटाद्यधिकरणत्वादित्यर्थः।

---

(१) काघटकेनेति पाठान्तरम्।

स्वरूपधर्मेणाऽवच्छिन्नत्वाच्चादृशप्रतियोगिताकाभावमादाय न प्रतियोगिव्यधिकरणाभावस्य प्रसिद्धिसम्भावनापीति प्राहुः । तच्चिन्त्यम् । प्रमेयवान् वाच्यत्वादित्यादौ हेतुसमानाधिकरणतादृशप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ।

वस्तुतो 'यादृशप्रतियोगितावच्छेदकविशिष्टस्याऽनधिकरणत्वं हेतुमत' इत्यत्राऽवच्छेदकवैशिष्ट्यमवश्यं साध्यतावच्छेदकताघटकसम्बन्धेन वाच्यम्, अन्यथा तप्तायःपिण्डस्यापि कालिकसम्बन्धेन यद् धूमत्वविशिष्टं वह्न्यादिकं संयोगसम्बन्धेन तदधिकरणतया धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । एवं च यत्र समवायेन घटत्वविशिष्टस्य कालिकसम्बन्धेन साध्यता तत्र महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वमप्रसिद्धम्,

---

परे त्विति । अत्र यद्वक्तव्यं तदुक्तं प्राक् । अव्याप्तिप्रसङ्गादिति । घटाद्यभावस्य साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिघटत्वावच्छिन्नप्रतियोगिताकतया न तत्तदभावमादाय लक्षणसङ्गतिरिति ध्येयम् ।

वस्तुत इति । अन्यथा—साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिवेशे । तप्तायःपिण्डस्यापि—हेत्वधिकरणस्यापि, तदधिकरणतया—कालिकसम्बन्धेन धूमत्वविशिष्टवह्न्याद्यधिकरणतया, धूमाभावस्य प्रतियोगिसमानाधिकरणतयाऽभावान्तरमादायेति शेषः । [क]ननु प्रतियोगिव्यधिकरणाऽभावाप्रसिद्ध्यैव नातिव्याप्तिः । न च तदयोगोलकसंयुक्तवस्त्वसमानकालीनवस्त्वव्वच्छिन्नाभाव एव तथेति वाच्यम् । तदयोगोलकसंयुक्तस्य गगनादेरसमानकालीनवस्त्वप्रसिद्धेः । न च संयुक्तांशे जन्यत्वप्रवेशान्न तथेति वाच्यम् । तादृशवस्त्ववच्छिन्नस्य महाकालस्याऽयोगोलकादौ सत्त्वेनाऽनधिकरणत्वासम्भवात्, वृत्त्यनियामकसम्बन्धेन साध्यतावुरोधेन प्रतियोग्यसम्बन्धित्वस्यैव निवेशादिति चेन्न ।

वृत्तिनियामकसम्बन्धेन धूमसाध्यकस्थले एवातिव्याप्त्यभिधानात्, तत्र तादृशसाध्यतावच्छेदकसम्बन्धेन तादृशवस्त्ववच्छिन्नस्य महाकालादेः सम्बन्धित्वाप्रसिद्ध्या महाकालादेर्वक्तुमशक्यत्वात् भवति तादृशाभावो लक्षणघटकः । न च तादृशवस्तुनोऽपि स्वत्व तेत्राच्यत्ववत्तासम्बन्धेन तदयोगोलकसंयुक्तपदार्थेऽपि सत्त्वात्तदधिकरणत्वस्यैव तत्र सत्त्वादिति वाच्यम् । विषयितान्यसम्बन्धसामान्येनैव विभिन्नकालीनयोराधाराधेयभावाऽभ्युपगमात् ।

[ख]नन्वेवं वह्निमान् धूमादित्यादावव्याप्तिसम्भवेऽतिव्याप्तिदानानौचित्यम्, तत्रापि पर्वतादिसंयुक्तजन्यवस्त्वसमानकालीनपदार्थावच्छिन्नाभावस्य कथञ्चित्प्रसिद्धत्वेऽपि तत्प्रतियोगितावच्छेदकावच्छिन्नस्य महाकालादेर्हेतुमति सम्बन्धितासत्त्वादिति चेन्न ।

तत्पर्वतसंयुक्तजन्यवस्त्वसमानकालीनभिन्नत्वविशिष्टपदार्थाभावस्यैव लक्षणघटकत्वात्, महाकालगगनादेर्भिन्नत्वाभावान्न तत्प्रतियोगितावच्छेदकावच्छिन्नमिति ध्येयम् ।

एवं चेति । इत्थं चेत्यर्थः । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिवेशे इति

**स्वरूपसमवायाभ्यामेव (तत्र) तथात्वात्, विशिष्टनिरूपितसमवायानभ्युपगमात्, अतस्तादृशाभावमादाय न प्रसिद्धिसम्भव इति ध्येयम् ।**

---

यावत् । स्वरूपसमवायाभ्यामेव तथात्वादिति । अत्रायमाशयः । साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति अधिकरणत्वं निवेशनीयम्, अधिकरणत्वे रूपवृत्तित्वं च स्वनिरूपितनिरूपकतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तन्निवेशव्यावृत्तिस्तु शुद्धसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानवह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टविषयकज्ञानान्यतरत्ववहेतावतिव्याप्तिः, एवं वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानशुद्धसमवायेन वह्नित्वविशिष्टविषयकज्ञानान्यतरत्ववहेतावपीत्यत इतरन्यूनवारकपर्याप्ती निवेश्ये । तथाच कालो घटवान् महाकालत्वादित्यत्र तादृशप्रतियोगितावच्छेदकं महाकालान्यत्ववैशिष्ट्यं घटत्वं च, साध्यतावच्छेदकताघटकसमवायेन तदुभयावच्छिन्नत्वमप्रसिद्धम्(१), स्वरूपसमवायाभ्यामेवोभयावच्छिन्नत्वादिति तादृशरूपवृत्ति प्रतियोगितावच्छेदकत्वमप्रसिद्धमित्यर्थो वा बोध्यः ।

कालो घटवान् महाकालत्वादित्यत्र सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धेन महाकालभेदविशिष्टं यद् घटत्वं तदवच्छिन्नाभावमादायाव्याप्तिवारणसम्भवादाह विशिष्टनिरूपितसमवायानभ्युपगमादिति । तथाच वैशिष्ट्यावच्छिन्नावच्छेदकतायां शुद्धसमवायावच्छिन्नत्वं न स्वीकरणीयम्, किन्तु विशिष्टप्रतियोगिकत्वसमवायत्वोभयाव-

---

(१) [क] नन्वत्र साध्यतावच्छेदकताघटकसमवायसम्बन्धेन प्रतियोगितावच्छेदकघटत्वावच्छिन्नस्यैव प्रसिद्धिसम्भवेनाऽप्रसिद्धिदानमसङ्गतम्, महाकालान्यत्वविशिष्टत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वाभावस्य हेतुमति सत्त्वादिति चेन्न ।

साध्यतावच्छेकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकतानिष्ठावच्छेदकताभिन्ननिरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकतानिष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य लक्षणे निवेशः कार्यः, अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगीभावीयप्रतियोगितावच्छेदकावच्छिन्नतत्कपिसंयोगनिष्ठनिरूपकताकाधिकरणतावद्भेदस्य वृक्षे सत्त्वेनाऽव्याप्तिः स्यात्, तथाच महाकालान्यत्ववैशिष्ट्यनिष्ठावच्छेकतायाः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताभिन्नत्वेन तादृशभेदस्य लक्षणाघटकत्वात् शुद्धघटत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य महाकाले सत्त्वादिति । न च प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकत्वनिष्ठावच्छेदकताभिन्ननिरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितानिरूपकतानिष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणतानिष्ठावच्छेदकताकप्रतियोगिताकभेदस्यैव लक्षणे निवेशात्प्रोक्तदोषस्तथाविधभेदस्य महाकाले सत्त्वादिति वाच्यम् । वह्निमान् धूमादित्यादौ तद्व्यक्त्यनुयोगिकसमवायेन वह्नित्ववान्नास्तीत्यभावस्य तथाविधत्वेन तमादायाव्याप्तेः ।

[ख] नन्वेवमपि प्रतियोगितावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसाध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावद्भिन्नत्वस्य निवेशात्प्रोक्तग्रन्थाऽसङ्गतिः, प्रथमरूपवृत्तित्वं च स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । द्वितीयरूपवृत्तित्वं च स्वनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकाविशिष्टतावच्छेदकघटक-

च्छिन्नसंसर्गताकत्वमेवेत्यर्थः(१) । न च शुद्धसाध्यतावच्छेदककस्थलेऽवच्छेदकतायां निरवच्छिन्नत्वनिवेशादेव तादृशघटत्वावच्छिन्नाभाववारणसम्भवे विशिष्टनिरूपितसमवायाऽनभ्युपगमादित्यसङ्गतमिति वाच्यम् । साङ्कर्याद् घटत्वस्य नानात्वमते तादृशविशिष्टघटत्वं न साध्यतावच्छेदकम्, तथाच निरवच्छिन्नत्वपदेन साध्यतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकत्वानिरूपकत्वस्यैव प्रतियोगितायां निवेशनीयतया तादृशघटत्वावच्छिन्नाभावस्य लक्षणघटकत्वादव्याप्तिवारणसम्भव इत्यत उक्तम् विशिष्टनिरूपितेति ध्येयम् ।

**स्वरूपसमवायाख्यामिति** । अन्ये तु वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य यत्र साध्यता तादृशवह्नित्वविशिष्टविषयकज्ञानवह्नित्वविशिष्टविषयकज्ञानान्यात्मत्वहेतुकेऽतिव्याप्तिवारणाय न्यूनवारकपर्याप्तिनिवेशः, एवं समवायेन वह्नित्वविशिष्टसाध्यकान्यतरत्वहेतुकेऽतिव्याप्तिवारणायेतरवारकपर्याप्तिनिवेशः, तथाच साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वाभाववद्वृत्तित्वसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । वै० स्वसामानाधिकरण्यस्वनिरूपकनिरूपितत्वोभयसम्बन्धेन, तथाच तथाकत्यनुयोगिकसमवायावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य तथाविधप्रतियोगिकाधिकरणत्वाभावान्न लक्षणघटकता, द्वितीयसम्बन्धविरहात्, स्वनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताविशिष्टावच्छेदकता वह्न्यनुयोगिकसमवायसम्बन्धावच्छिन्ना वह्नित्वनिष्ठा भवति, तथाच शुद्धसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकवह्न्यनुयोगिकसमवायावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितसमवायावच्छिन्नावच्छेदकतावैशिष्ट्यस्य तत्र सत्त्वात् स्वनिरूपकतादृशनिरूपकतानिरूपितत्वस्वसामानाधिकरण्योभयोस्तत्र सत्त्वात्, तादृशावच्छेदकताकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वं न तथाविधसमवायत्वगतैकत्वे ।किन्तु वह्न्यनुयोगिकत्वसमवायत्वगतद्वित्वे इति तस्य लक्षणाऽघटकत्वादिति, तद्वह्न्यनुयोगिकसमवायावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतानिरूपतत्वस्य च पर्याप्तिसहितसाध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नावच्छेदकतायामस्वीकारात् । स्वीकारे वा तद्वैशिष्ट्यस्य तदनुयोगिकसमवायावच्छिन्नावच्छेदकताया सत्त्वेन पूर्वोक्तरीत्या न तादृशरूपं भवति, महाकालान्यत्ववैशिष्ट्यनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकसमवायावच्छिन्नघटत्वनिष्ठावच्छेदकताकनिरूपकतायाश्च तथात्वेन तन्निरूपिताधिकरणतावद्भेदस्य महाकाले सत्त्वात्, स्वनिरूपितसमवायावच्छिन्नघटत्वनिष्ठावच्छेदकतावैशिष्ट्यस्य महाकालान्यत्ववैशिष्ट्यनिष्ठावच्छेदकतायां स्वसामानाधिकरण्यविरहप्रयुक्तसत्त्वेन स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य स्वरूपत्वसमवायत्वगतद्वित्वे सत्त्वेन द्वितीयदलस्यापि तत्र सम्भवेनाऽव्याप्त्यभावादव्याप्तिदानपरजगदीशग्रन्थोऽसंगत एवेति चेन्न ।

महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकतावच्छेदकता नृसिंहाकारा तथावैशिष्ट्ये घटत्वे एकैवेति तस्यामेव स्वरूपसम्बन्धावच्छिन्नत्वं समवायसम्बन्धावच्छिन्नत्वं चास्तीति स्वसामानाधिकरण्यस्यापि तत्र सम्भवेन तादृशावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य स्वरूपत्वसमवायत्वगतद्वित्वे एव सत्त्वेन समवायत्वगतैकत्वेऽसत्त्वादप्रसिद्धितादवस्थ्यमेवेति । न च स्वनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धानवच्छिन्नावच्छेदकताविशिष्टावच्छेदकतेत्यादिसम्बन्धेनैव दीयते, तथाच महाकालान्यत्ववैशिष्ट्यनिष्ठा पृथक्, घटत्वनिष्ठा पृथक् एवंभूतावच्छेदकताद्वयनिरूपितनिरूपकतायास्तथात्वेन नोक्तदोषावकाश इति वाच्यम् । महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकता नृसिंहाकारैकैव तद्भिन्ना नास्त्येवेति स्वनिरूपिततथाविधावच्छेदकताया असत्त्वेनाऽप्रसिद्धितादवस्थ्यादिति ध्येयम् ।

(१) तथाच शुद्धसमवायत्वस्य महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकतावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणत्वाभावादित्यर्थः ।

केचित्तु महाकालभेदाधिकरणनिरूपितवृत्तित्वावच्छिन्नप्रतियोगिताकसमवायानभ्युपगमादित्यर्थ इत्याहुः ।

करणमित्यर्थः। रूपवृत्तित्वं च स्वनिरूपितावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ग्रन्थसङ्गतिः सुस्थिरा।

नन्वेवमपि 'स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसाध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्त्यवच्छेदकताकनिरूपकता' इत्येव निवेश्यतां, किं निरूपकतायां तादृशरूपवृत्तित्वनिवेशेनेति कथं ग्रन्थसङ्गतिः। अत्र च प्रथमरूपवृत्तित्वं निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। द्वितीयरूपवृत्तित्वं चावच्छेदकतायां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति। न च महाकालान्यत्वविशिष्टनिष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितनिरूपकताया अपि तथात्वेन कथं तत्र तादृशाभावो लक्षणघटक इति वाच्यम्। स्वप्रतियोगितावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्याऽपि निरूपकतायां निवेशात्, रूपवृत्तित्वञ्च स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति सामानाधिकरण्यत्वसमवायत्वगतसमुदायत्ववृत्तिः न कालिकसम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकनिरूपकताभिन्नसामानाधिकरण्यसम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकनिरूपकताकेति न दोषः। न च समवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ कालिकसम्बन्धेन वह्नित्वविशिष्टः सन् समवायेन वह्नित्वविशिष्टो नास्तीत्यभावमादायाऽव्याप्तिः साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसमवायसम्बन्धावच्छिन्नावच्छेदकताककालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वाभावस्य हेत्वधिकरणे सत्त्वादिति वाच्यम्। स्वनिरूपितनिरूपकतानिरूपितत्वस्वसामानाधिकरण्योभयसम्बन्धेन स्वविशिष्टावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदरूपवृत्तित्वस्य निवेशे नदोषाभावात्। न च विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः कस्या अप्यवच्छेदकताया निरुक्तरूपावृत्तित्वादिति वाच्यम्। साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य निरूपकतायां निवेशाद्दोषाभावात्। रूपवृत्तित्वं च स्वनिरूपितसाध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतासमानाधिकरणावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति। न च समवायेन वह्नित्वविशिष्टस्य सतः कालिकेन द्रव्यत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ अव्याप्तिः कालिकेन वह्नित्वविशिष्टं सत् समवायेन द्रव्यत्वविशिष्टं नास्तीत्यभावस्य लक्षणघटकत्वादिति वाच्यम्। स्वावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-साध्यतावच्छेदकनिष्ठत्वोभयसम्बन्धेन साध्यतानिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वस्य निरूपकतायां निवेशात्, तथा चैतादृशवह्नित्वनिष्ठकालिकसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वात् एतादृशाभावस्य लक्षणघटकत्वेन दोषविरहादिति चेत।

न च तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव (१)वक्तव्यम् , तथा चाऽवृत्तिगगनाद्यभावद्वारिकैव तत्सिद्धिः, सत्ताद्यधिकरणकर्मादौ समवायेन ज्ञानसा-

---

केचित्तु साध्यसाधनभेदेन व्याप्तेर्भेदाद्, विशिष्टसाध्यकस्थले एव यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत' इति वक्तव्यम्, अविशिष्टसाध्यकस्थले तु 'यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमत' इत्येव लाघवाद् वक्तव्यम्, तथाच शुद्धघटस्य साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि प्रतियोगिसमानाधिकरण एव, प्रतियोगिता च प्रतियोगितावच्छेदकधर्मस्वरूपैव लाघवात, न तु प्रतियोगिस्वरूपा, तेषां नानात्वेन गौरवाद्, अतो नैकप्रतियोग्यनधिकरणतामादाय संयोगी एतत्त्वादित्यादावव्याप्तिरित्याहुः । तच्चिन्त्यम् । कालो घटवान् महाकालत्वादित्यादावव्याप्तिवारणार्थमेवाऽविशिष्टसाध्यकस्थलेऽपि प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशस्य प्रामाणिकतया गौरवस्याऽकिञ्चित्करत्वादिति ।

सार्वभौममतमाशङ्क्य निराचष्टे नचेति । वाच्यमिति परेणाऽन्वयः । तादृशसम्बन्धेनेति । साध्यतावच्छेदकसम्बन्धेनेत्यर्थः । इदं चा'ऽवृत्ती'त्यस्य प्रतियोगिन्या वृत्त्याऽन्वितम् । तादृशपदस्य प्रतियोगितावच्छेदकसम्बन्धपरत्वे पुनरग्रे प्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या ।

---

अत्रोच्यते–नृसिंहाकारा एकैवावच्छेदकता । तस्याश्च महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकतावच्छेदकताया ऐक्येन तत्र तादृशसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वाभावान्नायमभावो लक्षणघटक इति जगदीशाशयः ।

इदं च–साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं च । अवृत्तीत्यस्येत्यादि । अवृत्तीत्यस्य वृत्तित्वाभाववानर्थः, तत्प्रतियोगिभूतया वृत्तितयाऽन्वितमित्यर्थः । तथाच हेत्वधिकरणनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववान् तादृशप्रतियोगिसामान्यं यस्य एवं विधो योऽभाव इत्यर्थः । कालो घटवान् महाकालत्वादित्यत्र गगनाभाव एव प्रतियोगिव्यधिकरणः तत्प्रतियोगिनो गगनस्य हेत्वधिकरणमहाकालनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वात् । तदेवाह दीधितौ—तथाचेति । गगनाद्यभावेति । आदिना तत्सिद्धिः—प्रतियोगिवैयधिकरण्यप्रसिद्धिः(२) ।

पुनरग्रे—प्रतियोगितानवच्छेदकेत्यत्र । ग्राह्येति । अन्यथा समवायावच्छिन्नवह्न्य-

---

(१) दीधितौ वक्तव्यमिति । अभावविशेषणतया अभावपूर्वप्रतीकेन विवक्षणीयम् । अभावपूर्वप्रतीकं च प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणेत्यन्तम् । तन्त्र्यैव तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किचिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमर्थः, तदेवाऽभावविशेषणमिति ।

(२) गगनाभावप्रतियोगितः कालिकेनाऽधिकरणाऽप्रसिद्धावपि वृत्तिमत्त प्रसिद्धायाः कालिकसम्बन्धावच्छिन्नवृत्तिताया अभावस्य गगने प्रसिद्धत्वादिति भावः

मान्यस्य संयोगसामान्यस्य चाऽवृत्तेर्नातिप्रसङ्गः, भूतत्वमूर्तत्वोभयत्वविशिष्ट-

---

तादृशसम्बन्धेनेत्यस्य फलमाह सत्तादीति। विषयताया वृत्त्यनियामकत्वमते सत्त्ववति घटादौ ज्ञानाभावस्य सहजत एव प्रतियोगिवैयधिकरण्यं संभवतीत्यतः संयोगसामान्यस्य चेति । नातिप्रसङ्ग इति। ज्ञानवान् संयोगवान् वा (१)सत्त्वादित्यादौ नातिप्रसङ्ग इत्यर्थः। सत्तावद्वृत्तित्वसामान्याभावस्य संयोगादावभावादुक्तातिव्याप्तिवारणमेव यत्किञ्चिदित्यस्यापि प्रयोजनमित्यवधेयम् ।

---

भावमादाय वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः। इत्थं च वृत्तितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुक्तौ सत्ताधिकरणघटनिरूपितविषयत्वसम्बन्धावच्छिन्नवृत्तितायाः ज्ञाने सत्त्वाद् ज्ञानाभावस्य प्रतियोगिवैयधिकरण्यविरहेण ज्ञानवान् सत्त्वादित्यत्राऽतिव्याप्तिप्रसङ्गात् । घटादाविति । घटे कालिकसम्बन्धेन ज्ञानसत्त्वाज्ज्ञानाभावस्य प्रतियोगिवैयधिकरण्यं दुर्घटमत आदिपदम्, तेनाऽऽकाशादेः परिग्रहः । तथाच प्रतियोगिवैयधिकरण्ये सम्बन्धित्वानिवेशपक्षे सम्बन्धविशेषानिवेशेऽपि घटे जन्यमात्रस्य कालोपाधित्वानुपगमे उपगमे चाऽऽदिपदग्राह्याऽऽकाशादौ प्रतियोगिवैयधिकरण्यं सम्भवतीत्यर्थः। तथाच हेत्वधिकरणे गुणादौ स्वसमवायिसमवायरूपैकार्थसमवायसम्बन्धेन संयोगस्य सत्त्वात्संयोगाभावे प्रतियोगिवैयधिकरण्याभावेन संयोगवान् सत्त्वादित्यत्रातिप्रसङ्गवारणार्थमेव वृत्तितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयमिति भावः।

केचित्तु हेत्वधिकरणनित्यगुणादौ संयोगस्य कालिकसम्बन्धेन वृत्तिनियामकेन वृत्तेरतिव्याप्तिरसङ्गता अत आदिपदम्। तथाच संयोगवान् गुणान्यत्वविशिष्टसत्त्वादित्यत्रातिव्याप्तिः कर्मणो नित्यत्वाभावात्, तत्रैव कालिकेन वृत्तेः। तदिदमुक्तं दीधितौ 'कर्मादावि'ति। इत्थं च कर्ममात्रस्यैव कालिकसम्बन्धेन संयोगवत्त्वात् तत्र संयोगाभावस्य प्रतियोगिवैयधिकरण्याऽसम्भवादतिव्याप्तिरिति भावः। अत एव 'जन्यमात्रस्य कालोपाधित्वानुपगमे तदुपगमेऽपि चायोगोलकीयपरमाणाविव धूमाभावस्य प्रतियोगिवैयधिकरण्यसंभवेन धूमवान् वह्नेरित्यादिप्रसिद्धस्थलपरित्यागेऽपि संयोगी सत्त्वादित्यत्रापि कथमतिप्रसङ्गः, गुणे सम्बन्धसामान्येन संयोगस्यावृत्तेरि'त्यपि समाहितम्, गुणस्य हेत्वधिकरणत्वाभावात्, द्रव्ये समवायेन कर्मणि कालिकेन संयोगस्य वृत्तेरित्याहुः। तच्चिन्त्यम्। सत्तावद्वृत्तित्वसामान्याभावस्य—सत्तावद्द्रव्यवृत्तित्वाभावस्य। उक्तातिव्याप्तिवारणम्—संयोगवान् सत्त्वादित्यत्रातिव्याप्तिवारणम्। तथाच यत्किञ्चित्पदस्य व्यावृत्तिस्तन्त्रेणैव प्रदर्शिता, नातो दीधितिकृन्न्यूनतेति। केचित्तु यत्किञ्चित्पदादाने हेत्वधिकरणवृत्तित्वसामान्याभावस्य साध्याभावप्रतियोगिन्यसत्त्वेन सर्वत्र व्यभिचारिण्यतिव्याप्तिः स्फुटत्वेन नोक्तेति न दीधितिकृन्न्यूनतेत्याहुः। वस्तुतो हेतौ यत्किञ्चित्त्वनिवेशेऽपि धूमवान् वह्नेरित्यत्रातिव्याप्त्ययोगात्प्रसिद्धस्थलपरित्याग इति ।

---

(१) अत्र जन्यत्वविशिष्टसमवायेन सत्ताया हेतुत्वं बोध्यम नातो नित्यगुणादिकमादायाऽव्याप्त्यभावेऽपि क्षतिः ।

गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तु न मनोगुणादिवृत्ति, संयोगसामान्यन्तु न किञ्चिद्द्रव्यावृत्तीति वाच्यम् । विशिष्टस्याऽनतिरिक्तत्वात् ।

---

प्रतियोगितावच्छेदकविशिष्टेत्यस्य फलमाह भूतत्वेत्यादि । स्वयं मनसा खण्डनाद् भूतत्वमूर्त्तत्वोभयसाध्यकमूर्तत्वस्य सद्धेतुतामाशङ्क्याह गुणकर्मान्यत्वेत्यादि । विशिष्टान्तद्वयं मनोगुणयोः क्रमेणाऽन्वितम् । इदं च विशिष्टस्याऽनतिरिक्तत्वं विशिष्टधर्मावच्छिन्नाधेयत्वस्याऽतिरिक्तत्वमित्यभ्युपेत्य, अन्यथा सार्वभौममते उभयत्वस्यैकविशिष्टापरत्वरूपत्वे भूत·

---

फलमाहेति । तथाच भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यत्र मूर्त्तत्वाधिकरणमनोव्यक्त्यवृत्तित्वस्य तादृशोभयाभावप्रतियोगिताश्रयमूर्त्तत्वे(१)ऽसत्त्वेनोभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावेनाऽभावान्तरमादायाऽतिव्याप्तिः, एवं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्र जात्यधिकरणगुणवृत्तित्वस्यैव विशिष्टसत्ताभावप्रतियोगिताश्रयसत्तायां सत्त्वेनाऽभावान्तरमादायातिव्याप्तिः स्यादिति भावः ।

मनसः खण्डनादिति । उभयाभावप्रतियोगिताया व्यासज्यवृत्तित्वाद्वेत्यपि द्रष्टव्यम्, प्रतियोगितापर्याप्त्यधिकरणस्यैवाऽवृत्तित्वविवक्षणे उक्तातिव्याप्तिनिरासात् । यद्यपि पूर्वं विशिष्टसाध्यकेऽतिव्याप्तिप्रदर्शनोत्तरं विशिष्टस्याऽतिरिक्ततापक्षे तदसङ्गतेरस्वरसादुभयसाध्यकातिव्याप्तेः प्रदर्शनेनाऽत्र पूर्वमन्थाविपरीतोपन्यासादिदमसङ्गतम् । तथापि शिष्यबुद्धिवैशद्याय तथोक्तेरदुष्टत्वात् ।

प्रतियोगितावच्छेदकविशिष्टेत्युपादाने तु नातिव्याप्तिरित्याह द्योतेतां—न मनोगुणादिवृत्तीति । क्रमेणाऽन्वितमिति । एवं च भूतत्वमूर्त्तत्वोभयत्वाविशिष्टं न मनोवृत्ति, गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टन्तु न गुणादिवृत्तीत्यर्थः ।

[ १ ] ननु तन्निवेशेऽपि गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टप्रतियोगिसामान्यस्य गुणवृत्तितयाऽतिव्याप्तिवारणाऽसम्भव इति चेन्न ।

[ क ] यादृशप्रतियोगितावच्छेदकवैशिष्ट्यावच्छिन्नवृत्तितासामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपितत्वाभावः तत्त्वमित्येव तदर्थः । तथाच गुणकर्मान्यत्वविशिष्टसत्तात्ववैशिष्ट्यावच्छिन्नवृत्तितासामान्ये गुणनिरूपितत्वाभावसत्त्वेन नातिव्याप्तिः । भूतत्वमूर्त्तत्वोभयत्ववैशिष्ट्यावच्छिन्नवृत्तितासामान्ये मनोनिरूपितत्वाभावसत्त्वेन नातिव्याप्तिः ।

( ख ) केचित्तु प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्ये प्रतियोगितावच्छेदकवैशिष्ट्यावच्छेदेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपितवृत्तित्वाभावः तत्त्वमिति तदर्थः । तथाच गुणनिरूपितवृत्तित्वस्य गुणकर्मान्यत्ववैशिष्ट्यावच्छेदेन सत्तायामसत्त्वान्नातिव्याप्तिः । द्वितीयस्थले च व्यासज्यवृत्तिधर्मावच्छेदेन एकदेशवृत्त्यभावस्याप्रसिद्ध्याऽतिव्याप्तिवारणमिति प्राहुः ।

इदं च—अतिव्याप्तिदानं च । अन्यथा—विशिष्टस्याऽतिरिक्तत्वे । ध्येयमिति ।

---

(१) प्रतियोगिताया अव्यासज्यवृत्तितया मनोव्यक्तिमात्रेऽपि सत्त्वात् ।

समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः, जातिमन्निष्ठतादृशाभावप्रतियोगितायाः जातित्वेनाऽनवच्छेदात्, जातिशून्ये च तादृशसम्बन्धेन वृ-

त्त्यमूर्त्तत्वोभयगुणकर्मान्यत्वविशिष्टसत्त्वयोरतिरिक्ततया तयोः सहजत एव मनोगुणाद्यवृत्तितया प्रतियोगितावच्छेदकविशिष्टत्याभिधानमसङ्गतं स्यादिति ध्येयम् । सामान्यपदस्य फलमाह संयोगसामान्यन्त्विति । तथाच संयोगी द्रव्यत्वादित्यादावव्याप्तिवारणार्थमेव सामान्यपदमिति भावः । विशिष्टस्येति । विशिष्टनिरूपिताधेयत्वस्येत्यर्थः । तथाच विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरिति भावः ।

ननु तादृशसम्बन्धावच्छिन्न(१)यत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदकप्रतियोगितावच्छेदकत्वं सामान्यकान्तेन विवक्षितमतो नोक्तदोष इत्यत आह समवायेनेति । ननु समवायेन जातेर्व्याप्य-

वस्तुतस्तु आधेयत्वमप्यनतिरिक्तमेव, शुद्धे विशेष्ये तद्वृत्तित्वसत्त्वेऽपि तद्वृत्तितानवच्छेदकविशेषणान्तरावच्छिन्ने तद्वृत्तित्वाभावोऽक्षत एव एकरूपावच्छिन्न एव, तत्तदभावयोर्विरोधेनाऽवृत्तेरित्यभिमानः । [१]ननु विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वेऽपि गुणादिनिरूपिताधेयत्वस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनि सत्त्वादतिव्याप्तितादवस्थ्यम् । न च प्रतियोगितावच्छेदकस्य हेत्वधिकरणभूतयत्किञ्चिद्व्यक्तिनिरूपिताऽऽधेयतानवच्छेदकत्वमिति वाच्यम् । सामान्यपदवैयर्थ्यादिति चेन्न । प्रतियोगितावच्छेदकसामान्यस्य तादृशाधेयतानवच्छेदकत्वविवक्षया संयोगिसाध्यकेऽव्याप्तिवारकतयैव सामान्यपदसार्थक्यात् । सामान्यपदमिति । संयोगी द्रव्यत्वादित्यादौ संयोगाभावप्रतियोगिनि यत्किञ्चित्संयोगव्यक्तौ हेत्वधिकरणयत्किञ्चिद्घटव्यक्त्यवृत्तित्वसत्त्वेऽपि तत्प्रतियोगिसामान्ये तदसत्त्वेन तादृशाभावस्य लक्षणाऽघटकत्वादव्याप्तिरिति । तन्मतं निराकरोति दीधितौ—विशिष्टस्यानतिरिक्तत्वादिति । तथाचेति । विशिष्टसत्तात्वावच्छिन्ने गुणनिरूपितवृत्तित्वस्यैव सत्त्वेनाऽभावान्तरमादायाऽतिव्याप्तिरित्यर्थः । विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाऽभावानङ्गीकारादिति यावत् । अतो नोक्तदोष इति । तथाच विशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वादेर्गुणादिवृत्तितानवच्छेदकतया तादृशाभावसङ्ग्रहेण विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिरिति भावः । न चैवं विशिष्टसत्ताभावप्रतियोगितावच्छेदकस्य वैशिष्ट्यसहितसत्तात्वस्य गुणादिवृत्तितावच्छेदकशुद्धसत्तात्वाऽनतिरिक्तत्वेन तदनवच्छेदकत्वासम्भवेनोऽक्तविवक्षयापि तादृशाभावसङ्ग्रहाऽसम्भवादतिव्याप्तिवारणाऽसम्भव इति वाच्यम् । यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकतापर्याप्त्यवच्छेदकानवच्छिन्नपर्याप्तिकप्रतियोगितावच्छेदकताकत्वमित्यर्थकतयोक्तातिव्याप्तिवारणसम्भवात् ।

। दीधितौ—समवायेन जातेः साध्यत्वे इति । अत्र हेत्वधिकरणं जातिमद् जाति-

(१) विशिष्टसत्तावान् जातेरित्यादौ कालिकसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वं विशिष्टसत्तात्वेऽप्यस्तीत्यतस्तादृशसम्बन्धावच्छिन्नत्वस्याऽधिकरणतायां प्रवेशः ।

त्तेरप्रसिद्धेः, संयोगादिसाध्यकगुणकर्मान्यत्वादौ चाऽतिव्याप्तिः, (अद्रव्ये) हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः, द्रव्ये च संयोगादेरपि वृत्तेः।

मैवम्, साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिकत्वहेत्वधिकरणभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात्।

वृत्तित्वाच्चत्साध्यके प्रतियोगिवैयधिकरण्यमेव न देयम्, देयं चाऽव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ साध्यतावच्छेदके व्याप्यवृत्तितानवच्छेदकत्वविशेषणम्, अतो न तत्रत्यलक्षणस्याऽतिव्याप्तिरत आह संयोगादीति। गुणकर्मान्यत्वेति। एकैकोपादाने तत्र प्रतियोगिवैयधिकरण्यं प्रसिद्धम् अत उभयोपादानम्। अद्रव्ये गुणादौ समवायेन वृत्तेः प्रसिद्धेरत आह हेतुमतीति। अत्र विशिष्टनिरूपिताऽऽधेयत्वस्याऽतिरिक्तत्वोपगमे स्वप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववद्धेत्वधि-

शून्यं च तत्र जातिमन्निष्ठप्रतियोगिव्यधिकरणो योऽभावः घटत्वाद्यभावस्तत्प्रतियोगितानवच्छेदकत्वस्य जातित्वे सत्त्वादतिव्याप्तिः, जातिशून्यं च हेत्वधिकरणं यत्किञ्चिद्व्यक्तिपदेन नोपादातुं शक्यते इत्याह वृत्तेरप्रसिद्धेरिति। हेतुमति–सामान्यादौ। अप्रसिद्धेरिति। यत्किञ्चिद्व्यक्तिपदेन न सामान्याद्युपादानसम्भव इति भावः। न देयमिति। तथाच जातित्वस्य जातिशून्यनिष्ठाभावप्रतियोगितावच्छेदकत्वान्न जातिमान् मेयत्वादित्यादावतिव्याप्तिरिति भावः।

अत्र विशिष्टनिरूपिताऽऽधेयत्वस्याऽतिरिक्तत्वोपगमे(१) इति। एवं च हेत्वधिकरणयत्किञ्चिद्व्यक्तिवृत्तितासामान्ये स्वप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः(२) तादृशं स्वं सामान्यकान्तेन विवक्षणीयमित्यर्थः। अत्र स्वप्रति-

(१) तादृशोभयाभाववद्धेत्वधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाधिकरणतासामान्यकत्वस्य विवक्षणे आधेयत्वानतिरेकेऽपि न दोष इति ध्येयम्।

(२) ननु वृत्त्यनियामकसम्बन्धेन साध्यतायां सत्त्वे हेत्वधिकरणनिरूपितवृत्तितासामान्ये साध्याभावप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोरभावसत्त्वेनाव्याप्तिः, यदि च वृत्तित्वस्थाने सम्बन्धित्वं निवेश्यते, तदा प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चिद्धेत्वधिकरणनिरूपितसम्बन्धितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाव एव लक्षणमस्त्विति चेन्न।

विभिन्नकालीनयोः स्ववृत्तित्ववाच्यत्वादीनामपि सम्बन्धत्वाभावे तद्घटकान् तत्क्रियात्वादित्यत्रातिव्याप्तेः, तेषां तत्सम्बन्धत्वेऽस्य लक्षणान्तरत्वमेवाऽवसेयम्।

एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितासामान्ये हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितत्व—यादृशप्रतियोगितावच्छेदकावच्छिन्नत्वोभयाभावस्य, यादृशाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकत्वसामान्ये हेत्वधिकरणयत्किञ्चिन्निष्ठसम्बन्धितानिरूपितत्व—साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्य च लक्षणान्तरत्वं बोध्यम्।

एवं हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितवृत्तितानिरूपितवृत्तितानवच्छेदकयादृशप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयत्वाभावस्यापि लक्षणान्तरत्वं बोध्यम्।

करणयत्किञ्चिद्व्यक्तिवृत्तित्वसामान्यकत्वस्य विवक्षणान्नोक्तदोष इत्यस्मद्गुरुचरणाः ।

नव्यास्तु साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो यस्तदन्यत्वं प्रतियोगिवैयधिकरण्यं वाच्यम्, अतो गगनाभावमादायैव प्रसिद्धेर्न कोपि दोषः । नचैवं यद्यत्सम्बन्धेन(१) यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तत्तत्सम्बन्धान्यसाध्यतावच्छेदकसम्ब-

---

योगितावच्छेदकावच्छिन्नत्वाभावमात्रोक्तौ व्यभिचारिमात्रेऽतिव्याप्तिः गगनाभावस्यैव प्रतियोगिव्यधिकरणत्वात् । धूमाधिकरणपर्वतनिरूपितकालिकसम्बन्धावच्छिन्नघटवृत्तितायां वह्न्यभावप्रतियोगितावच्छेदकावच्छिन्नत्वघटितोभयाभावसत्त्वादव्याप्तिरतः सामान्यपदम् ।

[१]अथ यत्किञ्चिद्धेत्वधिकरणनिरूपितसामान्ये इत्येवोच्यतामलं वृत्तितात्वनिवेशेनेति चेन्न ।

संयोगेन घटसाध्यकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभाववत्त्वहेतुकव्यभिचारिण्यतिव्याप्तिः, घटाभावनिरूपितप्रतियोगित्वे घटाभावप्रतियोगितावच्छेदकावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वयोः सत्त्वात् । न चाऽवच्छिन्नत्वस्य विलक्षणत्वेन वृत्तितानिष्ठस्यैव प्रवेश्यतया प्रतियोगित्वे तदभावोऽक्षत एवेति वाच्यम् । प्रतियोगित्वाधेयत्वादेः प्रतियोग्याधेयस्वरूपत्वे अवच्छेदकरूपत्वे वा घटत्वावच्छिन्नप्रतियोगित्वाधेयत्वयोरैक्येन आधेयतानिष्ठयोरपि तयोर्नाभावः प्रतियोगित्वे इत्यतिव्याप्तेः । वृत्तितात्वोपादाने च वृत्तितात्वावच्छिन्ननिरूप्यताया एव निविष्टत्वेन प्रतियोगित्वे तद्विरहान्नातिव्याप्तिः । न च तथापि स्वप्रतियोगितावच्छेदकावच्छिन्नत्वविशिष्टसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाव एव निवेश्यतां, किमुभयाभावनिवेशेनेति वाच्यम् । वह्न्यंयसंयोगेन साध्यतायां स्वप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोरेकत्राधेयत्वे विरहेण वैशिष्ट्याप्रसिद्ध्याऽभावाऽप्रसिद्ध्याऽव्याप्तेः । व्यधिकरणसंयोगादिसम्बन्धेन रूपस्य साध्यतायां व्यभिचारिणि साध्याभावस्य लक्षणाऽघटकतयाऽतिव्याप्तेर्दुर्वारत्वाच्च ।

यथाश्रुतानुगमस्तु—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपितवृत्तितात्वव्यापकतादृशोभयाभावप्रतियोगितानिरूपितपरंपरयावच्छेदकतावत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकेत्यादिः ।

नव्यास्त्विति । तथाच काले घटवान् महाकालत्वादित्यत्र कालिकसम्बन्धेन गगनाभावप्रतियोग्यधिकरणयावद्धेत्वधिकरणाऽप्रसिद्ध्या स्वपदेन गगनाभावो नैव गृहीतुं शक्यते किन्तु घटाभाव एव, तत्प्रतियोग्यधिकरणयावद्धेत्वधिकरणस्य प्रसिद्धत्वात्, एवं च स्वप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो यः घटाद्यभावस्तदन्यत्वं गगनाभावे इति तत्र प्रतियोगिवैयधिकरण्यप्रसिद्धिः । अनुगमस्तु—हेत्वधिकरणत्वव्यापकप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकमित्यादि । व्यापकत्वं च प्रतियोगितायां स्वावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाधिकरणतावत्त्वसम्बन्धेनेति । एवं—यथाश्रुतार्थपरित्यागे । यद्धर्मेति । साध्यतावच्छेदकेत्यर्थः । तथाच सम्बन्धान्तरेण साध्याभावमादाय सर्वत्र सद्धेतौ

---

(१) यद्यदितिवीप्सादराद् धूमवान् वह्नेरित्यादौ नातिव्याप्तिः ।

न्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद् व्याप्तिरस्तु, तथाच घटवान् महाकालत्वादित्यादौ समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरणः सम्भवतीति वाच्यम् । घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः, केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वाऽसम्भवात् । तादात्म्येन तथाविधानधिकरणत्वसम्भवेऽपि दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यादावव्याप्तिरिति प्राहुः ।

लक्षणसमन्वयः । समवायेन घटाभावोऽपीति ।

[ क ] ननु एतल्लक्षणस्याऽभावाघटिततया कथमेतद्ग्रन्थसङ्गतिरिति चेन्न ।

[१]अनुगमशरीरेऽभावनिवेशाभिप्रायेण तथोक्तेः । अनुगमस्तु—सम्बन्धविशिष्टान्यसाध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमिति । वै० स्वतादात्म्य—स्वावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतावद्भिन्नहेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन ।

[२]केचित्तु प्रतियोगिताविशिष्टान्यप्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमिति । वै० स्वावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतावद्भिन्नहेत्वधिकरणवृत्त्यभावीयत्व—स्वतादात्म्योभयसम्बन्धेनेत्याहुः ।

[३]अन्ये तु उदक्षरतावारणाय स्वप्रतियोगितावच्छेदकयत्संम्बन्धेन यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तद्वृत्त्यभावीयप्रतियोगितावच्छेदकसम्बन्धान्यसाध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्येत्यर्थस्थाऽवश्यं वाच्यतयैतल्लक्षणस्याप्यभावघटितत्वान्नासङ्गतिरित्याहुः ।

**घटवृत्तित्वविशिष्टेति** । ननु द्रव्यत्वसाध्यकेऽप्यव्याप्तिसम्भवे घटवृत्तित्वविशिष्टेत्यस्य वैयर्थ्यमिति चेन्न । विशेषरूपेण संसर्गतामते पटानुयोगिकसमवायेन पटादौ द्रव्यत्वाधिकरणत्वस्य प्रसिद्धस्य घटादावनधिकरणत्वसत्त्वेन यत्पदेन धर्तुं शक्यतयाऽव्याप्तिविरहात् । न च तथोक्तौ तत्स्थलेऽपि तद्घटानुयोगिकसमवायेन तस्याधिकरणत्वं तद्घटे एव अनधिकरणत्वस्याऽपरघटे सत्त्वेनाऽव्याप्तिवारणसम्भव इति वाच्यम् । तद्घटवृत्तित्वविशिष्टद्रव्यत्ववान् तद्घटत्वादित्यत्राव्याप्तिदाने तात्पर्यात् । ननु तादात्म्येन घटवृत्तित्वविशिष्टद्रव्यत्वस्य तादृशद्रव्यत्वे एव सत्त्वेनाऽनधिकरणत्वस्य हेतुमति सत्त्वेनाऽव्याप्तिवारणसम्भव इत्यत आह **तथाविधानधिकरणत्वसम्भवेऽपीति** । **दधित्वविशिष्टेति** । वैशिष्ट्यं चात्र समवायघटितसामानाधिकरण्यसम्बन्धेन, समवायेन दधित्वाधिकरणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य तादात्म्येन साध्यतेति यावत् । स्थूलपदं च व्यभिचारवारणाय, अन्यथा दधित्वस्य द्व्यणुकरूपदधिनि सत्त्वेन तत्र साध्याभावात्, परमाणौ दधित्वाभावात्, तथाच दधिपदेन द्व्यणुकादीनामेव धारणेन तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टः प्रमेयः त्रसरेण्वादिकं तेषां तादात्म्येन तेष्वेव सत्त्वेन द्व्यणुकेऽसत्त्वात्, तदुपादाने तु स्थूलदधित्वस्यापि द्व्यणुकेऽसत्त्वान्न व्यभिचारः । एवं दधिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य संयोगेन साध्यतायामपि न व्यभिचारः स्यात्, यादृशान्त्यावयविदध्ना सह कस्य-

तादृशसम्बन्धसामान्ये इति । अस्य पूर्ववदर्थो बोध्यः । कुत्रचित्साध्यतावच्छेदकसम्बन्धसामान्ये इत्येव पाठः । विवक्षितत्वादिति । अभावान्तमूलग्रन्थेनेत्यादिः, तथाच साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तादृशप्रतियोगितानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः। सम्बन्धसामान्ये इत्युक्तौ कालिकसम्बन्धे धूमप्रतियोगिकत्वाऽयःपिण्डा योगिकत्वोभयसत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरतः साध्यतावच्छेदकेति । समवायिनः संयोगेन साध्यतायां जातिमत्त्वादावतिव्याप्तिः, साध्यतावच्छेदकीभूतसमवायात्मकधर्मे समवायित्वावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणगुणाद्यनुयोगिकत्वोभयसत्त्वेन साध्याभावस्य लक्षणाऽघटकत्वादतः सम्बन्धपदम् ।

---

चिदपि संयोगो न जातः तत्र हेतोः सत्त्वेन साध्यस्याऽसत्त्वात् । दधिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य तादात्म्येन साध्यतायां पूर्वोक्तरीत्याऽन्त्यावयविदध्यन्तर्भावेण (१)व्यभिचारः स्यादिति । घटानुयोगिकसमवायेन प्रमेयाभावस्य हेतुमति सत्त्वादत उक्तम्-दधित्वविशिष्टेति । ननु दध्यन्तरानुयोगिकसमवायेन तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्य दध्यन्तरे एव सत्त्वेन तदभावस्यैतद्दध्नि सत्त्वात्कथमव्याप्तिरिति चेद् । एवमपि गगनाभाववृत्तित्वविशिष्टगगनाभावस्य तादात्म्येन साध्यतायामव्याप्तेर्दुरुद्धरत्वात्(२) । दीधितौ निरुक्तेति । यादृशप्रतियोगितावच्छेदकविशिष्टेत्यर्थः । तथाचेति । वह्निमान् धूमादित्यत्र घटाभावमादाय लक्षणसमन्वयः, साध्यतावच्छेदकीभूतसंयोगसामान्ये यादृशप्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नप्रतियोगिकत्वधूमवत्पर्वतानुयोगिकत्वोभयाभावसत्त्वात्, तादृशप्रतियोगितानवच्छेदकत्वस्य वह्नित्वे सत्त्वात् । उभयसत्त्वादिति । उभयाभावविरहेण गगनाभावमादाय अतीताऽनागतव्यक्तित्वावच्छिन्नाभावमादाय वाऽतिव्याप्तिरिति या

---

(१) केचित्तु अन्त्यावयविभिन्नत्वं हेतौ विशेषणीयमतो न व्यभिचार इति प्राहुः ।

(२) न च विशेषरूपेण संसर्गतानङ्गीकारे एवोक्ताव्याप्तिरिति वाच्यम् । घटवृत्तित्वविशिष्टद्रव्यत्वसाध्यतानुरोधेन विशेषरूपेण संसर्गतायाः जगदीशेनैव स्वीकृतत्वात् । यदि अन्यसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्याऽन्यसम्बन्धेन सत्त्वास्वीकारान्नोक्तदोषः, तदस्वीकारे वाऽन्त्यावयविभिन्नत्वविशिष्टस्थूलदधित्वस्यैव हेतुत्वमित्युक्तदोषवारणमिति विभाव्यते, तदापि विशेषरूपेण संसर्गतामादाय न दोष इति चेन्न । तद्दधिवृत्तित्वविशिष्टप्रमेयवान् तद्दधित्वादित्यत्राव्याप्तिदाने तात्पर्यात् । तत्र वृत्तिता संयोगसमवायतादात्म्यान्यतमसम्बन्धावच्छिन्ना, साध्यतापि अन्यतमसम्बन्धावच्छिन्ना, अथवा तादात्म्यसम्बन्धावच्छिन्ना, तथाच तादृशसाध्याधिकरणता दध्येव, घटवृत्तित्वविशिष्टवाच्यत्वाधिकरणता घट एव, एवं च दध्यन्तरानुयोगिकसमवायेन तादृशाधिकरणत्वाभावमादायाऽव्याप्तिसङ्गतिः । न च विषयितासम्बन्धेन तादृशसाध्याधिकरणत्वस्य ज्ञाने एव सत्त्वेनाऽनधिकरणत्वस्य हेतुमति सत्त्वेन नोक्ताव्याप्तिरिति वाच्यम् । तस्याः संसर्गत्वास्वीकारात् ।

केचित्तु ज्ञानत्वज्ञानान्यतरस्य समवायेन साध्यतायां जन्यज्ञानत्वहेतुकेऽव्याप्तिः, तथाहि जन्यज्ञानरूपहेत्वधिकरणे तादृशसाध्यस्य सकलसम्बन्धेन सत्त्वादिति वदन्ति । तन्न । दिक्कृतविशेषणतया तादृशसाध्यस्याऽसत्त्वेनाव्याप्तिविरहादिति ध्येयम् ।

यद्धर्मावच्छिन्नसंसर्गताकप्रकृतसाध्यानुमितिः फलं तद्धर्मावच्छिन्नसम्बन्धसामान्ये इति तु फलितार्थः।

घटीयसंयोगे पर्वतीयसंयोगे वा हेतुमन्महानसानुयोगिकत्ववह्नित्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्वाद वह्निमान् धूमादित्यादावव्याप्तिरतः प्रथमं सामान्यपदम्, तथाच महानसीयवह्निसंयोगे तादृशोभयाभावविरहान्नाव्याप्तिः। संयोगसामान्य एव हेतुमदयोगोलकानुयोगिकत्वधूमत्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्त्वाद् धूमवान् वह्नेरित्यादौ नातिव्याप्तिः।

संयोगसामान्ये एव समवायनिष्ठपर्वतानुयोगिकत्वस्य वह्नित्वावच्छिन्नप्रतियोगिकत्वस्य च द्वयोरभावसत्त्वात्तथैवाऽव्याप्तिरतः सामान्योभयेति। सामान्यपदमुभयत्र(१)ऽन्वितमिति भावः। तादृशोभयाभावश्च स्वरूपसम्बन्धेन बोध्यः, तेन समवायादिना तदुभयाभावस्य सम्बन्धमात्रे सत्त्वेऽपि सद्धेतौ नाव्याप्तिः। एतद्घटवान् कालान्तरीयतद्घटत्वादित्यादौ एतवत्।

घटीयसंयोगे इति। अत्र साध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्धे इत्युक्तौ तु आह पर्वतीयसंयोगे इति। सामान्यपदोपादाने तु सामान्यान्तर्गतमहानसीयसंयोगे उभयाभावविरहेण यादृशप्रतियोगितापदेन वह्नित्वावच्छिन्नप्रतियोगिताया धर्तुमशक्यतया नाव्याप्तिरिति भावः। समवायेन साध्यतायां लक्षणगमनान्नाऽसम्भवोऽभिहितः, समवायस्यैक्यात्। तथाच साध्यतानिरूपितकिञ्चित्सम्बन्धावच्छिन्नावच्छेदकताश्रयसामान्ये इत्यर्थः। साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टावच्छिन्नसामान्ये इति यावत्। तेन स्वसमवायिसंयोगात्मकपरम्परासम्बन्धेन लौहित्यादेः साध्यतायां विलक्षणस्फटिकत्वहेतौ साध्यतावच्छेदकसम्बन्धत्वाक्रान्ते समवाये हेत्वधिकरणविलक्षणस्फटिकाद्यनुयोगिकत्वस्य संयोगे च लौहित्यादिप्रतियोगिकत्वस्याऽभावप्रयुक्तोभयाभावसत्त्वेऽपि नाऽव्याप्तिः, तत्र सांसर्गिकविषयतायाः परम्पराघटकयावद्वस्तुष्वेव पर्याप्ततया तदाश्रयप्रत्येकवृत्तिधर्मावच्छेदेनोभयाभावसत्त्वेऽपि तत्पर्याप्त्यवच्छेदकतावद्वस्तुवृत्तिधर्मावच्छेदेनोभयाभावाऽसत्त्वात्। द्वयोरभावसत्त्वादिति। एवं प्रतियोगिकत्वेऽपि सामान्यपदस्यान्वयः, तेन समवायनिष्ठवह्निप्रतियोगिकत्वघटितोभयाभावस्य संयोगसामान्ये सत्त्वेऽपि वह्निमान् धूमादित्यादौ नाऽव्याप्तिः। अत्र वह्निधूमोभयवान् धूमादित्यादौ सम्बन्धसामान्ये एव तादृशोभयत्वावच्छिन्नप्रतियोगिकत्वाऽप्रसिद्ध्याऽभावान्तरमादाय लक्षणसमन्वयसम्भवान्नासम्भव उक्त इति बोध्यम्। तादृशोभयाभावश्च—यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्यहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्यैतदुभयाभावश्चेत्यर्थः। स्वरूपसम्बन्धेन बोध्य इति। स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको बोध्य इत्यर्थः। तदुभयाभावस्य हि व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकतयेति शेषः। वह्निधूमोभयसाध्यकसद्धेतौ अव्याप्त्यभावादाह सद्धेतौ नाव्याप्तिरिति। ननु लाघवात् यादृशप्रति-

(१) तथाच सामान्येत्यस्य प्रतियोगिकत्व अनुयोगिकत्वे चान्वयः।

द्घटत्वावच्छिन्नप्रतियोगिकत्वविशिष्टकालान्तरीयतद्घटानुयोगिकत्वाप्रसिद्धेरभावान्तरमादायातिव्याप्तिः, गगनप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वाऽप्रसिद्ध्या गगनाभावमादाय प्रकृताऽव्याप्तिवारणाऽसम्भवश्च स्यादतो निरुक्तप्रतियोगिकत्वविशिष्ट(१)यत्किञ्चिद्धेत्वधिकरणानुयोगिकत्वसामान्याभावं परित्यज्य तदुभयसामान्याभाव उक्तः।

न च यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वविशिष्टसम्बन्धसामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धत्वस्य, तथाविधसम्बन्धसामान्ये वा यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य व्यतिरेकः तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदकस्य कथं नोक्तमिति वाच्यम्। द्रव्यवान् प्रमेयत्वादित्यादौ संयोगेन साध्यतायामतिव्याप्त्यापत्तेः, प्रमेयानुयोगिकसामान्यस्यैव द्रव्यत्वावच्छिन्नप्रतियोगिकत्वेन साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम्। एवं च कालिकसम्बन्धसामान्ये महाकालानुयोगिकत्वसत्त्वेऽपि गगनप्रतियोगिकत्वविरहाद् गगनाभाव एव घटवान् महाकालत्वादित्यादौ प्रतियोगिव्यधिकरणतया प्रसिद्ध इति भावः।

ननु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वं यदि तद्वृत्तित्वं तदा योगितावच्छेदकावच्छिन्नप्रतियोगिकत्वविशिष्टहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभाव एव कुतो नोक्तः, वह्निमान् धूमादित्यादौ च कालिके एव विशिष्टप्रसिद्धिरिति चेत्तत्राह—एतद्घटवानित्यादि। अभावान्तरमादायेति। कालान्तरीयतद्घटासमानतद्घटाविषयकज्ञानाभावमादायेत्यर्थः। एवं च तादृशज्ञानाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वविशिष्टहेत्वधिकरणतद्घटानुयोगिकत्वस्य विषयतायां प्रसिद्धत्वेन तादृशविशिष्टाभावः कालिके सुलभ एव, विभिन्नकालीनयोर्विषयतातिरिक्तसम्बन्धेनैव नाधाराधेयभाव इति नियमात्। प्रकृताऽव्याप्तिवारणाऽसम्भवश्च स्यादिति। न च महाकालाभावमादायैव ऽव्याप्तिवारणं सम्भवति, तादात्म्ये प्रसिद्धस्य महाकालानुयोगिकत्वविशिष्टमहाकालप्रतियोगिकत्वस्याभावः कालिकादावस्तीति कथमव्याप्तिरिति वाच्यम्। तादात्म्यकालिकान्यतरसम्बन्धेन संसर्गतास्थलेऽभावस्य तादृशस्याप्रसिद्धेरिति।

तथाविधसम्बन्धसामान्ये वा—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये वा इत्यर्थः।

तद्वृत्तित्वम्—हेत्वधिकरणवृत्तित्वम्, वृत्तिता सम्बन्धसामान्येन। अयोगोलकवृ-

(१) ननु विशिष्टाभावापेक्षयोभयाभावप्रवेशे किं गौरवम्, प्रत्युत विशिष्टाभावप्रतियोगितावच्छेदककोटौ सामानाधिकरण्यप्रवेशे गौरवमिति चेन्न।

अद्वये द्वित्वस्याऽपेक्षाबुद्धिविशेषविषयत्वरूपतया तस्याऽवच्छेदकत्वे बहुष्ववच्छेदकत्वप्रसङ्गेन गौरवाद्, अवच्छेदकताबाहुल्ये संसर्गताया बाहुल्यप्रसङ्गात्, तदपेक्षया सामानाधिकरण्यत्वावच्छिन्नैकगुरुसंसर्गताप्रवेशे एव लाघवादिति ध्येयम्।

धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमप्रतियोगिकस्यापि संयोगस्य कालिकसम्बन्धेनाऽयोगोलकवृत्तित्वात्, यदि च साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामको यः सम्बन्धः तेन हेत्वधिकरणवृत्तित्वमेव तदनुयोगिकत्वम्, तदा संयोगेन द्रव्यस्य साध्यतायां द्रव्यजात्यन्यतरत्वादावतिव्याप्तिः, जातौ समवायेन वृत्तेरप्रसिद्धेः।

न च साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये निरुक्तोभयाभाववत्त्वं विवक्षितम्, तत्र च हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव वाच्यमिति सांप्रतम्। 'अत एवे'त्यादिवक्ष्यमाणग्रन्थाऽसङ्गतिप्रसङ्गात्। समवायस्यैकत्वेऽपि तदवच्छिन्नाधिकरणतायां निरुक्तोभयाभावसत्त्वेन द्रव्यं जातेरित्यादावतिव्याप्त्यभावादिति चेन्न। संयोगः पर्वते वह्नेः सम्बन्धो, न तु वह्नौ पर्वतस्येत्यादिप्रतीत्या हि किञ्चित्प्रतियोगिककिञ्चि

---

त्त्वादिति। संयोगे धूमप्रतियोगिकत्वाऽयोगोलकानुयोगिकत्वोभयसत्त्वेन धूमाभावस्य लक्षणाघटकतया असमानकालीनतत्तद्व्यक्तित्वावच्छिन्नाभावमादायाऽतिव्याप्तिरित्यर्थः। **साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामको यः सम्बन्ध इति।** विशेष्यतासम्बन्धेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धिं प्रति साध्यतावच्छेदकसंयोगस्य समवायेन कारणत्वम्, एवं च विशेष्यतासम्बन्धेन तादृशबुद्धेः पर्वते सत्त्वेन तत्र संयोगस्यापि समवायेन सत्त्वान्नातिव्याप्तिः, तथाच तादृशबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वं यदीत्यर्थः।

[१]नन्वेतादृशार्थकरणेऽपि कालिकसंयोगोभयसम्बन्धेन धूमसाध्यकवह्निहेतावतिव्याप्तिः, साध्यतावच्छेदकसम्बन्धसामान्येऽयोगोलकवृत्तित्वस्य तादृशप्रतियोगिकत्वस्य च सत्त्वात्, साध्याभावीयप्रतियोगिताया धर्तुमशक्यतयाऽयोगोलकासमानकालीनपदार्थाभावस्यैव तथात्वादिति चेन्न।

इष्टत्वात्। एतत्कल्पे दीधितिकृतैवोभयसाध्यकेऽतिव्याप्तेर्वक्ष्यमाणतया तुल्ययुक्त्या तथैव उभयसम्बन्धेन साध्यतायामपीति(१)।

---

(१) केचित्तु साध्यतावच्छेदकसंसर्गतावच्छेदकयद्धर्मावच्छिन्ननिरूपकतानिरूपितानुयोगितासामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितानिरूपकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वोभयाभावः तादृशेत्यादेर्विवक्षणान्नातिव्याप्तिः, वह्निप्रतियोगिकसंयोगानुयोगिपर्वतनिष्ठानुयोगितायां संसर्गीयप्रतियोगितानिरूपितत्वस्य सर्ववादिसिद्धत्वात्। धूमत्वावच्छिन्नप्रतियोगितानिरूपितकालिकसंयोगोभयसम्बन्धावच्छिन्ननिरूपकतानिरूपितानुयोगितायां पर्वतनिष्ठत्वसत्त्वेऽपि अयोगोलकवृत्तित्वविरहेणोभयाभावसत्त्वात्। न चैतत्कल्पे समवायस्यैक्यमते विशिष्टसासाध्यकातिव्याप्तिदानमसंगतम्, समवायस्यैक्येपि यादृशानुयोगितायां विशिष्टसत्तात्वावच्छिन्नप्रतियोगितानिरूपितत्वमस्ति तादृशानुयोगितायां गुणनिष्ठत्वविरहेणोभयाभावसत्त्वादिति वाच्यम्। एतदनुरोधेनैवोभयसाध्यकानुसरणस्य करिष्यमाणत्वात्।

अथवा साध्यतावच्छेदकसम्बन्धपदेन साध्याधिकरणानुयोगिकसम्बन्धसामान्ये तादृशोभयाभावस्य साध्यतावच्छेदकसम्बन्धसामान्ये वा साध्याधिकरणानुयोगिकत्वघटितोभयाभावस्य वा विवक्षणात्सर्वसामञ्जस्यमिति प्राहुः।

दनुयोगिकसम्बन्धत्वमनुभवसिद्धम् कुत्रचिदेव संयोगादौ न तु सर्वत्र, तच्च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत्, तथाच साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिकसम्बन्धत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्य विवक्षणाद्, धूमसंयोगस्याऽयोगोलकानुयोगिकसंसर्गत्वविरहादेव नातिप्रसङ्गः, तत्र यथार्थविशिष्टधीनियामकस्यैव तदनुयोगिकसम्बन्धत्वात्।

एतेन वह्निमान् वह्निरूपादित्यादावतिव्याप्तिः, पर्वतवह्निसंयोगे एव

---

नन्वत्र साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामकसम्बन्धनिवेशेऽपि कालिकसंयोगोभयसम्बन्धेन घटसाध्यकमहाकालत्वहेतुकेऽव्याप्तिः, तथाहि साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतसंयोगे गगनप्रतियोगिकत्वसाध्यतावच्छेदकसंसर्गतानियामककालिकसम्बन्धावच्छिन्नमहाकालनिरूपितवृत्तित्वरूपमहाकालानुयोगिकत्वस्य च सत्त्वात् गगनाभावस्यापि लक्षणाऽघटकत्वादिति चेन्न। साध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये तादृशोभयाभावस्यप्रिमनिवेशेनैव वारणात्।

कुत्रचिदेव संयोगादाविति। येन संयोगादिना यत्र यस्य विशिष्टधीः प्रमा तादृशसंयोगादावेव तदनुयोगिकतत्प्रतियोगिकसम्बन्धत्वं न तु यावत्संयोगादौ अननुभवात्, तच्च प्रतियोगिकत्वं अनुयोगिकत्वं चेत्यर्थः। स्वरूपसम्बन्धविशेष इति। विशेषत्वं च अभावीयप्रतियोगित्वव्यावृत्तम्, तेनाऽयोगोलकानुयोगिकसंयोगस्य तादृशसंयोगवाह्निमधूमादिभेदात्मकत्वेऽपि न धूमादिप्रतियोगिकत्वं किन्तु महानसाद्यनुयोगिकसंयोगस्यैवेति नातिव्याप्तिः। तथाचेति। [१]ननु निरुक्तप्रतियोगिकत्वघटितोभयाभावनिवेशेनव ग्रन्थोक्तदोषवारणसम्भवे प्रथमादिशि सम्बन्धत्वप्रवेशो व्यर्थ इति चेन्न।

कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य स्वरूपाभावस्य स्वरूपेण साध्यतायां आत्मघटान्यतरत्वहेतौ स्वरूपाभावाभावस्य निखिलस्वरूपात्मकतया साध्यतावच्छेदकस्वरूपाख्यसम्बन्धे साध्याभावप्रतियोगिप्रतियोगिकस्य हेत्वधिकरणघटानुयोगिकसम्बन्धत्वस्य च सत्त्वेनाऽभावान्तरमादायाऽतिव्याप्तेः, तन्निवेशे च यादृशस्वरूपे हेत्वधिकरणानुयोगिकसम्बन्धत्वं तत्र स्वरूपाभावप्रतियोगिकत्वं नास्ति, पूर्वन्तु स्वरूपात्मकाभावप्रतियोगिप्रतियोगिकत्वं निखिलस्वरूपे आसीत्, सम्बन्धत्वप्रवेशे तु तन्न निखिलस्वरूपे इति विशेषः। द्वितीयदिशि सम्बन्धत्वाप्रवेशे तु घटाभावस्य प्रतियोगितासम्बन्धेन साध्यतायां घटाभावत्वहेतुकेऽतिव्याप्तिः, तादृशप्रतियोगितासम्बन्धे साध्यप्रतियोगिकसम्बन्धत्वस्य हेत्वधिकरणघटाभावनिष्ठाभावत्वरूपानुयोगितानिरूपितत्वस्य च सत्त्वात्, साध्याभावस्य लक्षणाघटकत्वात्, तन्निवेशे तु घटाभावानुयोगिकसम्बन्धत्वविरहादुभयाभावस्य तादृशप्रतियोगितासम्बन्धे सत्त्वान्नातिव्याप्तिरिति। ननु धूमप्रतियोगिकसंयोगादौ अयोगोलकानुयोगिकसंसर्गत्वविरहः कुत इत्यत आह तत्रेति। धूमप्रतियोगिकसंयोगस्यायोगोलके भ्रमात्मकविशिष्टधीनियामकतया तदनुयोगिकसम्बन्धत्वापत्तिरतो यथार्थेति।

एतेन-हेत्वधिकरणानुयोगिकसम्बन्धत्वघटितोभयाभावस्य प्रवेशेन। वह्न्यनुयोगि-

धूमसंयोगे वह्न्यधिकरणाऽयोगोलकानुयोगिकत्वस्य, चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य, गुणकर्मान्यत्वविशिष्टसत्तासमवायेच जात्यधिकरणगुणानुयोगिकत्वस्य विरहान्नातिप्रसङ्गः ।

---

वह्निप्रतियोगिकत्वहेत्वधिकरणीभूतवह्न्यनुयोगिकत्वोभयाभावविरहेण वह्निसामान्याभावस्य लक्षणाऽघटकत्वादित्यपास्तम् । पर्वतवह्निसंयोगस्य हेतुमद्वह्निवृत्तित्वेऽपि वह्न्यनुयोगिकसम्बन्धत्वविरहेण तत्र तादृशोभयाभावसत्त्वात् । इदन्त्ववधेयम् । यत्रैकसंयोगव्यक्त्या यत्पदार्थयोः परस्परे विशिष्टधीः प्रमा तत्र तयोरेकस्मिन् संयोगेन साध्ये तदीयरूपादौ व्यभिचारिण्यतिव्याप्तिः, तदुभयसंयोगस्य निरुक्तोभयाभावविरहादिति ।

यत्किञ्चिदित्यस्य फलमाह—धूमसंयोगे इति । अन्यथा वह्न्यधिकरणमहानसानुयोगिकत्वधूमप्रतियोगिकत्वोभयस्यैव धूमसंयोगे सत्त्वेन धूमाभावस्य प्रतियोगिवैयधिकरण्याभावेन धूमवान् वह्नेरित्यादावतिप्रसङ्गः स्यादिति भावः। षष्ठ्यन्तत्रयं विरहादित्यन्वयि ।

निरुक्तपदस्य छलतः फलमाह चैत्रान्यत्वेति । निरुक्तपदानुक्तौ चैत्रान्यत्वविशिष्टैतद्दण्डवान् एतद्दण्डादित्यत्र चैत्रवृत्तिएतद्दण्डसंयोग एव चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयाभावविरहात्तादृशदण्डाभावस्य लक्षणाऽघटकतयाऽतिव्याप्तिः स्यात्, तदुपादाने तु चैत्रान्यत्वविशिष्टैतद्दण्डत्वावच्छिन्नप्रतियोगिकत्वस्याभावादेव तत्रोभयाभावसम्भव इति नातिव्याप्तिरिति भावः ।

यदि च प्रतियोगिता प्रत्याश्रयं नानैव नत्वेकेति मतम्, तदा चैत्रान्यत्वविशिष्टदण्डत्वावच्छिन्नं यच्चैत्रावृत्तिदण्डनिष्ठं प्रतियोगित्वं तदाश्रयप्रतियोगिकत्वहेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयाभावस्य संयोगसामान्ये एव सत्त्वान्निरुक्तपदं विनापि नातिव्याप्तिः सम्भवतीति तन्मतसाधारण्येनाऽतिव्याप्तिरक्षणार्थमुक्तमेतदिति । यद्यनुयोगिता प्रत्याश्रयं नानैव नत्वेकेति मतम्, तदा दण्डसामान्यस्य हेतुत्वे एतद्दण्डप्रतियोगिकसंयोग-

---

कसम्बन्धत्वविरहेणेति । पर्वतवह्निसंयोगेन वह्निमान् पर्वत इति यथार्थविशिष्टधीनियामकस्यैव पर्वतानुयोगिकसम्बन्धत्वात्, न तु पर्वतवह्निसंयोगेन वह्निमान् वह्निरिति यथार्थविशिष्टधीः, तन्नियामकस्य वह्न्यनुयोगिकसम्बन्धत्वविरहात् निरुक्तबुद्धेर्भ्रमत्वादिति भावः ।

तयोरेकस्मिन् संयोगेन साध्ये इति । एतदङ्गुलीयवान् एतद्रूपादित्यादौ ।

अन्यथा—यत्किञ्चित्पदादाने । प्रतियोगिवैयधिकरण्याभावेनेति । तथाचाऽभावान्तरमादायाऽतिव्याप्तिरिति भावः । यत्किञ्चित्पदोपादाने तु यत्किञ्चिद्धेत्वधिकरणीभूताऽयोगोलकानुयोगिकत्वविरहान्नातिव्याप्तिः । चैत्रान्यत्वविशिष्टेति । यत्र एकस्या एव दण्डव्यक्तेः चैत्रचैत्रान्योभयवृत्तित्वं तादृशदण्डव्यक्तेः साध्यता । तन्मतसाधारण्येनेति ।

सामान्ये एव दण्डान्तराधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावादे-वोभयाभावसत्त्वादतिव्याप्तिविरहः स्यादतो हेतावेतदिति ।

संयोगेन साध्यतायां निरुक्तपदव्यावृत्तिमुक्त्वा समवायेन साध्यतायां तामाह गुणकर्मान्यत्वेति । इदं च समवायस्य नानात्वमभिप्रेत्य, तस्यैकत्वे तु तत्र गुणानुयोगिकत्वविशिष्टसत्ताप्रतियोगिकत्वोभयसत्त्वेनाऽतिव्याप्ति-तादवस्थ्यात् ।

यद्यपि 'यादृशप्रतियोगितावच्छेदकावच्छिन्ने'त्याद्युक्तौ वह्निधूमोभय-वान् धूमादित्यत्राऽव्याप्तिः, संयोगसामान्ये एव वह्निधूमोभयत्वावच्छिन्न-प्रतियोगिकत्वधूमाधिकरणपर्वतानुयोगिकत्वोभयाभावसत्त्वात् । न च नि-रुक्तप्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रमायां सांसर्गिकविषयत्वमेव नि-रुक्तप्रतियोगिकत्वं वक्तव्यम्, तच्च पर्वते वह्निधूमयोः प्रत्येकसंयोगद्वयेऽप्य-स्तीति नाव्याप्तिः, अन्यथा पर्वतः संयोगेन वह्निधूमोभयवानिति प्रमाया दुर्घटत्वापत्तेरिति वाच्यम् । तथासति 'अतएवे'त्यादिना वक्ष्यमाणाया वह्निधूमोभयवान् वह्नेरित्यत्राऽतिव्याप्तेरसङ्गत्यापत्तेः, वह्निधूमोभयवत्ता-प्रमानियामकसंयोगमात्रस्यैव हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वा-भावेन वह्निधूमोभयत्वावच्छिन्नाभावमादायैवाऽतिव्याप्त्यसम्भवात् । त-थापि साध्यसाधनभेदेन व्याप्तेर्भेदाद् व्यासज्यवृत्तिधर्मेण साध्यतायां नि-रुक्तपदमपहाय यादृशप्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावस्यैव प्रवेशान्नोक्तस्थलाऽव्याप्तिः । न चैवमुभयत्वेन साध्यतायां व्यभिचारिण्य तिव्याप्तिः । तद्दोषस्य 'अत एवे'त्यादिना वह्निधूमोभयवान् वह्नेरित्यादौ

---

न चैवंरीत्या कपिसंयोगी एतत्त्वादित्यादावव्याप्तिभयेन तन्मतस्याऽनादरणीयत्वमिति चेन्न । स्ववृत्तितावच्छेदकावच्छिन्नत्वस्वावृत्तित्वोभयानवच्छिन्नत्वस्यैव प्रतियोगितायां विवक्षणीय-त्वात् । स्वं—हेत्वधिकरणम्, तथाच कपिसंयोगाभावप्रतियोगितायां तादृशोभयसत्त्वादभावान्तर मादाय नाव्याप्तिः । प्रकृते तु व्यभिचारिस्थलघटितोभयाभावसत्त्वान्नासङ्गतिरिति ध्येयम् ।

धूमाधिकरणपर्वतानुयोगिकत्वोभयाभावसत्त्वादिति । उभयत्वावच्छिन्नप्र-तियोगिकैकसंयोगविरहात्, पर्वतः संयोगेन वह्निधूमोभयवानिति प्रतीतेस्तु तत्तत्संयोगा-वगाहित्वेनैवोपपत्तेरिति भावः । अन्यथा—प्रत्येकप्रतियोगिकसंयोगस्य प्रमानिरूपितसांसर्गि-कविषयत्वानभ्युपगमे । प्रमायाः दुर्घटत्वात्—उभयप्रतियोगिकसंयोगस्याऽप्रसिद्ध्या वि-शिष्टप्रमायाः सांसर्गिकविषयत्वनियतत्वात्, अन्यस्य सांसर्गिकविषयत्वे प्रमात्वव्याघातादिति भावः । तथासति—तादृशप्रमीयसांसर्गिकविषयत्वस्य निरुक्तप्रतियोगिकत्वरूपत्वे । अति-व्याप्त्यभावं योजयति वह्निधूमोभयवत्तेत्यादि । हेत्वधिकरणीभूतायोगोलकानुयोगिक-त्वाभावेन उभयत्वावच्छिन्नवत्ताप्रमायाः सांसर्गिकविषयत्वं धूमप्रतियोगिकसंयोगमात्रस्य, वह्निप्रतियोगिकधूमवदनुयोगिकसंयोगस्य च, तत्रायोगोलकानुयोगिकत्वस्य अयोगोलकसंयोगे च तादृशसांसर्गिकविषयत्वस्य चाऽभावेनेत्यर्थः । व्यभिचारिण्यतिव्याप्तिरिति । सा-

ग्रन्थकृतैवाऽग्रे वक्ष्यमाणत्वादिति ।

वस्तुतः सम्बन्धस्यैकप्रतियोगिकत्वाऽपरानुयोगिकत्वनियमेन वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धत्वाऽप्रसिद्ध्यैव तदुभयत्वावच्छिन्नाभावस्य लक्षणाघटकत्वान्नाव्याप्तिः, अत एवाग्रे वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिर्दास्यते। न च वह्निधूमोभयत्वावच्छिन्नप्रकारित्वादावेव तादृशोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धत्वप्रसिद्धिसम्भवः, प्राचां मते प्रकारित्वादौ सम्बन्धत्वाभावात् विशिष्टधीनियामकस्यैव तथात्वादिति ध्येयम् ।

नचैवमपि घटवान्नित्यज्ञानत्वादित्यत्राव्याप्तिः, विषयितासम्बन्धे गगनीयत्वनित्यज्ञानानुयोगिकत्वोभयसत्त्वेन गगनाभावमादायापि प्रसिद्ध्यसम्भवादिति वाच्यम्। तादृशसम्बन्धेन घटादेर्व्याप्यवृत्तितया तत्साध्यके

ध्यतावच्छेदकसामान्यान्तर्गतायोगोलकानुयोगिकवह्निप्रतियोगिकसंयोगे तादृशप्रतियोगिताश्रयवह्निप्रतियोगिकसम्बन्धत्वाऽयोगोलकानुयोगिकसम्बन्धत्वयोः सत्त्वादिति भावः ।

अप्रसिद्ध्यैवेति । कुत्रापि संयोगे उभयत्वावच्छिन्नप्रतियोगिकत्वविरहादप्रसिद्धिर्बोध्या । अतएव—उभयत्वावच्छिन्नप्रतियोगिकत्वाऽप्रसिद्ध्या तदवच्छिन्नाभावस्य लक्षणाऽघटकत्वादेवेत्यर्थः, प्रकारित्वादौ सम्बन्धत्वाभावात् । अयमाशयः । यस्य च सम्बन्धत्वं तेन विशिष्टबुद्धिरवश्यं जन्यते, सा च मत्वर्थकेण बोध्यते, यथा वह्निमान् पर्वतो रूपवान् घट इत्यादि, नाह वह्निमज्ज्ञानं वह्निमानभाव इत्यादिः प्रामाणिकानामभिलाप इति, तथाच विषयित्वप्रतियोगित्वादीनां संसर्गता नास्ति, अस्ति च वह्निं जानामि वह्निर्नास्तीत्याद्यनुभवः, नहि तेन तेषां सम्बन्धत्वसिद्धिः, द्वितीयाप्रथमयोः सम्बन्धबोधकत्वाभावात् , ज्ञानाभावयोः प्रत्यक्षे विषयित्वप्रतियोगित्वादिकं प्रकारतयैव भासत इति । प्राचामित्यस्वरससूचनाय । स च विषयित्वप्रतियोगित्वाद्यनुपस्थितिदशायां विषयविशिष्टज्ञानप्रतियोगिविशिष्टाऽभावादिप्रत्यक्षाद्यनुत्पत्तिरिति ।

तादृशसम्बन्धेन—विषयितासम्बन्धेन । व्याप्यवृत्तितया—हेत्वधिकरणेऽवच्छिन्नवृत्तिकान्य(१)तया । [१]ननु व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे हेत्वधिकरणवृत्तिसाध्यताव

(१) यद्यपि नित्यज्ञानानुयोगिकविषयितया घटादेर्व्याप्यवृत्तित्वमस्ति तथापि विषयितया घटादेः नानुरूपारिभाषिकव्याप्यवृत्तित्वं नास्तीति भवत्येव प्रतियोगिवैयधिकरण्यघटितलक्षणलक्ष्यत्वमिति । न चैवमव्याप्तिः कथं वारणीयेति वाच्यम् । स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वमते घटवान् महाकालत्वादित्यत्रेवाऽव्याप्त्यापत्तेरिष्टत्वात् । अथवा स्वप्रतियोगितावच्छेदकसम्बन्धसामान्ये तादृशोभयाभाव एव विवक्षणीयः । एवं च नित्यज्ञानत्वहेतुकस्थले समवायेन पटाभावमादायैव लक्षणसमन्वयः । न चैवं वन्हिमान् धूमादित्यत्र समवायेन वन्ह्यभावमादायाऽव्याप्तिरिति वाच्यम् । प्रतियोगितायां पारिभाषिकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य विवक्षणात् । तथाच प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकमित्यादिः पर्यवसितार्थः । वैशिष्ट्यं च स्वनिरूपकाभावप्रतियोगितानिरूपितपरम्परावच्छेदकत्वोभयसम्बन्धेन । एवंसति समवायेन पटाभावमादाय घटवान् महाकालत्वादित्यत्रापि लक्षणसमन्वये स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु इत्यादिग्रन्थविरोधः स्यात्, यथाश्रुतार्थपरित्यागापत्तिश्चेति ध्येयम् ।

स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् ।

---

प्रतियोगिवैयधिकरण्याप्रवेशादिति ध्येयम् ।

अत्र ब्रूमः । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्याधिकरणतानिरूपितस्वरूपसम्बन्धेन यदभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतः तदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव सामञ्जस्ये निरुक्तप्रतियोगिकत्वेत्यादिखण्डशः प्रसिद्धिर्विफला, कालो घटवान् महाकालत्वादित्यादौ कालिकसम्बन्धावच्छिन्नघटाधिकरणतानिरूपितस्वरूपसम्बन्धेन पटत्वावच्छिन्नाधिकरणतासामान्याभावस्यैव हेतुमति सत्त्वेन पटत्वावच्छिन्नाभावस्यैव निरुक्तप्रतियोगिव्यधिकरणस्य सुलभत्वात् इति ध्येयम् ।

एवं यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसम्बन्धसामान्ये साध्यतावच्छेदकसम्बन्धत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्तादृशप्रतियोगिता कथं नोक्तेति चिन्तनीयम् ।

कालस्य जगदाधारत्वप्रवादमनुसृत्याह स्वरूपसम्बन्धेनेति । कालिकविशेषणतयेत्यर्थः । गगनादेरवृत्तित्वप्रवादस्तु संयोगसमवायपरः, तथाचोक्तप्रणाल्यापि गगनाभावो न प्रतियोगिव्यधिकरण इति घटवान् महाकालत्वादित्यादावव्याप्तिस्तदवस्थैवेति भावः । निरुक्तेति । प्रतियोगितावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वं हेतुमतस्तत्-

---

च्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्या कथमव्याप्तिवारणमिति चेन्न ।

साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभावस्यैव(१) निवेशेन समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्यैव तथात्वेनाऽव्याप्तिविरहात् ।

विशेषरूपेण संसर्गतामभ्युपेत्याह अत्र ब्रूम इति ।

एवं—विशेषरूपेण संसर्गतास्वीकारे । अवृत्तिगगनादिप्रतियोगिकसम्बन्धसामान्यमादायाऽव्याप्तिविरहेऽपि धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धत्वेति ।

दीधितौ गगनादेरिति । कालः सर्ववानितिप्रतीतेः संकोचे मानाभावादित्याशयः । वृत्तिमत्त्वे त्विति । अत्र तुशब्दोऽवधारणे ।

---

(१) प्रमेयवन्नित्यज्ञानत्वादित्यादावव्याप्तिवारणाय साध्यनिष्ठत्वमित्यस्य साध्यतावच्छेदकावच्छिन्ननिष्ठत्वमित्यर्थो बोध्यः । नन्वेवमपि प्रमेयवतः साध्यताया नित्यज्ञानत्वहेतुके तथाविधाभावाऽप्रसिद्ध्याऽव्याप्तिः, घटाभावीयप्रतियोगितायामपि पटत्वरूपप्रमेयावच्छिन्नत्वघटितोभयाभावस्याऽसत्त्वादिति चेन्न । साध्यतावच्छेदकावच्छिन्नत्वमपहाय साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपकत्वघटितोभयाभावस्यैव निवेशात् । वै० मसिद्धचतुष्टयसम्बन्धेन । तथाच प्रमेयत्वावच्छिन्नावच्छेदकतैव तादृशी तन्निरूपकत्वस्य घटाभावीय

दृशप्रतियोगितासामान्ये इत्यर्थः। तथाच संयोगादिना घटाद्यभावमादा· यैव घटवान् महाकालत्वादित्यत्र लक्षणसङ्गतिः । घटाभावप्रतियोगितायां धूमत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वेन धूमादेर्गुणा· दिव्यापकत्वापत्तिवारणाय सामान्येति। तथाच धूमनिष्ठतादृशप्रतियो· गितायामेव तदुभयसत्त्वाददोषः ।

यत्सम्बन्धेति । समवायिनः संयोगेन साध्यतायां घटत्वादिहेतावव्याप्तिः साधनवन्निष्ठस्य समवायेन संयोगिसामान्याभावस्य प्रतियोगितायां सं· योगसमवायोभयावच्छेद्यतासत्त्वादतो धर्मसम्बन्धयोरुपादानम्, तथाच

---

[ १ ] ननु गगनादेः स्वरूपसम्बन्धेनाऽवृत्तित्वेऽपि घटवान्नित्यज्ञानत्वादित्यत्राऽव्याप्तिः पूर्वकल्पे दुर्वारा, तदभावस्य तथात्वाऽसम्भवात्, नित्यज्ञानान्यत्वविशिष्टघटाभावस्यापि पूर्वो क्तदिशा तथात्वासम्भवात्, तथाच स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्वेऽवृत्तिमत्वे वा कल्पा· न्तरानुसरणस्यावश्यकतया 'वृत्तिमत्त्वे त्वि'त्यसङ्गतमिति चेन्न ।

[क] प्राचां नये वृत्त्यनियामकसम्बन्धस्य व्याप्यत्वव्यापकत्वघटकत्वं नास्तीत्याशयेनैव तत्सङ्गतेः ।

[ख]वस्तुतो विषयितासम्बन्धेन घटादेर्व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यस्यानुपा· देयत्वम् ।

[ग] अपरे तु 'वृत्तिमत्वे त्वि'त्यस्य वृत्तिमत्त्वेपीत्यर्थः । अपिनाऽवृत्तिमत्त्वसमुच्चयः । त· थाचाऽवृत्तिमत्वे विषयितया साध्यतायामेवोक्ताव्याप्त्या, वृत्तिमत्वे कालिसम्बन्धेन साध्यताया· मप्यव्याप्त्या कल्पान्तरानुसरणमित्याशय इत्याहुः ।

ननु स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्वे गगनादेरवृत्तित्वप्रवादोऽसङ्गत इत्यत आह--अ· वृत्तित्वप्रवादस्त्विति । कालिकसम्बन्धेन धूमत्वावच्छिन्नसम्बन्धित्वादयोगोलकस्येत्यभा· वान्तरीयप्रतियोगितायामुभयाभावसत्त्वाद् धूमवान् वह्नेरित्यत्रातिव्याप्तिरतः प्रतियोगिताव· च्छेदकसम्बन्धेनेति । प्रतियोगितावच्छेदकसम्बन्धेनेत्यत्र साध्यतावच्छेदकसम्बन्धेनेति तु न वाच्यम्, घटवान् महाकालत्वादित्यत्रैव तादृशप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः । विशि· ष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नेति । यत्सम्बन्धः— साध्यतावच्छेदकसम्बन्धः । यद्धर्मः—साध्यतावच्छेदको धर्मः। अत्र यदि यद्धर्मावच्छि· न्नत्वाभावमात्रमुच्यते समवायेन वन्ह्यभावीयप्रतियोगितायां यद्धर्मावच्छिन्नत्वाभावविरहाद् व· ह्निमान् धूमादित्यादावव्याप्तिः स्यात् । यद्धर्मावच्छिन्नत्वाभावमात्रोक्तौ संयोगेन घटाभावीय· प्रतियोगितायां यत्सम्बन्धावच्छिन्नत्वाभावविरहात्तत्रैवाऽव्याप्तिः स्यादिति । तथाच तादृशप्र तियोगितात्वव्यापकोभयाभाववत्तत्प्रतियोगितायाः परम्परयावच्छेदकतावद्धर्मावच्छिन्नसामाना· धिकरण्यम् ।

केचित्तु स्वावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववत्तादृशप्रतियोगिता· सामान्यको यो धर्मस्तद्धर्मावच्छिन्नसामानाधिकरण्यं तद्धर्मावच्छिन्नानुमित्यौपयिकी व्याप्ति· रिति फलितार्थः । अतो न तादृशव्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शानुपपत्तिरित्यर्थः ।

धर्मसम्बन्धयोरुपादानमिति ।

तदभावप्रतियोगितायां धर्मविधया समवायेन, सम्बन्धविधया संयोगेन चाऽवच्छेद्यत्वाभावान्नाव्याप्तिरिति भावः ।

अत्र च क्वचिद्यादृशसम्बन्धावच्छिन्नेत्यपि द्रष्टव्यम्, शब्दैक्यस्यानुपादेयत्वात्, तेन धूमवति तत्तत्संयोगसम्बन्धेन वह्निसामान्यभावसत्त्वेऽपि नाव्याप्तिः, तत्तत्संयोगाद्यवच्छिन्नप्रतियोगितायाः संयोगसामान्यानवच्छिन्नत्वात्, संयोगत्वस्य सम्बन्धविधयाऽवच्छेदकतावच्छेदकत्वे एव तथात्वात्। एवं यद्धर्मावच्छिन्नेत्यत्रापि क्वचिद्यादृशधर्मावच्छिन्नेति बोध्यम्, तेन दण्डिमान् दण्डिसंयोगादित्यादौ तादृशप्रतियोगितायां तद्दण्डावच्छेद्यत्वसंयोगावच्छेद्यत्वोभयाभावाऽसत्त्वेऽपि नाव्याप्तिः। प्रमेयत्वावच्छेद्यत्वविशिष्टस्वरूपसम्बन्धावच्छिन्नत्वाऽप्रसिद्ध्या प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिरतो विशिष्टाभावमपहाय तादृशोभयाभाव उक्तः।

---

[ क ] ननु तथापि धर्मविधया साध्यतावच्छेदकावच्छिन्नत्वयद्वदवच्छिन्नत्वोभयाभाव एव निवेश्यतां किं सम्बन्धावच्छिन्नत्वानिवेशेनेति चेन्न ।

विषयितावििशिष्टस्य कालिकेन साध्यतायां जन्यत्वहेतौ विषयिताविशिष्टस्य विषयितयाऽव्याप्तिरतः सम्बन्धावच्छिन्नत्वनिवेशः। एवं कालिकविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ विषयिताविशिष्टस्य विषयितयाऽभावमादायाऽव्याप्तिरतो धर्मपदम् ।

[ ख ] ननु धर्मसम्बन्धयोरुपादानेऽपि धर्मत्वं सम्बन्धत्वं चाव्यावर्त्तकमित्युक्तदोषतादवस्थ्यमिति चेन्न ।

साध्यतानिरूपिता या किंचित्सम्बन्धानवच्छिन्नावच्छेदकता तदभाववान् यः तन्निष्ठकिंचित्सम्बन्धानवच्छिन्नावच्छेदकत्वानिरूपकत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमित्यस्यार्थः। एवं साध्यतानिरूपिता या किंचित्सम्बन्धावच्छिन्नावच्छेदकता तदभाववन्निष्ठकिञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वं यद्धर्मावच्छिन्नत्वमित्यस्यार्थः ।

अत्र चेति। यद्रूपेण संयोगादेः साध्यतावच्छेदकसंसर्गत्वं तद्रूपपर्याप्तावच्छेदकताकावच्छेदकतानिरूपकत्वम्, यादृशसम्बन्धावच्छिन्नत्वमित्यस्यार्थः : वन्हिसामान्याभावसत्त्वेऽपि। तादृशप्रतियोगितासामान्यान्तःपातितत्तत्संयोगावच्छिन्नहेतुमन्निष्ठवन्हिसामान्याभावप्रतियोगितायाः संयोगावच्छिन्नत्ववह्नित्वावच्छिन्नत्वोभयवत्त्वेऽपीत्यर्थः। तथात्वात्--संयोगसामान्यावच्छिन्नत्वात्। संयोगत्वपर्याप्तावच्छेदकताकावच्छेदकतानिरूपकत्वादिति पर्यवसितार्थः। यादृशधर्मावच्छिन्नेति। यद्रूपेण धर्मविधया साध्यतावच्छेदकत्वं तद्रूपपर्याप्तावच्छेदकताकावच्छेदकतानिरूपकत्वम्। विशिष्टाभावमपहायेति ।

[ १ ] अथात्रोक्तस्थलेऽप्रसिद्धिवारणाय व्याप्यवृत्तिसाध्यकस्थले एवोभयाभावो निवेश्यताम्, अव्याप्यवृत्तिसाध्यकस्थलीयलक्षणे पुनर्विशिष्टाभावनिवेशे किं बाधकम्। न च साध्यवति स्वरूपसम्बन्धावच्छिन्नतत्तत्प्रमेयाभावसत्त्वेन सर्वेषामेव प्रमेयाणां तत्प्रतियोगित्वात्कथमस्य व्याप्यवृत्तिसाध्यकत्वमिति वाच्यम्। एवमपि गगनाभाववाच्यत्वादिरूपप्रमेयाणामप्रतियोगित्वादिति चेन्न ।

न च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नं व्यापकमित्यर्थोऽस्तु धर्मान्तरावच्छिन्नाभावाऽप्रवेशेन लाघवादिति वाच्यम्। घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः। तादृशद्रव्यत्वभेदमादाय कथञ्चित्तत्र लक्षणसमन्वयेऽपि दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्राऽव्याप्तिः, केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वाऽसम्भवात्, तत्रापि दध्यन्तरानुयोगिकसमवायादिसम्बन्धेन हेतुमतः प्रकृतसाध्यानधिकरणत्वे उक्तक्रमेणाऽपि व्यापकत्वं सुवचमिति तु विभावनीयमिति।

तेन सम्बन्धेनेति। नचैवं संयोगेनापि रूपस्य पृथिवीत्वव्यापकत्वापत्तिः, तेन सम्बन्धेन रूपाभावप्रतियोग्यधिकरणाऽप्रसिद्धेरिति वाच्यम्। तथात्वेऽपि तेन सम्बन्धेन रूपसामानाधिकरण्याऽप्रसिद्ध्यैव व्याप्तिलक्षणाऽतिव्याप्तिविरहात्, यद्धर्मेत्यत्र धर्मस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वेनाऽपि विशेषणीयत्वाद्वा।

न च वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नत्वस्याऽप्रसिद्धेः, तादृश-

---

घटत्वाभावपटत्वाभावान्यतरस्य साध्यतायां प्रमेयत्वहेतावव्याप्यवृत्तिसाध्यके विशिष्टाप्रसिद्ध्याऽव्याप्त्यापत्तेः। नह्यस्यापि व्याप्यवृत्तिसाध्यकत्वम्, साध्यवति घटत्वाभावाभावस्य पटत्वाभावाभावस्य च सत्त्वेन तत्प्रतियोगित्वस्यैव साध्ये सत्त्वात्। न च विशिष्टाभावोभयाभावमादायाऽऽत्मत्वसाध्यकस्याऽव्याप्यवृत्तिताभयेन तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकपर्यन्तानुसरणस्यावश्यकत्वेनोक्तान्यतरत्वस्य च तथात्वात्कथं तस्याऽव्याप्यवृत्तिसाध्यकत्वमिति वाच्यम्। उक्तापत्तिवारणाय प्रतियोगित्वे एव साध्यतावच्छेदकविशिष्टान्यत्वनिवेशात्। वै० स्वावच्छिन्नत्वस्वेतरावच्छिन्नत्वोभयसम्बन्धेन।

[ २ ] ननु तथापि यत्सम्बन्धावच्छिन्नतादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येव कथं नोक्तमिति चेन्न।

कालो घटवान् महाकालत्वादित्यादावव्याप्तेः, कालिकसम्बन्धावच्छिन्नाभावस्य निरुक्तप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यासम्भवात्। पुनः शङ्कते नचेति। स्पष्टमन्यत्।

**प्रतियोग्यधिकरणाऽप्रसिद्धेरिति।** अन्यसम्बन्धावच्छिन्नप्रतियोगितायामुभयाभावसत्त्वादिति भावः। ननु व्याप्तिलक्षणाऽतिव्याप्त्यसम्भवेऽपि व्यापकत्वापत्तिर्दुर्वारेत्यस्वरसादाह—**यद्धर्मेत्यत्रेति।** तथाच रूपत्वस्य संयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वाद्वारणम्। **विशेषणीयत्वाद्वेति, अतिव्याप्तिविरहादिति** पूर्वेणाऽन्वयः। **तादृशसम्बन्धस्यापि**—वृत्त्यनियामकसम्बन्धस्यापि। एतादृशाव्याप्तिवारणायेत्यादिः। वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि तादृशार्थविवक्षया तत्सम्बन्धेन साध्यता-

सम्बन्धस्याऽपि प्रतियोगितावच्छेदकत्वपक्षे एव एतन्निरुक्त्यादरात्। 'निरुक्तं प्रतियोगितासामान्ये यत्सम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वमि'ति तु न युक्तम्, वृत्त्यनियामकसम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्त्यापत्तेः।

यद्वा स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नावच्छेदकताकत्व यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वोभयाभावः तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं विवक्षितम्, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभावेऽपि प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं स-

---

यामव्याप्तिं वारयतां मतमाह निरुक्तेत्यादि। अतिव्याप्त्यापत्तेरिति। निरुक्तप्रतियोगितासामान्यं साध्यतावच्छेदकवृत्त्यनियामकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नमेव तत्र च तादृशोभयाभावसत्त्वादिति भावः।

यद्वेति। स्वं-प्रतियोगिता। तथा च संयोगेन वह्निमदभावीयप्रतियोगिता न तादृशी तदवच्छेदकवह्नेरनधिकरणत्वस्य हेतुमत्यभावात्, किन्तु समवायेन वह्निमदभावस्य संयोगादिना घटादिमदभावानां च प्रतियोगितैव तादृशी, तस्यां च तादृशोभयाभावसत्त्वेन वह्निमान् धूमादित्यादौ लक्षणं संगमनीयम्। वृत्त्यनियामकसम्बन्धेन साध्यतायां व्यभिचारिणि तादृशसाध्यतावच्छेदकसम्बन्धेन साध्यविशिष्टाभावप्रतियोगिताऽपि तादृशी तस्यां तादृशोभयसत्त्वेन नातिव्याप्तिरिति।

[ १ ] ननु यादृशप्रतियोगिताश्रयाभिन्नं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये तादृशोभयाभावस्यैव सम्यक्त्वे प्रतियोगितावच्छेदकानधिकरणत्वप्रवेशो व्यर्थः, वह्निमान् धूमादित्यादौ च घटवान्नास्तीत्यभावप्रतियोगिताश्रयघटवद्भूतलाभिन्नत्वस्य पर्वतादौ सत्त्वेन तादृशप्रतियोगितायां वह्नित्वावच्छिन्नावच्छेदकताकत्वविरहप्रयुक्ततादृशोभयाभावसत्त्वात्, व्यभिचारिणि तु धूमवान्नास्तीत्यभावमादायैवाऽतिव्याप्तिवारणसम्भवादिति चेत्।

अत्र श्रीचरणाः। एवंसति समवायेन द्रव्यत्वस्य साध्यतायां गगनत्वादिहेतौ साध्यवदभावमादायाऽव्याप्तिः स्यात्, तथाहि समवायसम्बन्धावच्छिन्नद्रव्याभावप्रतियोगित्वस्य लाघवात् समवेतद्रव्ये एव स्वीकरणीयतया तादृशप्रतियोगिताश्रयभिन्नत्वस्य गगने सत्त्वादिति(१)।

---

(१) केचित्तु वह्निमत्पर्वतो नास्तीतिप्रतीतिसिद्धाभावप्रतियोगिपर्वतभिन्नत्वस्य महानसादौ सत्त्वेन तदीयप्रतियोगितायामुभयस्यैव सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तिसङ्गात्। न च तन्निवेशेऽपि तादृशप्रतियोगितावच्छेदकपर्वतत्वानधिकरणत्वस्य महानसादौ सत्त्वेनाऽव्याप्तितादवस्थ्यमिति वाच्यम्। यादृशप्रतियोगितावच्छेदकतावदन्यत्वं हेतुमतः तादृशप्रतियोगितासामान्ये निरुक्तोभयाभावस्य विवक्षितत्वात्। अवच्छेदकता च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावत्त्वसम्बन्धेन, तथा च वह्निमत्पर्वताभावीयप्रतियोगितावच्छेदकत्वस्य पर्वतत्वे वह्नौ च सत्त्वेन तन्निरूपितावच्छेदकत्वं वह्नित्व एवेति पर्वतत्वनिष्ठावच्छेदकतायाश्च निरवच्छिन्नतया तस्या असाधारण्यात्, अत-

र्वसम्मतमेव, चैत्रो न पचतीत्यादौ वृत्त्यनियामकानुकूलत्वसम्बन्धेन पाकविशिष्टायाः कृतेरभावस्य चैत्रादावन्वयदर्शनात्, व्यभिचारिणि तु साध्यवत्सामान्याभावप्रतियोगितायामेव तादृशोभयाभावविरहान्नातिव्याप्तिरिति तु नव्याः ।

---

[ २ ] ननु तथापि स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नावच्छेदकताकत्वविशिष्टयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वाभावः तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं कथं नोक्तमिति चेत् ।

अत्र केचित् । प्रतियोगिताधर्मिकोभयाभावघटितदीधितिकारोक्तकल्पे प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिवारणाय विशिष्टाभावमपहायोभयाभावो निवेशितः, तद्वदत्रापि विशिष्टाभावमपहायोभयाभावनिवेशः कृत इत्याहुः(१) ।

[ ३ ] ननु यादृशप्रतियोगितावच्छेदकावच्छिन्नानाधिकरणं हेत्वधिकरणं तादृशप्रतियोगितावच्छेदकतासामान्ये यद्धर्मावच्छिन्नत्वोभयाभाव इत्येवोच्यताम्, अवच्छेदकताद्वयप्रवेशे गौरवादिति चेन्न ।

सामान्यपदस्य व्यापकार्थकत्वेन तादृशप्रतियोगितावच्छेदकतावृत्त्यभावाप्रतियोगित्वरूप-

---

स्तादृशं रूपं वह्नित्वगतैकत्वं तद्वृत्तिनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणमात्रे सत्त्वेन तादृशाभावमादायाऽव्याप्त्यसम्भवात् ।

(१) परे तु प्रमेयवह्निमान् धूमादित्यादौ अव्याप्तिः, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वविशिष्टयद्धर्मावच्छिन्नावच्छेदकताकत्वाभावरूपविशिष्टस्याऽप्रसिद्धेः । यद्यपि संयोगेन प्रमेयवह्निमान्नास्तीत्यभावप्रतियोगितायां संयोगावच्छिन्नावच्छेदकताकत्वस्य प्रमेयवह्नित्वावच्छिन्नावच्छेदकताकत्वस्य च सत्त्वेन विशिष्टस्यैकत्र सम्भवः, तथापि तदभावस्य गुरुधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकतया तस्याऽनङ्गीकारात् यथा वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावो नाभ्युपेयते तथा तादृशाभावोऽपि, अत एवैतत्कल्पस्यानुसरणं कृतं ग्रन्थकृता । अत एव च प्रमेयवह्निमतो विषयितासम्बन्धेनाऽभावीयप्रतियोगितायां तत्सिद्धावपि तस्याः वृत्त्यनियामकसम्बन्धावच्छिन्नत्वेन तदभावस्याऽनङ्गीकारात् । ननु सिद्धान्ते कथं प्रसिद्धिरिति चेत्, विषयितया प्रमेयवह्निमतः संयोगेन समवायेन वा योऽभावस्तदीयप्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नावच्छेदकताकत्वस्य घटवदभावीयप्रतियोगितायां संयोगसम्बन्धावच्छिन्नावच्छेदकताकत्वस्य च प्रसिद्धिः, वृत्त्यनियामकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैतत्कल्पे जगदीशेन स्वीकारात्, अन्यथा एतत्कल्पस्य प्रणयनं व्यर्थं स्यादिति ।

वस्तुतः फक्किकैव नास्ति धूमवान् वह्नेरित्यादौ धूमवदभावीयप्रतियोगितायां संयोगसम्बन्धावच्छिन्नधूमनिष्ठावच्छेदकताकत्वधूमत्वावच्छिन्नावच्छेदकताकत्वोभयमेवाऽप्रसिद्धम्, यैव धूमत्वावच्छिन्नावच्छेदकता सैव संयोगसम्बन्धावच्छिन्नापि, यदि प्रमेयत्वावच्छिन्नावच्छेदकता ध्रियते, तदा धूमत्वावच्छिन्नावच्छेदकताकत्वस्याऽसत्त्वेनाऽतिव्याप्तिरतो यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वाभावः तत्त्वमित्येव लक्षणार्थो वर्णनीयः, एवं च संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नावच्छेदकताकत्वाभावस्य सामान्यान्तर्गतधूमवदभावीयप्रतियोगितायामसत्त्वेन नातिव्याप्तिरिति फक्किकानवतारः ।

व्यापकताया गुरुतया प्रतियोगितात्वव्यापकतानिवेशे लाघवादिति(१)।

---

(१)[क] केचित्तु एकस्यैवाऽवच्छेदकतानिरूपकत्वस्य प्रवेशेन लाघवम्, सिद्धान्ते यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकताकत्वस्यैव प्रवेशः। फक्किकापक्षे प्रतियोगितानिरूपितावच्छेदकतेत्यत्र निरूपितत्वमवच्छेदकत्वैतदुभयपदार्थनिवेशः, सिद्धान्ते तयोरनिवेशेन लाघवमिति फक्किकैव नास्तीति।

[ख] अन्ये तु वह्निमान् धूमादित्यादौ महानसीयवह्निमदभावमादायाऽव्याप्तिः तत्प्रतियोगितानिरूपितावच्छेदकतासामान्ये संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नत्वोभयोः सत्त्वात्। न च सिद्धान्तेऽपि तद्दोषतादवस्थ्यमिति वाच्यम्, सिद्धान्ते तादृशप्रतियोगितासामान्ये साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वसाध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वएतादृशोभयाभावो निवेशनीयः। प्रतियोगितायां प्रथमरूपवृत्तित्वं च स्वनिरूपितावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, द्वितीयरूपवृत्तित्वं च निरूपितावच्छेदकताघटकसंसर्गतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाचोक्ताऽव्याप्त्यनवकाशादिति। न च मन्मतेऽपि तादृशप्रतियोगितावच्छेदकतायां तादृशोभयाभावो निवेशनीयः। प्रथमरूपवृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, द्वितीयरूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाच नाव्याप्तिरिति वाच्यम्। वह्निघटवान्नास्तीतिप्रतीतिसिद्धाभावमादाय वह्निमान् धूमादित्यादावव्याप्तेः, तत्र तादृशाभावीयवह्निनिष्ठप्रतियोगितावच्छेदकतायां तादृशवृत्तित्वद्वयोः सत्त्वादतः प्रतियोगितावच्छेदकतायां तादृशोभयाभावमपहाय प्रतियोगितायां निवेशितः, तथाच तादृशाभावमादाय तत्र नाव्याप्तिः तादृशप्रतियोगितायां तादृशोभयाभावसत्त्वादित्याहुः।

[ग] अपरे तु सिद्धान्ते विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तावदभावप्रतियोगितावच्छेदकीभूतसत्ताधिकरणत्वस्य गुणे सत्त्वेन तस्य लक्षणाघटकत्वादतिव्याप्तिवारणाय यादृशप्रतियोगितावच्छेदकतावदन्यत्वं हेतुमतस्तादृशप्रतियोगितासामान्ये इत्यादिनिवेशः कार्यः। अवच्छेदकतावत्ता च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरतावत्त्वसम्बन्धेन, तथाच तन्निवेशस्यावश्यकतया मन्मतेऽपि महानसीयवह्निमदभावमादाय वह्निघटवदभावमादाय चाव्याप्तिवारणसम्भवः। तथाहि—स्वपदेनैकाऽवच्छेदकता धर्त्तव्या वह्निनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य वह्नित्वगतैकत्वे सत्त्वेन तद्वृत्तिनिरूपकताकाधिकरणतावत्त्वस्य हेतुमति सत्त्वेन तादृशाभावस्य लक्षणाघटकत्वात्।

न च परम्परायाः संसर्गत्वास्वीकारे तथानिवेशासम्भवः, सिद्धान्तेपि गत्यन्तराभावात्। यदि च सिद्धान्ते प्रतियोगितावच्छेदकतावृत्तिउभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छे[illegible]त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तीया या इतरवारकपर्याप्तिसहिता यत्किंचिन्निरूपितावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नाप्रतियोगिता तन्निरूपितपरम्परावच्छेदकतावन्निरूपकताकाधिकरणतावद्भिन्नं यद्धेत्वधिकरणं तादृशप्रतियोगितासामान्ये तादृशोभयाभावस्तत्त्वमिति। यत्किंचित्पदेन निरूपकताया धारणम्। सामान्यतस्तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्भिन्नत्वस्य निवेशे वह्निमान् वह्निविषयकज्ञानमहानसीयवह्निविषयकज्ञानान्यतरत्वादित्यत्र महानसीयवह्नित्वावच्छिन्ननिरूपकताया अपि धारणतया तन्निरूपिताधिकरणतावद्भिन्नत्वस्य हेत्वधिकरणेऽसत्त्वेनाऽतिव्याप्त्यापत्तेः। तन्निवेशे तु वह्निमदभावीयप्रतियोगितानिरूपितावच्छेदकतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं वह्नित्वगतैकत्वं तदवच्छिन्नानुयोगिताकपर्याप्तीया या इतरवारकपर्याप्तिसहिता किंचिन्निरूपितावच्छेदकतात्वावच्छिन्ना प्रतियोगिता तदीयपरम्परया किंचिन्निष्ठावच्छेदकतावद्वह्नित्वावच्छिन्ननिरूपकताकाधिकरणतावद्भिन्नत्वस्य हेत्वधिकरणे सत्त्वेनाऽतिव्याप्त्यभावादित्युच्यते, तदापि फक्किकामतेऽस्माभिरपि तथैव निवेश्यते। तथाहि—तादृशोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितेत्याद्युक्तावपि त-

व्यक्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिः प्राप्ता, अभिमभेदसामान्यभेदस्तु तत्प्रतियोगितावच्छेदककुक्षौ यादृशप्रतियोगितामध्ये सकलपदार्थानां निवेशे वन्हिघटवान्नास्तीत्यभावीयप्रतियोगितावच्छेदकतावच्छेदकतावच्छेदकप्रत्येकधर्मावच्छिन्ननिरूपकतायास्तन्निवेशान्तर्गततया तन्निरूपिताधिकरणतावच्छेदकस्य तत्रासत्त्वेनाऽव्याप्त्यभावादिति चेद् । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकारे तथानिवेशस्य भवन्मतेऽयोगात्, तथाहि—धूमवान् वन्हेरित्यादौ तादृशरूपं धूमत्वगतैकत्वमेव तदवच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगितानिरूपितपरम्परावच्छेदकतानिरूपिताधिकरणतावान्नेति भेदप्रतियोगितावच्छेदकत्वं सकलपदार्थे स्वीक्रियते न तु तादृशप्रतियोगितामात्रस्येति । न चान्येषां पदार्थानामुपलक्षणविधयैव भेदो निवेश्यते तेनैव:ऽस्माकं निर्वाहः, तथाच पर्याप्त्यनुयोगितावच्छेदकत्वोपलक्षितरूपावच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगितानिरूपितपरम्परया याऽवच्छेदकता तन्निरूपकाधिकरणत्वस्यैव निवेश इति वाच्यम् । तथासति विशेषभेदस्यैव निवेशेन पूर्वोक्तदोषावारणात् । तादृशाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्ननिरूपकताकाधिकरणतावच्छेदकत्वस्य हेतुमति सत्त्वात् । यदि च तादृशकूटस्य लक्षणे प्रवेशेन कूटान्तर्गतवन्ह्यधिकरणतावच्छेदस्यापि प्राप्ततया नोक्तदोष इति वाच्यम् । अस्माकं विशेषभेदनिवेशेनैव निर्वाहात् । भवति च कूटनिवेशो तदपेक्षया प्रतियोगितासामान्ये तादृशोभयाभावनिवेशो लाघवमिति । न च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीकर्त्तव्यमेव, अन्यथा गुरुधर्मसाध्यकव्यभिचारिण्यतिव्याप्तेरिति वाच्यम् । यादृशगुरुधर्मस्य प्रतियोगितावच्छेदकत्वे व्याप्तिविरहः तस्य तदवच्छेदकत्वस्वीकारो व्यर्थ एवेति ।

[ घ ] अत्र यद्धर्मावच्छिन्नावच्छेदकताकत्वेत्यस्य यद्धर्मनिष्ठावच्छेदकतानिरूपकावच्छेदकतानिरूपकत्वेत्यर्थः । ननु यद्धर्मनिष्ठं यत्तन्निरूपकावच्छेदकतानिरूपकत्वमित्यर्थोऽस्तु कृतं यद्धर्मनिष्ठावच्छेदकतानिरूपकत्वनिवेशेनेति चेन्न । वाच्यत्ववत्तत्तादात्म्येन साध्यतायां ज्ञेयत्वहेतौ हेतुमन्निष्ठतद्व्यक्तिमद्भेदीयप्रतियोगितासामान्ये वाच्यत्वनिष्ठाधेयतानिरूपकतद्व्यक्तिनिष्ठावच्छेदकताकत्वघटितोभयोः सत्त्वेनाव्याप्तिरतस्तदुपात्तम् । वाच्यत्वनिष्ठाधेयतानिरूपकत्वस्याधिकरणविधया निखिलपदार्थे एव सम्भवेन तद्व्यक्तित्वनिष्ठावच्छेदकतायामपि तन्निरूपकत्वस्याव्याहतत्वात् । न च तद्वारणाय यद्धर्मनिष्ठावच्छेदकतानिरूपकं यत्तन्निरूपकत्वमित्येव निवेश्यतामिति वाच्यम् । वाच्यत्वसाध्यकज्ञेयत्वहेतुके हेत्वधिकरणनिष्ठतद्व्यक्त्यधिकरणतावान्नास्तीत्यभावप्रतियोगितायां वाच्यत्वत्वनिष्ठावच्छेदकतानिरूपकवाच्यत्वनिष्ठाधेयतानिरूपकत्वस्याधिकरणविधया तादृशप्रतियोगितायां सत्त्वेन यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वस्य सत्त्वेनाव्याप्तिः स्यादतस्तदुपादानम् ।

यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वेति । [ १ ] ननु यत्सम्बन्धनिष्ठावच्छेदकताकसंसर्गता तन्निरूपकं यत्तन्निरूपितत्वमेव निवेश्यतामलमवच्छेदकतानिवेशेनेति चेन्न ।

वाच्यत्वसाध्यकज्ञेयत्वहेतुके हेतुमन्निष्ठकालिकसम्बन्धेन वाच्यत्ववान्नास्तीत्यभावप्रतियोगितायां वाच्यत्वत्वनिष्ठावच्छेदकताकत्वस्य स्वरूपसम्बन्धनिष्ठसंसर्गतानिरूपकवाच्यत्वनिष्ठाधेयतानिरूपकत्वस्य च सत्त्वेनाऽव्याप्तिरतस्तदुपात्तम् ।

[२] ननु यत्सम्बन्धनिष्ठं यत्तन्निरूपकावच्छेदकतानिरूपकेत्येव निवेश्यतां किं संसर्गतानिवेशेनेति चेन्न ।

वाच्यत्वसाध्यकज्ञेयत्वहेतुके हेतुमन्निष्ठकालिकसम्बन्धावच्छिन्नवाच्यत्वनिष्ठावच्छेदकताकप्रतियोगितायां वाच्यत्वत्वनिष्ठावच्छेदकताकत्वस्य यत्सम्बन्धनिष्ठाधेयतानिरूपितनिरूपकतावच्छेदकताकत्वस्य च सत्त्वेनाऽव्याप्तेरिति ।

[ ३ ] ननु यद्धर्मनिष्ठावच्छेदकतानिरूपकं यत्तन्निरूपकत्वमिति निवेश्यतां पूर्वव्याप्तेरसम्भवात् कृतमवच्छेदकतानिवेशेनेति चेन्न ।

वाच्यत्वसाध्यकज्ञेयत्वहेतौ आधेयताभावाभावीयप्रतियोगितायां वाच्यत्वत्वनिष्ठावच्छेदकतानिरूपकाधेयत्वनिरूपकत्वस्य सत्त्वेनाऽव्याप्तिरतस्तदुपादानात् ।

[ ४ ] ननु स्वप्रतियोगिभिन्नहेतुमन्निष्ठाभावीयप्रतियोगितायां यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वस्य यद्धर्मावच्छिन्नावच्छेदकताकत्वेत्यादिक्रमेण निवेश्यतां बहुतरलाभसम्भवादिति चेन्न ।

द्रव्यत्वसाध्यकगगनत्वहेतुकेऽव्याप्त्यापत्तेः समवायेन द्रव्यं नास्तीत्यभावीयप्रतियोगितायाः समवायेन

द्रव्य एव स्वीकारेण स्वप्रतियोगिभिन्नत्वस्य हेत्वधिकरणे सत्त्वेन तत्रोभयस्य सत्त्वात् सिद्धान्ते निरुक्ताभावीयप्रतियोगितावच्छेदकद्रव्यत्वानधिकरणत्वस्य हेतुमत्यसम्भवेन न दोषः । न च समवायेन द्रव्यं नास्तीत्यभावीयप्रतियोगिताया द्रव्यमात्रे स्वीकारेण न निरुक्तदोषः इति वाच्यम् । सत्तासाध्यकजातिहेतुकेऽव्याप्तिः सत्तावद् घटो नास्तीत्यभावप्रतियोगिभेदस्य हेत्वधिकरणघटादौ सत्त्वेन तादृशप्रतियोगितायामुभयस्यैव सत्त्वात् । साध्यतादेतरोभयानवच्छिन्नत्वं प्रक्षेप्य निरुक्ताभाववारणेऽपि विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः स्वप्रतियोगिभिन्नत्वस्य हेत्वधिकरणे गुणादावभावात् । न च विशिष्टसत्तानिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाव एव लक्षणघटक इति नातिव्याप्तिरिति वाच्यम् । साध्यतावच्छेकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व—साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वैतदुभयाभावस्यैव निवेशनीयतया प्रकृताभावीयप्रतियोगितायाः साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वाभावेन दोषतादवस्थ्यात् । रूपवृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

[ ५ ] ननु निरुक्ताभावीयप्रतियोगितायां यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकतात्वाभाव एव निवेश्यताम् कृतमुभयाभावेनेति । वह्निमत्पर्वतो नास्तीत्यभावमादायाव्याप्तिवारणाय स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकता निवेशनीया । महानसीयवह्निर्नास्तीत्यभावमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति। एवं च साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेककरूपवृत्तिनिरूपकतारूपवृत्तित्वं च निरुक्तसम्बन्धेन प्रतियोगितायां निवेशनीयं, तथा च यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकत्वाभावस्योपादानेऽपि निवेशनासम्भवात् कथं पूर्वपक्षः सम्भवति इति चेन्न ।

साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य चावच्छेदकताया निवेशेन लाघवात् । प्रथमरूपवृत्तित्वञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, द्वितीयरूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

अत्रोच्यते । संयोगेन प्रमेयवह्निसाध्यकधूमहेतुके साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेकरूपवृत्तिभवच्छेदकत्वस्याऽप्रसिद्ध्याऽव्याप्त्यापत्तिः । न च संयोगेन प्रमेयवह्निमन्निष्ठविषयित्वसम्बन्धावच्छिन्नप्रतियोगितायां यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकताकत्वं प्रसिद्धमिति वाच्यम्, विषयिताया वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावानाभ्युपगमात् इति । न च विषयित्वसम्बन्धावच्छिन्नप्रकारतायामेव तत्प्रसिद्धिरिति वाच्यम् । प्रतियोगितानिष्ठस्य यद्धर्मावच्छिन्नावच्छेदकत्वस्यैव निवेशनीयतया तद्दोषतादवस्थ्यात्, अन्यथा धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः ।

[ ६ ] ननु तादृशहेतुमन्निष्ठाभावीययद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वाभाव इत्येव निवेश्यतां किमुभयाभावनिवेशेनेति चेन्न ।

प्रमेयवह्निसाध्यकतज्ज्ञानत्वहेतुके विषयित्वसम्बन्धावच्छिन्नप्रमेयवह्निमन्निष्ठावच्छेदकताकप्रतियोगिताकाभावस्य प्रतियोगिव्यधिकरणत्वाभावेनान्यसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाऽभावाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः, तद्वारणाय सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगितासामान्ये यद्धर्मावच्छिन्नावच्छेदकत्वाभाव इत्येव निवेश्यतां तावतैव तद्वारणमिति वाच्यम् । घटवान् महाकालत्वादित्यादौ तत्तद्वह्निप्रतियोगिकसंयोगेन वह्निसाध्यके च यत्सम्बन्धावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगित्वाप्रसिद्धेरव्याप्त्यापत्तेः कालिकसम्बन्धेन स्वप्रतियोगिताकानधिकरणत्वस्य महाकालेऽभावात्, अन्ये च तादृशसम्बन्धेन घटवान् नास्तीत्यभावप्रतियोगितावच्छेदकघटाधिकरणाऽप्रसिद्धेः ।

समवायसम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेयत्वादेरव्य

---

ननु व्याप्यवृत्तिसाध्यकस्थलेऽप्युक्तक्रमेणैव व्यापकत्वं निर्वाच्यम्, अन्यथा दण्डिमानित्यादौ दण्डत्वादिप्रकारेण व्यापकत्वानुपपत्तेः, तथाच प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः, प्रमेयत्वावच्छिन्नत्वस्याऽप्रसिद्धेः। न च प्रकारित्वादौ तत्प्रसिद्धिः, प्रतियोगितानिष्ठाया एवावच्छेद्यतायाः प्रकृते निवेशनीयत्वात्, अन्यथा प्रकारित्वप्रतियोगित्वसाधारणैकावच्छेद्यत्वविरहेण व्यभिचारिण्यतिव्याप्त्यापत्तेरत आह समवायेति।

ननु स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वेऽपि प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसामान्ये तादृशोभयाभावविवक्षयैव सर्वसामञ्जस्ये कृतं विवक्षान्तरेण, घटवान् महाकालत्वादित्यत्र घटीयतादृशविशेषणतायां पटत्वावच्छिन्नप्रतियोगिकत्वविरहेण पटाभावस्यैव प्रतियोगिवैयधिकरण्यसम्भवात्, कालः प्रमेयवान् महाकालत्वादित्यत्र च कालिकसम्बन्धेन प्रमेयसामान्यस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यस्यैवानुपादेयत्वेन निर्दोषात्, (१) अतः पूर्वकल्पे दोषान्तरमाह अत एवेति।

---

(१) [१] ननु गगनत्वान्यविभुत्वविशिष्टप्रमेयतदन्यप्रमेयोभयाभावस्य कालिकसम्बन्धेन साध्यतायां महाकालत्वहेतावव्याप्तिः, प्रकृतसाध्यीयकालिकविशेषणतायां घटत्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतमहाकालानुयोगिकत्वोभयसत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः। न चोक्तरूपेण साध्यतायां तस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्याप्रवेशान्नाव्याप्तिरिति वाच्यम्। गगनत्वान्यविभुत्वविशिष्टप्रमेयतदन्यप्रमेयोभययोः स्वरूपसम्बन्धेनाधिकरणीभूतस्य गगनान्यघटादिदेशस्य प्रसिद्धतया तदवच्छेदेनाऽव्याप्यवृत्तित्वस्याऽनुभवसिद्धत्वात् इति चेत्।

[क] अत्र केचित्। यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंसर्गीयप्रतियोगितासामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्यत्स्वनुयोगितानिरूपितत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य विवक्षणीयत्वात्, तथाच नाव्याप्तिः, तथाहि—घटत्वावच्छिन्नसाध्यतावच्छेदकीभूतकालिकसंसर्गीयप्रतियोगितासामान्ये हेत्वधिकरणीभूतमहाकालानुयोगितानिरूपितत्वसत्त्वेऽपि साध्यतावच्छेदकीभूततादृशोभयत्वावच्छिन्नत्वविरहेणोभयाभावसत्त्वात्तादृशाभावस्य लक्षणघटकतया अव्याप्त्यसम्भवात्। न चोभयत्वावच्छिन्नत्वमप्रसिद्धमिति वाच्यम्। उभयाभावप्रतियोगितायामेव तत्सौलभ्यादित्याहुः।

[ख] तन्न चारुतरम्, तथाहि—अभावप्रतियोगितासंसर्गीयप्रतियोगितासाधारणस्यावच्छिन्नत्वस्यैकस्याभावात्। अभावप्रतियोगितानिष्ठतादृशावच्छिन्नत्वतादृशोभयाभावस्य निवेशे वह्निमान् धूमादित्यादौ सर्वत्रैव साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंसर्गीयप्रतियोगितासामान्ये अभावीयप्रतियोगितानिष्ठसाध्यतावच्छेदकावच्छिन्नत्वघटिततादृशोभयाभावसत्त्वेन साध्याभावस्य लक्षणघटकतयाऽसम्भवापत्तेः। सांसर्गिकप्रतियोगितानिष्ठतादृशावच्छिन्नत्वघटिततादृशोभयाभावप्रवेशे उक्तस्थले एव सांसर्गिकप्रतियोगितायां साध्यतावच्छेदकीभूततादृशोभयत्वावच्छिन्नत्वाप्रसिद्ध्या उक्ताव्याप्तितादवस्थ्यादिति कृतं पल्लवितेन।

[ग] अत्र ब्रूमः। यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंसर्गीयप्रतियोगितावच्छेदकतासामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्यत्किञ्चिन्निष्ठानुयोगितानिरूपितप्रतियोगितानिरूपितत्वसाध्यतावच्छेदकानिष्ठत्वोभयाभाव इत्यर्थे उक्ताव्याप्तिविरहात। यद्यप्येवमपि वह्नित्वावच्छिन्नप्रतियोगिताक [illegible] तद्यत्कि-

भावप्रतियोगितावच्छेदकत्वं सुलभम्, अत एव समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्वगुणाद्यनुयोगिकत्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ वह्निधूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिताकत्वविरहेऽपि च नातिव्याप्तिरित्यपि वदन्ति ।

---

यद्यपि संयोगमात्रस्यैव द्वित्वावच्छिन्नप्रतियोगिकत्वाविरहात् वह्निधूमोभयत्वावच्छिन्नाभावमादायैव नतिव्याप्तिसम्भावना, तथापि वह्निधूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि समवायस्यैकत्वेन द्रव्यत्वप्रतियोगिकत्वगुणानुयोगिकत्वोभयसत्त्वेन द्रव्यं जातेरित्यादौ नातिव्याप्तिरिति योजना। विरहेपि चेत्यत्र चकारस्तु प्रामादिक इति प्राञ्चः। वस्तुतस्तु संयोगस्य—सम्बन्धमात्रस्य, द्वित्वावच्छिन्नप्रतियोगिताकत्वविरहेऽपि—द्वित्वावच्छिन्नप्रतियोगिकत्वाऽप्रसिद्धावपीत्यर्थः, तथाच सम्बन्धमात्रस्यैकप्रतियोगिकापरानुयोगिकसम्बन्धत्वनियमेन वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धस्याऽप्रसिद्ध्या तादृशप्रतियोगिकत्वस्य लक्षणाऽघटकत्वेऽपि वह्निधूमोभयवान् वह्नेरित्यादौ नातिव्याप्तिः प्रकारित्वादेः सम्बन्धत्वे मानाभावादिति तु प्रागेव प्रपञ्चितमस्माभिः।

केचित्तु वह्नेरित्यत्र धूमादिति नातिव्याप्तिरित्यनन्तरञ्चाव्याप्तिर्वेति पाठं कल्पयन्तो द्रव्यं जातेरित्यादावतिव्याप्तिं वह्निधूमोभयवान् धूमादित्यत्र चाव्याप्तिमेव पूर्वलक्षणे दोषं सङ्गमयन्ति।

ननु स्वरूपसम्बन्धात्मकप्रतियोगित्वस्य विशिष्टधीजनकत्वरूपसम्बन्धताघटकनियमघटितत्वादात्माश्रयत्वमत आह प्रतियोगित्वादिरिति। आदिनाऽवच्छेदकत्वपरिग्रहः। न सम्बन्धत्वेनेति। प्रतियोगितात्वादिधर्मान्तरप्रकारेण हेतुमन्निष्ठाभावीयत्वप्रकारेणैव वा तत्प्रवेशादिति भावः। संयोगत्वादिनैवेति। ननु प्रतियोगितात्वमपि स्वरूपसम्बन्ध एवेत्युक्तदोषतादवस्थ्यम्, किञ्च वृत्त्यनियामकसम्बन्धेन हेतुतास्थले तेन सम्बन्धेन हेतुसम्बन्धित्वस्याऽवश्यं प्रवेश एवेत्यतः सम्बन्धत्वेन निवेशेऽपि न क्षतिरित्याश-

---

दीधितौ-मेयत्वादेरपीति। तथाच समवायेन मेयसामान्याभावप्रतियोगितायां प्रसिद्धस्य मेयत्वावच्छिन्नत्वस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य चोभयाभावस्य तादृशप्रतियोगिता सामान्ये सत्त्वान्नाव्याप्तिरिति भावः।

---

त्वादिहेतावव्याप्तिः, तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्यैवाऽप्रसिद्धेः। तथापि यादृशप्रतियोगिताश्रयप्रतियोगितावच्छेदकतासामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसंसर्गीयप्रतियोगितानिरूपितत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानिरूपितत्वसाध्यतावच्छेदकानिष्ठत्वैतत्त्रितयाभावस्यैव निवेशनीयत्वान्नाव्याप्तिरिति ध्येयम्।

प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो न सम्बन्धत्वेन निविष्टः ॥ सामानाधिकरण्येऽपि सम्बन्धः संयोगत्वादिनैव निविशते । दर्शितं च नियमाघटितमपि सम्बन्धत्वम् । अभावत्वं च 'इदमिह नास्ति इदमिदं न भवती'ति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसम्बन्धविशेषः, अतो नाऽभावसाध्यकव्यभिचारण्यतिप्रसङ्गः । तदपि वा नोपादेयं प्रयोजनविरहात् , विषयतात्वादिवत् प्रतियोगित्वाधिकरणत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः ॥

इतिश्रीमद्रघुनाथतार्किकशिरोमणिकृतायां दीधितौ अनुमानखण्डे सिद्धान्तलक्षणप्रकरणं समाप्तम् ।

---

येनाह दर्शितं चेति । विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमेव सम्बन्धत्वमिति भावः । भावभिन्नत्वरूपस्याऽभावत्वस्य प्रवेशे घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिरित्याह अभावत्वं चेति । इदमिहेत्यादि । इदं चाऽत्यन्तान्योन्याभावत्वयोरभावत्वाऽगर्भतामभिप्रेत्य, तयोस्तद्गर्भतायां त्वाह तदपि वेति । अभावत्वमपि वेत्यर्थः । अपेरभावोऽर्थः । अतिरिक्तविषयतापक्षस्य केनचित्स्वीकारादुदृष्टान्तता । तत्वादीति । विषयतात्वादीत्यर्थः ।

---

विशेष्यविशेषणत्वान्येति । इदं प्रकारविशेष्ययोः सम्बन्धत्ववारणाय विषयताविशेषणम् । घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिरिति । घटत्वात्मकसाध्याभावस्य हेतुसमानाधिकरणाभावत्वानाक्रान्तत्वादिति भावः । 'इदमिह नास्ती'ति प्रतीतिनियामकभावाभावसाधारणाऽभावत्वप्रवेशे तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिः, तादृशप्रतीतिनियामकाभावप्रतियोगितायां तादात्म्यावच्छिन्नत्वाभावेनोभयाभावसत्वात् अतः 'इदमिदं न भवती'त्युक्तम् । एवं 'इदमिदं न भवती'तिप्रतीतिनियामकस्य तादृशभावस्य प्रवेशे घटत्वाभावादिसाध्यके व्यभिचारिण्यतिव्याप्तिः, तादृशप्रतीतिनियामकाभावप्रतियोगितायां स्वरूपसम्बन्धावच्छिन्नत्वाभावेनोभयाभावसत्वादत 'इदमिह नास्ती'त्युक्तम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रतियोगितायामुभयाभावविवक्षयैव सामञ्जस्ये तदुपादानमपि न कर्तव्यमत आह तदपि वेतीति । ननु घटाभावप्रतियोगित्वं अभावस्वरूपं घटस्वरूपं घटत्वस्वरूपं वा ? नाद्यः, घटाभावप्रतियोगीत्यस्य घटो घटवानित्यर्थः स्यात् । न द्वितीयः, घटाभावप्रतियोगीत्यस्य घटो भाववानित्यर्थः स्यात् । न तृतीयः, घटोऽभावप्रतियोगीत्यस्य घटो घट इत्यर्थः स्यात् तथाचाऽननुभव इत्यत आह विषयतेति । अयमाशयः । विषयताया ज्ञानरूपत्वे घटपटावित्यादिसमूहालम्बनस्य भ्रमत्वापत्तिः, ज्ञानात्मकघटपटादिविषयतानामैक्येन पटत्वाद्यवच्छिन्नघटादिनिष्ठविषयताशालित्वात् । विषयरूपत्वे घटभूत-

आदिना प्रकारित्वग्रहः । केचित्तु तत्त्वं-तत्ता, आदिना चेदन्त्वस्योपग्रहः। तत्त्वेदन्त्वयोः पदार्थान्तरत्वं विना दुर्वचत्वात्तत्रैव पर्यवसानादित्याहुः । तत्त्वेति । प्रतियोगितात्वअधिकरणतात्वेत्यर्थः ।

इति जगदीशतर्कालङ्कारकृतायामनुमानखण्डविवृतौ समाप्तमिदं सिद्धान्तलक्षणप्रकरणम् ।

---

लसंयोग इत्यादिज्ञानस्य घटवद्भूतलसंयोग इत्यादिज्ञानादवैलक्षण्यप्रसङ्गः विषयात्मकघटादि-विषयताया ऐक्यात् , ज्ञानविषयोभयरूपत्वे च घटवद्भूतलं घटभूतलसंयोगश्चेत्यादिसमूहाल-म्बनग्रहे संयोगादौ विषयतावैलक्षण्यानुपपत्तिः, ज्ञानविषययोरविशेषात् । न चेष्टापत्तिः, तथासति घटवद्भूतलमित्याद्येकैकसंयोगादिविषयताशालिज्ञानात्तादृशसमूहालम्बनस्य वैलक्ष ण्यानुपपत्तेरिति ध्येयम् ।

सिद्धान्तलक्षणव्याख्या व्याख्याता सम्प्रदायतः ।
शिवदत्तेन सुधिया तेन साम्बः प्रसीदतु ॥ १ ॥

इति श्रीमहामहोपाध्याय पं० प्रभुदत्तशास्त्रिसुत श्रीशिवदत्तमिश्र-विरचिता गङ्गानाम्नी सिद्धान्तलक्षणव्याख्या समाप्ता ।
शुभं भूयात् ।

# अथ सटिप्पणं सिद्धान्तलक्षणपरिशिष्टक्रोडपत्रम् ।

श्रीरस्तु ।

[१] नन्वत्र हेत्वधिकरणनिरूपितवृत्तितासामान्यावच्छेदकं यत्साध्यतावच्छेदकं तदव-च्छिन्नसामानाधिकरण्यनिवेशेनैव सामञ्जस्येऽनवच्छेदकत्वानुसरणं तदितरोभयानवच्छिन्नत्व-विशेषणं व्यर्थमिति चेन्न ।

महानसीयवह्निभिन्नवह्निमान् धूमादित्यादावतिव्याप्तेः । हेत्वधिकरणनिरूपिता या महा-नसीयभेदावच्छिन्ना वह्नित्वावच्छिन्ना च वृत्तिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । न च महानसीयवह्निभेदरूपेण वह्नित्वेन च धूमहेतुकस्थले व्यापकत्वमिष्टमेव, महानसीयव-ह्निभेदविशिष्टवह्नित्वेन चावच्छिन्नायाः वृत्तितायाः हेत्वधिकरणनिरूपितत्वाभावान्नातिव्याप्तिरिति वाच्यम् । वृत्तितायाः भिन्नत्वेन पर्वतनिरूपितधूमत्वावच्छिन्नवृत्तितात्वव्यापकत्वस्याऽवच्छिन्न-त्वसम्बन्धेन वह्नित्वे विरहाद् वह्निमान् धूमादित्यादावव्याप्त्यापत्तेरिति दिक् ।

[२] ननु हेत्वधिकरणवृत्तिताभिन्नवृत्तितावदभावप्रतियोगितावच्छेदकावच्छिन्नसामानाधि-करण्यमित्युक्त्यैव सामञ्जस्ये कृतमनवच्छेदकत्वाद्यनुसरणेन, तथाच तत्तद्व्यक्त्यभावनिष्ठवृत्ति-ताया महानसीयवह्न्यभावनिष्ठवृत्तितायाश्च भिन्नवह्निसामान्याभावनिष्ठवृत्तितावदभावप्रति-योगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न ।

गुरुरूपेण साध्यतायां साध्याभाववत्त्वावच्छिन्नवृत्तित्वाप्रसिद्ध्याऽव्याप्तिरिति ध्येयम् ।

[३]अथ प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावभिन्नाभावप्रतियोगितावत्साध्य-सामानाधिकरण्यमित्यनेनैव सर्वसामञ्जस्ये किमनवच्छेदकत्वाद्यनुसरणेन, वह्निमान् धूमादित्या-दौ तत्तद्व्यक्तित्वावच्छिन्नाभावाभिन्नत्वस्य महानसीयवह्न्यभावभिन्नत्वस्य च वह्निसामान्याभावे सत्त्वाल्लक्षणसमन्वय इति चेन्न ।

[क] धूमवान् वह्नेरित्यादौ तादृशाभावभिन्नद्रव्याभावप्रतियोगित्वस्य धूमे सत्त्वादतिव्या-प्तिप्रसङ्गात् । न च तादृशाभावभिन्नाभावप्रतियोगितावच्छेदकं यत् साध्यतावच्छेदकमित्युक्त्या-वेव तत्राऽतिव्याप्तिवारणसम्भवः, द्रव्याभावप्रतियोगितावच्छेदकत्वस्य धूमत्वादावसत्त्वादिति वाच्यम् । तादृशाभावभिन्नस्य जातिमान्नास्तीत्याकारकाभावस्य प्रतियोगितावच्छेदकत्वस्य नि-खिलजातौ सत्त्वेन धूमत्वादावपि सत्त्वादुक्तातिव्याप्तितादवस्थ्यात् । न च तादृशाभावभिन्ना-भावीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वं निवेशनीयम्, तथाच जातिमान्नास्तीत्या-कारकाभावीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविरहेण नातिव्याप्तिरिति वाच्यम् । हेतुसमानाधिकरणसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावभिन्नत्वस्य कालिकसम्बन्धाव-च्छिन्नप्रतियोगिताकधूमाभावे सत्त्वेनाऽतिव्याप्तितादवस्थ्यात् । न च कालिकेन धूमाभावस्यापि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणतया तद्भिन्नत्वाभावेन नातिव्याप्तिः, तादृशाभावभिन्ना-भावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेन वा तद्वारणमिति वाच्यम् । तथापि वाच्यं ज्ञेयत्वादित्यादौ तादृशभिन्नाभावीयस्वरूपसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगि-त्वादव्याप्तिः स्यादिति । अथ साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविवक्षयापि का-लिकसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावस्य निरुक्ताभावभिन्नत्वाभावान्नातिव्याप्तिः, प्रति

योगिता च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन न विशेषणीया, तथाच वाच्यं ज्ञेयत्वादित्यादौ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावमादाय लक्षणसमन्वयः। न च महानसीयवह्निमान् धूमादित्यादावव्याप्तिः तादृशाभावभिन्नो यो वह्न्यभावस्तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम्। तादृशाभावभिन्नाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत् साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात्(१), तथासति तस्य लक्षणान्तरत्वादिति ध्येयम्।

---

(१) [क]नन्वेवमपि गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे प्रमेयवह्निमान् धूमादित्यादौ तादृशाभावभिन्नवह्न्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य साध्यतावच्छेदकगतरूपे विरहादव्याप्तिः। न च विषयितासम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयवह्न्यभावस्य तादृशाभावभिन्नतया तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिरिति वाच्यम्। विषयितासम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति चेन्न।

निरुक्ताभावभिन्नाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवद् तद्रूपावच्छिन्नसामानाधिकरण्यनिवेशेनैव वारणात्। न चैतादृशरीत्या धूमवान् वह्नेरित्यादौ तादृशभिन्नाभावप्रतियोगितावच्छेदकवह्नित्वे धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य सत्त्वेनातिव्याप्तिरिति वाच्यम्। यद्धर्मसामानाधिकरण्यमपि भिन्नाभावप्रतियोगितावच्छेदके विशेषणं देयम्, तथाच वह्नित्वे धूमत्वसामानाधिकरण्यविरहात्तत्पदेन धूमत्वस्य धर्त्तुमशक्यत्वान्नातिव्याप्तिः। यदि च तादृशभिन्नाभावप्रतियोगितावच्छेदकद्रव्यत्वे धूमत्वसामानाधिकरण्यस्य सत्त्वेन धर्त्तुं शक्यत्वादतिव्याप्तिरित्युच्यते, तदा यद्धर्मसामानाधिकरण्यं विहाय यद्धर्मव्याप्यत्वं निवेशनीयं, तथाच द्रव्यत्वे धूमत्वव्याप्यत्वविरहाद् यत्पदेन धूमत्वस्य धर्तुमशक्यत्वात्। न च विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिस्तादृशभिन्नाभावप्रतियोगितावच्छेदकसत्तात्वे विशिष्टसत्तात्वव्याप्यत्वविशिष्टसत्तात्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वयोः सत्त्वेन यत्पदेन विशिष्टसत्तात्वस्य धर्तुं शक्यत्वात्, एतेन तादृशभिन्नाभावप्रतियोगितावच्छेदकं यद्धर्मव्यापकमित्युक्तावपि न निस्तार इति वाच्यम्। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावभिन्नाभावप्रतियोगितावच्छेदकं यद्धर्मावच्छिन्नव्याप्यतावच्छेदकमित्यस्यैव निवेशात्, तथाच सत्तात्वे विशिष्टसत्तात्वावच्छिन्नव्याप्यतावच्छेदकत्वविरहेणातिव्याप्तिर्न दोषः। न च यद्धर्मावच्छिन्नव्याप्यतावच्छेदकत्वं यद्धर्मावच्छिन्नाभाववद्वृत्तितानवच्छेदकत्वं, यद्धर्मावच्छिन्नाभावः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकः, एवं च प्रमेयवह्नित्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्ध्योक्ताव्याप्तितादवस्थ्यमेव, वाच्यं ज्ञेयत्वादित्यादौ साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावाऽप्रसिद्ध्या वाच्यत्वत्वावच्छिन्नव्याप्यतावच्छेदकाऽप्रसिद्ध्याऽव्याप्तिश्चेति वाच्यम्। तादृशभिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य विवक्षणेनोक्तदोषाभावात्।

[ख] अत्र च व्यापकतावच्छेदकत्वं यदि तादृशभिन्नाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं, तदा वह्निमान् धूमादित्यादौ तादृशभिन्नाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वावच्छिन्नाधिकरणत्वस्य जलादावपि सत्त्वेन तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य वह्नित्वे विरहादव्याप्त्यापत्तेः। यदि च हेतुमन्निष्ठाभावभिन्नाभावत्वसमानाधिकरणोभयावृत्तियत्किञ्चिद्धर्मनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपिताऽऽश्रयनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितवृत्तितानिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठप्रतियोगिताकतद्व्यक्तिनिरूपितप्रतियोगितावच्छेदकधर्मावच्छिन्ननिरूप-

[ ख ] केचित्तु घटाभावाभिन्नं घटत्वादित्यादौ साध्याभावस्य घटाभावात्मकतया प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावभिन्नत्वस्य साध्याभावे विरहेणाऽव्याप्तिप्रसङ्गात् । न च हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगिताभिन्नानुयोगितानिरूपितप्रतियोगिताभिन्नत्वस्य साध्याभावत्वरूपानुयोगितायां सत्त्वान्न दोष इति वाच्यम् । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावभिन्नं वाच्यत्वादित्यादौ वाच्यत्वाभावस्य साध्यताघटकस्वरूपसम्बन्धेन प्रतियोगिवैयधिकरण्यविरहेण तादृशानुयोगिताभिन्नत्वस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावत्वरूपानुयोगितायां सत्त्वेन तन्निरूपितप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तेः, वाच्यत्वाभावत्वरूपानुयोगित्वस्य साध्याभावत्वात्मकत्वात् । न च तादृशानुयोगिताभिन्नानुयोगिताविशिष्टप्रतियोगितावच्छेदकत्वं विवक्षणीयम्, वै० स्वानिरूपितत्वावोशेष्टानुयोगित्वानिरूपितत्वोभयसम्बन्धेन, एवं च स्वनिष्ठसाध्याभावत्वरूपानुयोगित्वानिरूपितत्वविरहेणोक्तोभयसम्बन्धेन वाच्यत्वाभावत्वरूपानुयोगितांविशिष्टत्वस्य साध्यनिष्ठप्रतियोगितायां विरहेणाऽतिव्याप्तिविरहादिति । अस्य निवेशस्तु–अनुयोगिताविशिष्टान्यानुयोगिताविशिष्टप्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम्, वै० स्वतादात्म्यस्वनिरूपितप्रतियोगितावच्छेदकतावद्धर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वाभाववद्धेत्वधिकरणवृत्तितावच्छेदकत्वोभयसम्बन्धेन, द्वितीयवै० उक्तोभयसम्बन्धेनेति, तथाच न दोष इति वाच्यम् । अनुयोगिताया अनुयोगित्वरूपत्वे उक्ताव्याप्तितादवस्थ्यात्, गुरुरूपेण साध्यतायामव्याप्तेश्चेत्याहुः ।

[ ४ ] ननु हेत्वधिकरणनिरूपितवृत्तिताभिन्नवृत्तितावदभावप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमित्युक्त्यैव सामञ्जस्ये कृतमनवच्छेदकत्वाद्यनुसरणेनेति चेन्न ।

गुरुरूपेण साध्यतायां साध्याभावत्वावच्छिन्नवृत्तित्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः । धूमवान् वह्नेरित्यादौ हेत्वधिकरणीभूतायोगोलकनिरूपितवृत्तिताभिन्नत्वस्य जलादिनिरूपितधूमाभावत्वावच्छिन्नवृत्तितायां सत्त्वेनाऽतिव्याप्त्यापत्तेश्चेति ध्येयम् ।

[ ५ ] ननु प्रतियोगिव्यधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगिताभिन्नप्रतियोगिताश्रयसामानाधिकरण्यमित्येवोच्यताम्, वह्निमान् धूमादित्यादौ वह्नित्वमात्रावच्छिन्नप्रतियोगितायां तादृशप्रतियोगिताभिन्नत्वस्य सत्त्वेन लक्षणसमन्वयसम्भवादलमनवच्छेदकत्वाद्यनुसरणेनेति चेन्न ।

धूमवान् वह्नेरित्यादौ तादृशप्रतियोगिताभिन्नद्रव्याभावीयप्रतियोगिताश्रयत्वस्य धूमादौ सत्त्वेनाऽतिव्याप्त्यापत्तेः । न च भिन्नप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके निवेशादेवाऽतिव्याप्तिवारणसम्भव इति वाच्यम् । तथापि तादृशप्रतियोगिताभिन्नजातिमान्नास्तीत्यभावीय-

---

कताकाधिकरणतावन्निरूपितवृत्तितावदभावप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम्, तथाच वह्निमान् धूमादित्यादौ तादृशभिन्नाभावत्वसमानाधिकरणवह्न्यभावत्वावच्छिन्ननिरूपितप्रतियोगितावच्छेदकवह्नित्वावच्छिन्ननिरूपकताकाधिकरणतान्निरूपितवृत्तितावद्–घटाभावप्रतियोगितावच्छेदकत्वाभाववद्–वह्नित्वावच्छिन्नसामानाधिकरण्यसत्त्वान्नाव्याप्तिरित्युच्यते, तदा प्रमेयधूमवानित्यादौ प्रमेयधूमत्वेऽभावप्रतियोगितावच्छेदकत्वविरहेण यत्किञ्चिदभावान्तर्गतवह्न्यभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावन्निरूपितवृत्तितावदभावप्रतियोगितानवच्छेदकत्वस्य सत्त्वादतिव्याप्तेः सामान्यधर्मावच्छिन्नाधिकरणत्वस्याऽस्वीकारे वह्निमान् धूमादित्यादावव्याप्तिरिति ध्येयम् ।

प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तितादवस्थ्यात् । न च तादृशप्रतियोगिताभिन्नप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वस्यैव साध्यतावच्छेदके निवेशान्न दोष इति वाच्यम् । हेतुसमानाधिकरणसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावीयप्रतियोगिताभिन्नत्वस्य कालिकसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगितायां सत्त्वेनाऽतिव्याप्तितादवस्थ्यात् । न च यद्धर्मावच्छिन्नप्रतियोगिताकत्वावच्छेदेन हेतुमन्निष्ठाभावीयप्रतियोगिताभेदोऽस्ति तद्धर्मावच्छिन्नसामानाधिकरण्यं वक्तव्यम्, तथाच धूमत्वावच्छिन्नप्रतियोगिताकत्वव्यापकत्वं न तादृशप्रतियोगिताभेदस्येति न दोष इति वाच्यम् । व्यापकत्वानिवेशे लाघवविरहात्, एवं प्रमेयवह्निमान् धूमादित्यादौ गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तेश्च । न च विषयित्वसम्बन्धावच्छिन्नप्रमेयवह्नित्वावच्छिन्नप्रतियोगितायां तद्भिन्नत्वसत्त्वेन लक्षणसङ्गतिरिति वाच्यम् । विषयिताया वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या तद्दोषतादवस्थ्यादिति ध्येयम् ।

[ ६ ] ननु यद्रूपावच्छिन्नाधिकरणं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नानाधिकरणं तद्धर्मावच्छिन्नसामानाधिकरण्यमित्येव कथं नोक्तमिति चेन्न । महानसीयवह्न्यभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नाधिकरणभेदस्य साध्यतावच्छेदकवह्नित्वावच्छिन्नाधिकरणे विरहादव्याप्तिप्रसङ्गात्, प्रतियोगितावच्छेदकतायाः पर्याप्तिनिवेशे एकत्वादेः पर्याप्त्यस्वीकारे धूमवान् वह्नेरित्यादावतिव्याप्तिः स्यात् । एवं महानसीयवह्निमान् धूमादित्यादावतिव्याप्तिवारणाय साध्यतावच्छेदकतायाः पर्याप्तिनिवेशे वह्निमान् धूमादित्यादावव्याप्तेः, एकत्वादेः पर्याप्त्यस्वीकारात् । एवं सामान्यधर्मावच्छिन्नाधिकरणताया अस्वीकारेऽपीति बोध्यम् ।

[ ७ ] अथ स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन साध्यविशिष्टान्यो यो हेतुसमानाधिकरणोऽभावस्तत्प्रतियोगितावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्यैव सामञ्जस्येऽलमनवच्छेदकत्वाद्यनुसरणेन । असम्भववारणाय स्वप्रतियोगिकत्वदलम् । व्यभिचारिण्यतिव्याप्तिवारणाय स्वसामानाधिकरण्यदलम् । न च यस्य स्वप्रतियोगिकत्वं तस्य स्वसामानाधिकरण्यविरहेण महानसीयवन्ह्यभावे साध्यविशिष्टान्यत्वस्य सत्त्वादव्याप्तिरिति वाच्यम् । स्वाश्रयप्रतियोगिकत्वस्वाश्रयसामानाधिकरण्योभयसम्बन्धेन साध्यतावच्छेदकविशिष्टान्यत्वस्य विवक्षितत्वात् । न च कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावे साध्यतावच्छेदकविशिष्टान्यत्वविरहेण तस्य लक्षणाऽघटकत्वात्, संयोगी सत्त्वादित्यादौ च गुणावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तिविरहेण प्रतियोगिवैयधिकरण्यनिवेशो व्यर्थ इति वाच्यम् । प्रमेयवान् वाच्यत्वादित्यादौ निखिलाभावे साध्यतावच्छेदकविशिष्टत्वसत्त्वेन तादृशविशिष्टान्याभावाऽप्रसिद्ध्याऽव्याप्तिभिया स्वाश्रयसामानाधिकरण्यघटकीभूतवृत्तित्वं स्वरूपसम्बन्धेन निवेशनीयम् । तथा च कपिसंयोगाभाववान् मेयत्वादित्यादौ साध्यतावच्छेदकविशिष्टान्यत्वस्य साध्याभावे सत्त्वात्तमादायाऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यस्य सार्थक्यात् । किञ्च संयोगी सत्त्वादित्यादावतिव्याप्तिवारणेऽपि धूमवान् वह्नेरित्यादौ धूमाभावस्य पर्वते उत्पत्तिकालावच्छेदेनाऽव्याप्यवृत्तितया साध्यतावच्छेदकविशिष्टान्यत्वविरहेणाऽतिव्याप्तिभिया निरवच्छिन्नस्वरूपसम्बन्धेन स्वाश्रयसामानाधिकरण्यं विवक्षणीयम्, एवं च कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिवार-

णाय तत्सार्थक्यम् । न च प्रतियोगिवैयधिकरण्यस्य प्रतियोगितावच्छेदकसम्बन्धेन निवेश्य-तया वह्निमान् धूमादित्यादौ द्रव्यत्वाभावाभावमादायाऽव्याप्त्यभावात्स्वप्रतियोगिकत्वदलस्य वैयर्थ्यम्, एवं धूमवान् वह्नेरित्यत्रापि अयोगोलकावृत्तित्वावच्छिन्नाभावमादायाऽतिव्याप्तिवारणसम्भवात्प्रतियोगिवैयधिकरण्यनिवेशोऽपि व्यर्थः, एतेन 'संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाऽयोगोलकावृत्तित्वावच्छिन्नाभावस्यापि महानसोत्पत्तिकालावच्छेदेन महानसे सत्त्वेनाऽव्याप्यवृत्तितया तादृशाभावे साध्यतावच्छेदकविशिष्टान्यत्वविरहेण कथं तादृशाभावो लक्षणघटक' इत्यपि समाहितम्, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्येदानीमनावश्यकत्वात्, समवायसम्बन्धावच्छिन्नायोगोलकावृत्तित्वावच्छिन्नाभावमादायाऽतिव्याप्तिवारणसम्भवादिति वाच्यम् । तुल्ययुक्त्या पर्वताऽसमवेतत्वावच्छिन्नाभावचत्वरासमवेतत्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिः, पर्वतावृत्तित्वावच्छिन्नाभावस्य पर्वतत्वात्मकतया तस्य स्वरूपेण वृत्तित्वविरहाल्लक्षणघटकत्वात्, अतः प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यावश्यकतयाऽतिव्याप्तिवारणाय निरवच्छिन्नत्वरूपेण स्वाश्रयसामानाधिकरण्यस्यावश्यकत्वान्न प्रतियोगिवैयधिकरण्यवैयर्थ्यावकाशः । एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमात्रस्य भावानात्मकतया स्वाश्रयसामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकविशिष्टतया तदन्याऽभावाऽप्रसिद्ध्याऽव्याप्तिवारणाय स्वप्रतियोगिकत्वदलम् इति चेन्न ।

घटत्वाभावपटत्वाभावान्यतरवान् द्रव्यत्वादित्यादौ प्रत्येकं घटत्वपटत्वस्वरूपसाध्याभावे साध्यतावच्छेदकविशिष्टान्यत्वसत्त्वात्तादृशाभावप्रतियोगिभिन्नत्वस्य साध्ये विरहादव्याप्तिः स्यादिति(१) । न च तद्दोषवारणायाऽनवच्छेदकत्वानुसरणं क्रियत इति वाच्यम् । अभाववान् प्रमेयत्वादित्यादौ घटत्वाभावाभावस्य स्वरूपसम्बन्धेन स्वाश्रयसमानाधिकरणतादृशाभावस्य लक्षणघटकतयाऽव्याप्तिप्रसङ्गादिति ।

[८]अथ साध्यवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभाववत्त्वं हेतुसमानाधिकरणाभावे निवेश्यताम्, अलमनवच्छेदकत्वाद्यनुसरणेन । सर्वत्र सद्धेतौ गगनाभावमादाय(२) व्यधिकरणस्व-

(१) न च स्वरूपसमवायान्यतरसम्बन्धेन स्वाश्रयसामानाधिकरण्यं विवक्षणीयम्, तथाच तादृशाभावस्य साध्यतावच्छेदकविशिष्टान्यत्वविरहान्नाव्याप्तिरिति वाच्यम् । गगनाभावभिन्नाभावत्वादित्यादौ गगनाभावस्वरूपसाध्याभावस्य साध्यतावच्छेदकविशिष्टान्यत्वविरहेणाऽभावान्तरमादायाऽतिव्याप्तेः । एवं विशिष्टसत्ताभाववान् जातेरित्यादौ सत्तात्मकसाध्याभावस्य गुणादावपि सत्त्वेन साध्यतावच्छेदकविशिष्टान्यत्वविरहेणाऽतिव्याप्तेश्च । अथ स्वाश्रयाधिकरणनिरूपितसमवायस्वरूपान्यतरसम्बन्धावच्छिन्नवृत्तितावच्छेदकीभूतानुयोगितानिरूपितत्वस्वाश्रयनिष्ठत्वोभयसम्बन्धेन साध्यताविशिष्टान्यत्वं प्रतियोगितायामेव निवेशनीयम्, तथाच गगनाभावस्वरूपानुयोगितानिरूपितत्वं न साध्याभावीयप्रतियोगितायाम् अनुयोगिताया भिन्नत्वात् साध्याभावस्यैव लक्षणघटकतया नातिव्याप्तिः । न च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावस्य संयोगेनैव वृत्तित्वपक्षे संयोगेन घटाभावपटाभावान्यतरवान् द्रव्यत्वादित्यादौ प्रत्येकं घटस्वरूपसाध्याभावे स्वाश्रयाधिकरणनिरूपितोक्तान्यतरसम्बन्धावच्छिन्नवृत्तिताविरहात्साध्यतावच्छेदकविशिष्टान्यत्वसत्त्वेन लक्षणघटकतया तत्प्रतियोगिभिन्नत्वस्य साध्ये विरहेणाऽव्याप्तिप्रसङ्गादिति वाच्यम् । स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन स्वाश्रयाधिकरणनिरूपितवृत्तित्वनिवेशेनोक्तदोषविरहात् ।

केचित्तु विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय स्वाश्रयसामानाधिकरण्यमित्यनेन स्वावच्छिन्नाधिकरणवृत्तित्वस्याऽऽवश्यकत्वात्सामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकारे वह्निमान् धूमादित्यत्राव्याप्तिरित्याहुः ।

(२) साध्यतावच्छेदक... [illegible] ...घटकत्वे ।

रूपादिसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावमादाय(१) वा लक्षणसमन्वयः। असम्भव-वारणाय जगद्वृत्तिभिन्नत्वदलम्। व्यभिचारिण्यतिव्याप्तिवारणाय साध्यवद्वृत्तित्वदलम्। न च व्यधिकरणसम्बन्धेन साध्याभावस्य जगद्वृत्तितया तादृशाभावमादायैव व्यभिचारिण्यतिव्याप्ति-वारणसम्भवे साध्यवद्वृत्तित्वस्य वैयर्थ्यमिति वाच्यम्। समवायेन प्रमेयसाध्यकव्यभिचारिणि वाच्यत्वादिहेतावतिव्याप्तिवारणाय तदावश्यकत्वात्। न च संयोगेन द्रव्यस्याऽव्याप्यवृत्तितया संयोगेन महानसीयवह्न्यभावे जगद्वृत्तित्वसत्त्वेनोभयाभावसत्त्वादव्याप्तिरिति वाच्यम्। जग-द्वृत्तित्वस्य निरवच्छिन्नस्वरूपसम्बन्धेन निवेशात्। न च धूमाभावे जगद्वृत्तिभिन्नत्वस्य का-लिकेन साध्यवद्वृत्तित्वस्य चोभयस्य सत्त्वेन धूमाभावस्य लक्षणाऽघटकतया धूमवान् वह्नेरित्यादाव-तिव्याप्तिरिति वाच्यम्। साध्यवद्वृत्तित्वस्यापि स्वरूपेण निवेशात्। यदि च धूमाभावस्याऽ-व्याप्यवृत्तित्वे स्वरूपेण साध्यवद्वृत्तित्वसत्त्वेन लक्षणाऽघटकत्वादतिव्याप्तितादवस्थ्यम् इत्यु-च्यते, तदा निरवच्छिन्नस्वरूपेणैव निवेशनीयमिति(२) चेन्न।

घटत्वाभावपटत्वाभावान्यतरवान् घटत्वान्यतरस्मादित्यादौ घटत्वस्वरूपाभावस्य स्वरू-पसम्बन्धेन साध्यवद्वृत्तित्वविरहेण तत्प्रयुक्तोभयाभावसत्त्वादव्याप्तिः(३)। न च तद्दोषवार-णायाऽनवच्छेदकत्वानुसरणं क्रियतामिति वाच्यम्। अभाववान् प्रमेयत्वादित्यादौ घटाभावा-भावमादायाऽव्याप्तेर्दुर्वारत्वादिति ध्येयम्॥

## इत्यनवच्छेदकत्वानुसरणविचारः।

[१] (२)पृष्ठे साध्यतावच्छेदकभिन्नो य इति।

ननु साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मावच्छिन्नत्वगगनत्वानवच्छिन्नत्वोभयाभावव-त्त्वमेव 'साध्यतावच्छेदकातिरिक्तो यः साध्यवृत्तिधर्मस्तदनवच्छिन्नेत्यनेन' विवक्षणीयम्, तथाच गगनाभावमादायैव प्रमेयसाध्यकस्थले लक्षणसमन्वयसम्भवादेतत्कल्पपरित्यागोऽनुचितः। न च वह्निगगनोभयाभावीयप्रतियोगितायां गगनत्वानवच्छिन्नत्वविरहेणोभयाभावसत्त्वात्तदीयप्रति-

---

(१) साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यम्, प्रतियोगिता च सम्बन्धविशेषावच्छिन्ने-त्यभिप्रायेण।

(२) अनुगमस्तु स्वसमानकालीननिरवच्छिन्नविशेषणताविशेषसम्बन्धावच्छिन्नजगद्वृत्तित्वसम्बन्धा-वच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वप्रतियोगिताग्रहविरोधिताघटकसम्बन्धावच्छिन्नसाध्याधि-करणवृत्तित्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन यत्किंचिदभावविशिष्ट-हेत्वधिकरणवृत्तिर्योऽभावस्तत्प्रतियोगिताशून्यसाध्यसामानाधिकरण्यमिति।

(३) ननु स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वं विवक्षणीयम्, एवं च कपि-संयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यदलस्यापि सार्थक्यात्। न च घटाभाव-भिन्नमभाववत्त्वादित्यादौ घटाभावभेदाभावस्य घटाभावस्वरूपत्वे साध्यवद्वृत्तित्वस्य जगद्वृत्तिभिन्नत्वस्य चोभयोः सत्त्वेन तस्य लक्षणाऽघटकत्वादन्याभावमादायाऽतिव्याप्तिः, एवं गगनाभावभेदमहाकालाभावभेदान्यतरसा-ध्यकवाच्यत्वहेतावव्याप्तिः, तत्र गगनाभावभेदाभावस्य गगनाभावस्वरूपस्य साध्यवद्वृत्तित्वेऽपि जगद्वृत्तिभि-न्नत्वविरहादिति वाच्यम्। साध्यवन्निरूपितवृत्तितावच्छेदकीभूतानुयोगितावत्त्वजगन्निरूपितवृत्तितावच्छेद-कीभूतानुयोगितावदन्यत्वोभयाभावस्य हेतुमन्निष्ठाभावप्रतियोगितायां निवेशनीयत्वात् स्वनिरूपितत्वस्वनि-ष्ठानुयोगितानिरूपितत्वोभयसम्बन्धेनोभयानुयोगितावत्त्वं बोध्यम्, तथाच न दोष इति चेद्।

अभाववान् मेयत्वादित्यादौ घटत्वाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाऽव्याप्तिरतः साध्य[illegible]ावच्छेदकतादि[illegible] इति ध्येयम्।

योगिताशून्यत्वस्य साध्ये विरहादव्याप्तिरिति वाच्यम् । 'गगनत्वानवच्छिन्नत्वे'त्यनेन गगनत्वेतरधर्मावच्छिन्नत्वस्य विवक्षितत्वान्नाव्याप्तिः, तथाहि उभयाभावीयप्रतियोगितायां गगनत्वातिरिक्तवह्नित्वावच्छिन्नत्वसत्त्वेन निरुक्तोभयाभावविरहेण तस्य लक्षणघटकत्वात् । ननु तादात्म्येन प्रमेयवान् गगनत्वादित्यादौ गगनाभावस्य लक्षणाऽघटकतयाऽभावाप्रसिद्ध्याऽव्याप्तिरिति चेन्न । 'गगनत्वातिरिक्तधर्मावच्छिन्नत्वे'त्यनेनाऽवृत्तिमात्रवृत्तिधर्मातिरिक्तधर्मावच्छिन्नत्वस्य विवक्षितत्वात् , तथाच महाकालाद्यभावमादाय लक्षणसमन्वयः । अवृत्तिमात्रवृत्ति(कालत्वादि) धर्मातिरिक्तं यद् (घटत्वादि) तदवच्छिन्नत्वस्य तत्प्रतियोगितायां विरहेणोभयाभावसत्त्वात् । न च गगनमहाकालान्यतरस्य तादात्म्येन साध्यतायां गगनमहाकालान्यतरत्वहेतौ प्रत्येकं गगनाभावस्य महाकालाभावस्य च लक्षणघटकतया तदीयप्रतियोगिताशून्यत्वस्य साध्ये विरहादव्याप्तिरिति वाच्यम् । अनवच्छेदकत्वानुसरणेनैव तत्राऽव्याप्तिवारणाद् , गगनाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकीभूतान्यतरत्वे सत्त्वात्(१), तथाचैतत्कल्पस्य निर्दोषत्वमिति चेन्न ।

गगनत्वरूपतादृशान्यतमाभावमादायाऽनवच्छेदकत्वानुसरणेऽपि तद्दोषतादवस्थ्यादिति ध्येयम् ।

एवं वन्ह्यभावत्वस्य साध्यतायां प्रतियोगितासम्बन्धेन वह्निहेतुकस्थलेऽपि महानसीयवह्निनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नतादृशनिरूपकतामादायाऽव्याप्तिरतः पारिभाषिकानुसरणमिति ध्येयम् ।

[ १ ] तथापि हेतुतावच्छेदकधर्मे इति । ननु हेतुसमानाधिकरणाभावपदेन 'हेतुतावच्छेदकतात्वव्यापकानिरूपकतानिरूपिताऽधिकरणतावद्वृत्त्यभाव' इत्यर्थकरणेनैव सामञ्जस्य

---

(१) न च प्रमेयाभाववान् वाच्यत्वादित्यादौ साध्यतावच्छेदकातिरिक्ताऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं यत्साध्यवृत्तिरूपं तद्वृत्तित्व-अवृत्तिमात्रवृत्तिधर्मातिरिक्तधर्मावच्छेद्यत्वोभयाभावस्यैव विवक्षितत्वात् , तथाच गगनाभावमादायैव लक्षणसंगतिः । ननु तथापि तादात्म्येन गगनवान् शब्दादित्यादौ गगनमहाकालोभयाभावीयप्रतियोगितायामवृत्तिमात्रवृत्तिधर्मातिरिक्तधर्मावच्छेद्यत्वविरहेणोभयाभावसत्त्वात्तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विरहादव्याप्तिरिति चेन्न । गगनत्वगतैकत्वातिरिक्तमहाकालत्वगतैकत्वातिरिक्तं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नं साध्यवृत्तिरूपं तदवृत्तित्वस्य प्रतियोगितायां विवक्षितत्वात् , तथाच तादृशाभावप्रतियोगितायां गगनत्वमहाकालत्वप्रमेयत्वगतत्वत्रित्वे सत्त्वेन तादृशरूपावृत्तित्वविरहान्न तमादायाऽव्याप्तिरिति ।

अथ गगनविषयकं सत् महाकालविषयकं सत् यद् 'गगनवान् महाकालवान् प्रमेयवांश्चे'त्याकारकसमूहालम्बनज्ञानं तादृशज्ञानत्वहेतुके विषयितया प्रमेयसाध्यकस्थले गगनाभावे महाकालाभावे च प्रतियोगिवैयधिकरण्यविरहेण घटाद्यभावे च तादृशरूपावृत्तिप्रतियोगिकत्वस्य विरहेण तादृशरूपावृत्तिप्रतियोगिताकप्रतियोगिव्यधिकरणाऽभावाप्रसिद्ध्याऽव्याप्तिर्दुर्वारा । यदि च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं गगनत्वगतैकत्वातिरिक्तं यद्धेत्वधिकरणवृत्तितावच्छेदकरूपवृत्ति रूपं तदवृत्तित्वस्य प्रतियोगितायां विवक्षणान्नोक्तदोषः घटाभावस्य लक्षणघटकत्वादित्युच्यते, तदा प्रमेयवान् नित्यज्ञानत्वादित्यादौ नित्यज्ञानान्यत्ववैशिष्ट्यघटत्वगतद्वित्वस्य तादृशरूपभिन्नरूपान्तर्गततया तदवृत्तित्वस्य नित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायामपि विरहेणाऽभावाऽप्रसिद्ध्याऽव्याप्तिः । न च हेत्वधिकरणवृत्तीत्यादिकं परित्यज्य हेत्वधिकरणवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं विवक्षणीयम् , नित्यज्ञानान्यत्ववैशिष्ट्यघटत्वगतद्वित्वे तादृशरूपाभिन्नत्वसत्त्वेऽपि हेत्वधिकरणवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विरहेण [illegible] वाच्यम् । वह्नि-

रूपादिसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावमादाय(१) वा लक्षणसमन्वयः। असम्भववारणाय जगद्वृत्तिभिन्नत्वदलम्। व्यभिचारिण्यतिव्याप्तिवारणाय साध्यवद्वृत्तित्वदलम्। न च व्यधिकरणसम्बन्धेन साध्याभावस्य जगद्वृत्तितया तादृशाभावमादायैव व्यभिचारिण्यतिव्याप्तिवारणसम्भवे साध्यवद्वृत्तित्वस्य वैयर्थ्यमिति वाच्यम्। समवायेन प्रमेयसाध्यकव्यभिचारिणि वाच्यत्वादिहेतावतिव्याप्तिवारणाय तदावश्यकत्वात्। न च संयोगेन द्रव्यस्याऽव्याप्यवृत्तितया संयोगेन महानसीयवह्न्यभावे जगद्वृत्तित्वसत्त्वेनोभयाभावसत्त्वादव्याप्तिरिति वाच्यम्। जगद्वृत्तित्वस्य निरवच्छिन्नस्वरूपसम्बन्धेन निवेशात्। न च धूमाभावे जगद्वृत्तिभिन्नत्वस्य कालिकेन साध्यवद्वृत्तित्वस्य चोभयस्य सत्त्वेन धूमाभावस्य लक्षणाऽघटकतया धूमवान् वह्नेरित्याद्यतिव्याप्तिरिति वाच्यम्। साध्यवद्वृत्तित्वस्यापि स्वरूपेण निवेशात्। यदि च धूमाभावस्याऽव्याप्यवृत्तित्वे स्वरूपेण साध्यवद्वृत्तित्वसत्त्वेन लक्षणाऽघटकत्वादतिव्याप्तितादवस्थ्यम् इत्युच्यते, तदा निरवच्छिन्नस्वरूपेणैव निवेशनीयमिति(२) चेन्न।

घटत्वाभावपटत्वाभावान्यतरवान् घटत्वान्यतरस्मादित्यादौ घटत्वस्वरूपाभावस्य स्वरूपसम्बन्धेन साध्यवद्वृत्तित्वविरहेण तत्प्रयुक्तोभयाभावसत्त्वादव्याप्तिः(३)। न च तद्दोषवारणायाऽनवच्छेदकत्वानुसरणं क्रियतामिति वाच्यम्। अभाववान् प्रमेयत्वादित्यादौ घटाभावाभावमादायाऽव्याप्तेर्दुर्वारत्वादिति ध्येयम्॥

## इत्यनवच्छेदकत्वानुसरणविचारः।

[१] (२)पृष्ठे साध्यतावच्छेदकभिन्नो य इति।

ननु साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मावच्छिन्नत्वगगनत्वानवच्छिन्नत्वोभयाभाववत्त्वमेव 'साध्यतावच्छेदकातिरिक्तो यः साध्यवृत्तिधर्मस्तदनवच्छिन्नेत्यनेन' विवक्षणीयम्, तथाच गगनाभावमादायैव प्रमेयसाध्यकस्थले लक्षणसमन्वयसम्भवादेतत्कल्पपरित्यागोऽनुचितः। न च वह्निगगनोभयाभावीयप्रतियोगितायां गगनत्वानवच्छिन्नत्वविरहेणोभयाभावसत्त्वात्तदीयप्रति-

(१) साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यम्, प्रतियोगिता च सम्बन्धविशेषावच्छिन्नेत्यभिप्रायेण।

(२) अनुगमस्तु स्वसमानकालीननिरवच्छिन्नविशेषणताविशेषसम्बन्धावच्छिन्नजगद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वप्रतियोगिताग्रहविरोधिताघटकसम्बन्धावच्छिन्नसाध्याधिकरणवृत्तित्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन यत्किंचिदभावविशिष्टहेत्वधिकरणवृत्तिर्योऽभावस्तत्प्रतियोगिताशून्यसाध्यसामानाधिकरण्यमिति।

(३) ननु स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वं विवक्षणीयम्, एवं च कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यदलस्यापि सार्थक्यात्। न च घटाभावभिन्नभाववत्त्वादित्यादौ घटाभावभेदाभावस्य घटाभावस्वरूपत्वे साध्यवद्वृत्तित्वस्य जगद्वृत्तिभिन्नत्वस्य चोभयोः सत्त्वेन तस्य लक्षणाऽघटकत्वादन्याभावमादायाऽतिव्याप्तिः, एवं गगनाभावभेदमहाकालाभावभेदान्यतरसाध्यकवाच्यत्वहेतावव्याप्तिः, तत्र गगनाभावभेदाभावस्य गगनाभावस्वरूपस्य साध्यवद्वृत्तित्वेऽपि जगद्वृत्तिभिन्नत्वविरहादिति वाच्यम्। साध्यवन्निरूपितवृत्तितावच्छेदकीभूतानुयोगितावत्त्वजगन्निरूपितवृत्तितावच्छेदकीभूतानुयोगितावदन्यत्वोभयाभावस्य हेतुमन्निष्ठाभावप्रतियोगितायां निवेशनीयत्वात् स्वनिरूपितत्वस्वनिष्ठानुयोगितानिरूपितत्वोभयसम्बन्धेनोभयानुयोगितावत्त्वं बोध्यम्, तथाच न दोष इति चेद्।

अभाववान् मेयत्वादित्यादौ घटत्वाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाऽव्याप्तेरतः साध्यतावच्छेदकतादिरित्यादिविशेष इति ध्येयम्।

योगिताशून्यत्वस्य साध्ये विरहादव्याप्तिरिति वाच्यम् । 'गगनत्वानवच्छिन्नत्वे'त्यनेन गगनत्वेतरधर्मावच्छिन्नत्वस्य विवक्षितत्वान्नाव्याप्तिः, तथाहि उभयाभावीयप्रतियोगितायां गगनत्वातिरिक्तवह्नित्वावच्छिन्नत्वसत्त्वेन निरुक्तोभयाभावविरहेण तस्य लक्षणघटकत्वात् । ननु तादात्म्येन प्रमेयवान् गगनत्वादित्यादौ गगनाभावस्य लक्षणाऽघटकतयाऽभावाप्रसिद्ध्याऽव्याप्तिरिति चेन्न । 'गगनत्वातिरिक्तधर्मावच्छिन्नत्वे'त्यनेनाऽवृत्तिमात्रवृत्तिधर्मातिरिक्तधर्मावच्छिन्नत्वस्य विवक्षितत्वात् , तथाच महाकालाद्यभावमादाय लक्षणसमन्वयः । अवृत्तिमात्रवृत्ति(कालत्वादि) धर्मातिरिक्तं यद् (घटत्वादि) तदवच्छिन्नत्वस्य तत्प्रतियोगितायां विरहेणोभयाभावसत्त्वात् । न च गगनमहाकालान्यतरस्य तादात्म्येन साध्यतायां गगनमहाकालान्यतरत्वहेतौ प्रत्येकं गगनाभावस्य महाकालाभावस्य च लक्षणघटकतया तदीयप्रतियोगिताशून्यत्वस्य साध्ये विरहादव्याप्तिरिति वाच्यम् । अनवच्छेदकत्वानुसरणेनैव तत्राऽव्याप्तिवारणाद्, गगनाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकीभूतान्यतरत्वे सत्त्वात्(१), तथाचैतत्कल्पस्य निर्दोषत्वमिति चेन्न ।

गगनत्वरूपतादृशान्यतमाभावमादायाऽनवच्छेदकत्वानुसरणेऽपि तद्दोषतादवस्थ्यादिति ध्येयम् ।

एवं वन्ह्यभावत्वस्य साध्यतायां प्रतियोगितासम्बन्धेन वह्निहेतुकस्थलेऽपि महानसीयवह्निनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नतादृशनिरूपकतामादायाऽव्याप्तिरतः पारिभाषिकानुसरणमिति ध्येयम् ।

[ १ ] तथापि हेतुतावच्छेदकधर्मे इति । ननु हेतुसमानाधिकरणाभावपदेन 'हेतुतावच्छेदकतात्वव्यापकनिरूपकतानिरूपिताऽधिकरणतावद्वृत्त्यभाव' इत्यर्थकरणेनैव सामञ्जस्य

---

(१) न च प्रमेयाश्रयवान् वाच्यत्वादित्यादौ साध्यतावच्छेदकातिरिक्ताऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं यत्साध्यवृत्तिरूपं तद्वृत्तित्व-अवृत्तिमात्रवृत्तिधर्मातिरिक्तधर्मावच्छेद्यत्वोभयाभावस्यैव विवक्षितत्वात् , तथाच गगनाभावमादायैव लक्षणसंगतिः । ननु तथापि तादात्म्येन गगनवान् शब्दादित्यादौ गगनमहाकालोभयाभावीयप्रतियोगितायामवृत्तिमात्रवृत्तिधर्मातिरिक्तधर्मावच्छेद्यत्वविरहेणोभयाभावसत्त्वात्तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विरहादव्याप्तिरिति चेन्न । गगनत्वगतैकत्वातिरिक्तमहाकालत्वगतैकत्वातिरिक्तं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं साध्यवृत्तिरूपं तदवृत्तित्वस्य प्रतियोगितायां विवक्षितत्वात् , तथाच तादृशाभावप्रतियोगितायां गगनत्वमहाकालत्वप्रमेयत्वगतत्वभिन्ने सत्त्वेन तादृशरूपावृत्तित्वविरहान्न तमादायाऽव्याप्तिरिति ।

अथ गगनविषयकं सत् महाकालविषयकं सत् यद् 'गगनवान् महाकालवान् प्रमेयवांश्चे'त्याकारकसमूहालम्बनज्ञानं तादृशज्ञानत्वहेतुके विषयितया प्रमेयसाध्यकस्थले गगनाभावे महाकालाभावे च प्रतियोगिवैयधिकरण्याविरहेण घटाद्यभावे च तादृशरूपावृत्तिप्रतियोगिकत्वस्य विरहेण तादृशरूपावृत्तिप्रतियोगिताकप्रतियोगिव्यधिकरणाऽभावाप्रसिद्ध्याऽव्याप्तिर्दुर्वारा । यदि च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाभिन्नं गगनत्वगतैकत्वातिरिक्तं यद्धेत्वधिकरणवृत्तितावच्छेदकरूपवृत्ति रूपं तदवृत्तित्वस्य प्रतियोगितायां विवक्षणान्नोक्तदोषः घटाभावस्य लक्षणघटकत्वादित्युच्यते, तदा प्रमेयवान् नित्यज्ञानत्वादित्यादौ नित्यज्ञानान्यत्ववैशिष्ट्यघटत्वगतद्वित्वस्य तादृशरूपभिन्नरूपान्तर्गततया तदवृत्तित्वस्य नित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायामपि विरहेणाऽभावाप्रसिद्ध्याऽव्याप्तिः । न च हेत्वधिकरणवृत्तीत्यादिकं परित्यज्य हेत्वधिकरणवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं विवक्षणीयम् , नित्यज्ञानान्यत्ववैशिष्ट्यघटत्वगतद्वित्वे तादृशरूपाभिन्नत्वसत्त्वेऽपि हेत्वधिकरणवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विरहेण ... वाच्यम् । वह्नि-

एतावान्प्रयासोऽनुचितः, निरूपकतायां व्यापकत्वं च स्वनिरूपितावत्त्वसम्बन्धेन, अवच्छेदकतावत्ता च प्रसिद्धचतुष्टयसम्बन्धेनैव, तथाच धूमत्वावच्छिन्नहेतुतावच्छेदकतात्वव्यापकत्वस्य महानसीयत्वधूमत्वावच्छिन्ननिरूपकतायां सत्त्वेन तामादाय लक्षणसमन्वयः, द्रव्यं विशिष्टसत्त्वादित्यादौ च वैशिष्ट्यसत्तात्वधर्मद्वयावच्छिन्ननिरूपकताया एव तथात्वेन शुद्धसत्तात्वावच्छिन्ननिरूपकतायाश्चाऽतथात्वाच्च दोष इति कथमधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिदानं सङ्गच्छते इति चेन्न ।

वह्निमान् धूमादित्यत्रैव धूमकालीनप्रमेयत्वावच्छिन्ननिरूपकतामादाय धूमकालीनद्रव्यत्वावच्छिन्ननिरूपकतामादाय वाऽव्याप्तिप्रसङ्गात्। तादृशनिरूपकताया अपि स्वनिरूपितपरंपरया धूमत्वनिष्ठावच्छेदकतावत्त्वसम्बन्धेन हेतुतावच्छेदकतात्वव्यापकत्वात् तादृशनिरूपकतानिरूपिताधिकरणतायाः भूतलादावपि सत्त्वेन तत्र वह्न्यभावसत्त्वात्। न च स्वनिरूपितसाक्षादवच्छेदकतावत्त्वसम्बन्धेन तादृशव्यापकत्वस्य विवक्षितत्वान्नोक्तदोषावकाशः(१) । अथवा हेतुताविशिष्टनिरूपकताया एव लक्षणे निवेशः, वै० स्वसामानाधिकरण्यस्वनिरूपितावच्छेदकतात्वव्यापकत्वोभयसम्बन्धेन, व्यापकता च पूर्ववद् , तथाच धूमकालीनप्रमेयत्वद्रव्यत्वाद्यवच्छिन्ननिरूपकताधारणसम्भवेऽपि धूमनिष्ठैव तादृशनिरूपकता उभयसम्बन्धेन हेतुताविशिष्टा भवति न तु घटादिनिष्ठा तस्याः स्वसामानाधिकरण्याभावात् इति तन्निरूपिताधिकरणतायाः पर्वतादावेव सत्त्वेन साध्याभावस्य लक्षणाऽघटकत्वादिति वाच्यम् । वह्निविषयकज्ञानत्वस्य यत्र साध्यता विषयितया वह्नेर्हेतुता तत्र हेतुतावच्छेदकतात्वव्यापिका यथा विषयित्वसम्बन्धावच्छिन्ना वह्निनिष्ठा निरूपकता तथा विषयित्वसम्बन्धावच्छिन्ना महानसीयवह्निनिष्ठापि भवति तादृशनिरूपकताकाधिकरणताया महानसीयवह्निविषयकज्ञाने सत्त्वेन तत्र वह्निज्ञानत्वाभावसत्त्वात् ।

[२] नन्वत्र यन्निष्ठाभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकं तदेव हेत्वधिकरणत्वमस्तु किमुभयाभावनिवेशेन। नचैवं वह्निमान् धूमादित्यत्राऽव्याप्तिः, कालिकेन धूमाभावस्यापि पर्वत-

---

मान् धूमादित्यादौ वह्निज्ञानोभयस्य पर्वतादावसत्त्वेन वह्नित्वज्ञानत्वाद्युभयत्वे साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वमसत्त्वेऽपि हेत्वधिकरणपर्वतादिनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वविरहेण तादृशोभयाभावमादायाऽव्याप्तेः । एवं हेत्वधिकरणवृत्तित्वस्य 'साध्यतावच्छेदकसम्बन्धेन निवेशोऽप्यावश्यकः, तथासति वह्निप्रतियोगिकसंयोगेन वह्निसाध्यकस्थले साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नतादृशरूपाऽप्रसिद्ध्याऽव्याप्तेः । 'साध्यतावच्छेदकसम्बन्धावच्छिन्ने'त्यनेन साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य साध्यनिष्ठस्वोभयाभावत्वस्य प्रतियोगितायां विवक्षणे तत्रैव महानसीयवह्न्यभावमादायाऽव्याप्तिर्दुर्वारत्वादिति ध्येयम् ।

(१) तादृशनिरूपकतानिरूपितसाक्षादवच्छेदकत्वस्य द्रव्यत्वादावेव सत्त्वं नतु धूमत्वादाविति हेतुतावच्छेदकतात्वव्यापकत्वस्य तादृशनिरूपकतायां विरहेणाऽव्याप्तिविरहादिति भावः । परन्तु वह्निमान् जलकालीनधूमादित्यादौ हेतुतावच्छेदकता धूमत्वे जलत्वे चाऽस्ति तत्र तादृशसम्बन्धेन निरूपकताया असत्त्वेनाऽप्रसिद्ध्याऽव्याप्तिः । न च व्याप्यताघटकावच्छेदकतायामपि साक्षान्निरूपितत्वस्य निवेशान्नाव्याप्तिरिति वाच्यम् । वह्निमान् महानसीयवह्निवृत्तित्वविशिष्टजातिमत इत्यादौ हेतुतानिरूपितावच्छेदकता साक्षाज्जातावेव, एवं च तादृशावच्छेदकतात्वव्यापकत्वस्य शुद्धजात्यवच्छिन्ननिरूपकतायां सत्त्वात् , तन्निरूपिताधिकरणतावति जलादौ वह्न्यभावस्य विद्यमानत्वादव्याप्तिः । किञ्च हेतुताविशिष्टत्वस्य प्रमेयावच्छिन्ननिरूपकतायां सत्त्वेनाऽसम्भवप्रसङ्गात् । एकधर्मावच्छिन्ननिरूपकताया ऐक्यमते प्रमेयत्वावच्छिन्ननिरूपकतामादाय पूर्वोक्तदोषोऽथवाकल्पेऽपि बोध्य इति ध्येयम् ।

वृत्तित्वादिति वाच्यम् । यन्निष्ठत्वस्य स्वरूपसम्बन्धेन विवक्षणात् । यद्यप्येवं सति तद्वृत्तत्ववान् तत्कपिसंयोगादित्यत्राऽव्याप्तिः हेतुतावच्छेदकीभूततत्कपिसंयोगत्वे मूलावच्छेदेन तद्वृत्तवृत्त्यभावप्रतियोगितावच्छेदकत्वस्यैव सत्त्वेन यत्पदेन तद्वृत्तत्वस्य धारणाऽसम्भवात् । तथापि निरवच्छिन्नस्वरूपेण यद्वृत्तित्वस्य विवक्षणान्न दोषः । न चैवमपि घटत्वाभाववान् घटभेदादित्यादावव्याप्तिः, हेतौ घटवृत्तित्वस्य निरवच्छिन्नविशेषणतयाऽसत्त्वेन अन्याभावमादाय तत्प्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वाद्यत्पदेन घटस्यापि धर्तुं शक्यत्वादिति वाच्यम् । स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेनैव यद्वृत्तित्वस्य निवेशात् । अथवा स्वाश्रयाधिकरणत्वस्यापि यत्पदार्थे निवेशेन घटस्य तथात्वाभावात् । न च गगनाभावत्वाभाववान् गगनाभावभेदादित्यादावव्याप्तिः, गगनाभावभेदाभावस्य गगनाभावस्वरूपत्वेन जगद्वृत्तितया हेत्वधिकरणेऽपि सत्त्वेन यत्पदार्थाप्रसिद्धिरिति वाच्यम् । यन्निरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके विवक्षणात् । न च गगनाभावभेदाभावस्य गगनाभावस्वरूपतया जगद्वृत्तितावच्छेदकत्वसम्भवोऽपीति वाच्यम् । यन्निरूपितवृत्तितावच्छेदकीभूतानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वस्यैव हेतुतावच्छेदके विवक्षणात्, वै० स्वनिरूपितत्वस्वनिष्ठानुयोगितानिरूपितत्वोभयसम्बन्धेन, तथाच गगनाभावभेदाभावीयप्रतियोगितायास्तन्निष्ठानुयोगितानिरूपितत्वेन तद्व्युदासः ।

[ ३ ] अथात्र यन्निष्ठाभावीयप्रतियोगिता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथाऽयमात्मा ज्ञानादित्यादौ हेत्वधिकरणे आत्मनि संयोगादिना ज्ञानाभावसत्त्वेनाऽव्याप्त्यापत्तेः, एवं सति वृत्त्यनियामकसम्बन्धेन हेतुतास्थले तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिरतो यन्निष्ठभेदीयप्रतियोगितानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकत्वाभाव एव हेतौ निवेशनीयः, वृत्त्यनियामकसम्बन्धावच्छिन्नत्वस्य प्रतियोगितायामस्वीकारेऽपि अवच्छेदकतायां तस्य सर्वैः स्वीकारादिति चन्न ।

[क]तत्पर्वतानुयोगिकधूमयोगेन धूमहेतुकस्थलेऽव्याप्तिः, यद्वृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धेः । यदि च प्रतियोगितावच्छेदकतासामान्ये यद्धर्मावच्छिन्नत्वयत्सम्बन्धावच्छिन्नत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकत्वविवक्षणे तद्दोषवारणम्, अथवा यद्वृत्तिभेदप्रतियोगितावच्छेदकतायां हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वहेतुनिष्ठत्वोभयाभावविवक्षणे(१) तद्दोषवारण-

(१) यद्यप्येवमपि प्रमेयत्वावच्छिन्नप्रतियोगिकसंयोगेन प्रमेयहेतुकस्थलेऽव्याप्तिस्तदवस्थैव, तथापि हेतुनिष्ठत्वस्थाने हेतुतावच्छेदकावच्छिन्नत्वाविवक्षणान्न दोषः, एवं सति प्रमेयावच्छिन्नप्रतियोगिकस्वरूपेण प्रमेयवतो हेतुतास्थलेऽव्याप्तिस्तदवस्थैव । न च तत्राऽव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नत्वस्थाने हेतुहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमेवोच्यतामिति वाच्यम् । प्रमेयवद्धेतुकस्थले हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य अवश्यक्लृप्ततत्तद्व्यक्तिगतैकत्वेष्वेव कल्प्यत्वेनाऽव्याप्तेर्दुर्वारत्वात्, अतिरिक्ते प्रमाणाभावात् । न च हेतुतावच्छेदकव्यापकत्वघटित एवोभयाभावो निवेश्य इति वाच्यम् । वह्निमान् प्रमेयधूमादित्यादावव्याप्त्यापत्तेः । तत्र गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वाद्यत्पदेन ह्रदस्यापि धर्तुं शक्यत्वात् । न च हेतुतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदके अनवच्छेदकत्वविवक्षणान्नैव दोष इति वाच्यम् । यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावेऽवश्यं प्रतियोगिवैयधिकरण्यं निवेश्यम्, अन्यथा वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः । तच्च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमेव, अन्यथा द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्त्यापत्तेः । एवं सति सामान्यधर्मावच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति चिन्तनीयम् ॥

मिति विभाव्यते, तदा गौरवम्। [ख]वस्तुतस्तु महाकालनिरूपितकालिकसम्बन्धेन घटस्य यत्र हेतुता महाकालत्वस्य साध्यता तत्राऽव्याप्तिः, तत्र यत्पदेन महाकालस्य धारणासम्भवात्, तद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वाप्रसिद्धेरिति ध्येयम्।

[४] ननु हेतुमद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धसामान्याभावस्यैव साध्यतावच्छेदके निवेशेनैव सामञ्जस्ये अधिकरणत्वाऽप्रवेशेन पारिभाषिकार्थकरणं विरुद्धम्। न च तदप्रवेशे द्रव्यं विशिष्टसत्त्वादित्यादौ गुणस्यापि विशिष्टसत्तावत्तया गुणवृत्त्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिरिति वाच्यम्। विशिष्टसत्तात्वेन यथा गुणाभावो व्यधिकरणधर्मावच्छिन्नाभावस्तथा विशिष्टसत्तावच्छिन्नगुणनिष्ठावच्छेदकताकप्रतियोगिताकाभावोपि व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकः, एवं च तस्याऽस्वीकाराद्द्रव्यघटिताभावस्यैव धर्त्तव्यत्वादिति चेन्न।

अभावप्रत्ययो हि विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते इति नियमादुक्तप्रतीतौ विशिष्टवैशिष्ट्यावगाहित्वमावश्यकम्, तत्त्वं च तद्धर्मावच्छिन्ननिरूपकताकाधिकरणत्वम्, तद्धर्मविशिष्टप्रतियोगिकसम्बन्धानुयोगित्वम् वा, तथाच धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतौ अधिकरणे धूमत्वविशिष्टवैशिष्ट्यावगाहित्वस्य तद्धर्मपर्याप्तावच्छेदकताकनिरूपकताकाधिकरणतात्मकतया पुनरप्रसिद्धितादवस्थ्यात्।

[५] अथाधिकरणे विशिष्टवैशिष्ट्यावगाहित्वं प्रकृतहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वावगाहित्वमेव, न तु रूपवृत्तिनिरूपकताकाधिकरणत्वावगाहित्वम्, एवं च धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकमहानसीयधूमत्वावच्छिन्ननिरूपकाधिकरणत्वादिव्यक्तीनां महानसादौ सत्त्वेनाधिकरणत्वांशे निरुक्तविशिष्टवैशिष्ट्यावगाहिप्रतीतिसिद्धाभावस्य प्रसिद्धतया तस्य साध्यतावच्छेदके सत्त्वान्नोक्तदोषावकाश इति चेत्।

अत्रोच्यते। वह्नित्वागतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयित्वसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वस्य महानसीयवह्निविषयकज्ञाने सत्त्वेन तज्ज्ञानत्ववान् वह्नेरित्यादौ निरुक्तरीत्याऽधिकरणांशे विशिष्टवैशिष्ट्यावगाहिवह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभावस्य साध्यतावच्छेदकेऽसत्त्वादव्याप्तिभिया निरुक्तरूपवृत्तिनिरूपकताकाधिकरणत्वमेव निवेशनीयम्, तथाचाऽप्रसिद्धिस्तदवस्थैवेति ध्येयम्॥

लुप्तप्रायसमस्तदिव्यनिगमान् योऽपालयत्प्रोढित-
स्तं तातं प्रभुदत्तमागमविदं विद्वच्छिरोभूषणम्॥
वादीन्द्रद्विपदारणेऽतिनिपुणं कण्ठीरवं भीषणम्
श्रीवामाचरणं गुरुं च सुधियां मान्यं प्रणम्याऽऽदरात्॥ १॥
आरब्धा जगदीशवाक्यविवृतिर्गङ्गाऽभिधा निर्मला
सा विघ्ना(?)लिमध्यगा प्रियतमा मध्ये न विश्राम्यतात्॥
इत्येवं जगदीशतः सुबहुशः संप्रार्थनामालपन्
सिद्धान्तीयवचोऽम्बुधिं सुमनसां मोदाय प्राकाशयम्॥ २॥



समाप्तमिदं सिद्धान्तलक्षणपरिशिष्टक्रोडपत्रम्।

॥ श्रीः ॥

# शुद्धिपत्रम्

गुरोः श्री शिवदत्तस्य प्रणम्य चरणद्वयम् ।
नीतिनाथाऽभिधश्छात्रः शुद्धिपत्रं प्रकल्पते ॥

## दीधितौ

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| वृक्षत्वादिसंग्र- | वृक्षत्वादित्यादिसंग्र- | | |
| सहजत एव | सहजत एव | १०० | २ |
| वोध्यम् ननु | वोध्यम्, प्रतियो-ग्यनधिकरणवृत्त्य- | | |
| | भावेति पुनरमा-वान्तार्थनिष्कर्षः | १२३ | १ |
| सिद्धति | सिद्ध्यति | १४६ | ३ |
| द्रव्यत्वा | द्रव्यत्व | १४९ | १ |

## जागदीश्याम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| दितरो | तदितरो | २५ | ७ |
| तण्डवा | तद्ण्डवा | ३० | १ |
| विधेयकां | विधेयका | ३६ | १ |
| प्रतिवै | प्रतियोगिव | ४१ | २ |
| तज्जात्यवच्छिन्न-प्रतियोगिता | तज्जात्यवच्छिन्नतत्सं-बन्धावच्छिन्नप्रतियो-गिता | ६६ | २ |
| हेतोवसिद्धि- | हेतावसिद्धि | ७४ | १ |
| सयोग | संयोग | ८५ | ६ |
| प्रयोजमाह | प्रयोजनमाह | ९७ | १३ |
| सहजत | सहजत एवेति | १०० | ४ |
| साध्यतावच्छेक्तौ | साध्यतावच्छे- | | |
| भूत | दकीभूत | १२८ | २ |
| रितिमावः | रितिभावः | १३१ | १२ |
| भूतयद्यक्ति | भूतयद्व्यक्ति | १३४ | २ |
| वच्छेद | वच्छेदक | १३० | ६ |
| वाच्यत्यादित्यादौ | वाच्यत्वादित्यादौ | १५७ | ७ |
| स्वयंमनसाखण्ड- | स्वयंमनसः खण्ड- | | |
| नात् | नात् | १६३ | ३ |
| पिण्डायोगिकत्वो | पिण्डानुयोगिकत्वो | १६८ | ७ |

## टीकायाम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| व्यापको योभेदः | व्यापको यद्भेदः | ३ | ९ |
| धिकरण्येत्यर्थ | धिकरण्यमित्यर्थं | ४ | १७ |
| वनु | ननु | ४ | १२ |
| तदन्तरय | तदन्यतरवत् | ६ | १८ |
| भयं हेतुमन्निष्ठा | भयं न हेतुमन्निष्ठा | ८ | १३ |
| तदवयवत्वदि | तदवयवत्वादि | ८ | ३० |
| तापर्याप्त्यनुगिता | ताकपर्याप्त्यनुयोगिता | १० | १७ |
| साध्यतावच्छेदकं | साध्यतावच्छेदकता-वच्छेदकं | १३ | २१ |
| दिधारण | दिसाधारणं | १४ | १५ |
| लक्षणमन्वयात् | लक्षणसमन्वयात् | १४ | १७ |
| मादायाऽव्याप्तिः | मादायाऽतिव्याप्तिः | १४ | २० |
| घट | घटत्व | १४ | २१ |
| नोभयाविरहात् | नोभयाभावविरहात् | १४ | ३४ |
| वह्नित्वतदभावस्य | वह्नित्ववदभावस्य | १५ | १३ |
| महानसीयवह्नि-मानिति | महानसीयवह्नित्व-वदानिति | १५ | १७ |
| समवाय | समन्वय | १८ | ५ |
| वैय्यधिकरण | वैय्यधिकरण्य | १७ | १५ |
| निवेशनीगम् | निवेशनीयम् | २९ | २३ |
| प्रतियोगिताणाम् | प्रतियोगितायाम् | ३० | २६ |

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| साध्यतावच्छेद- | साध्यतावच्छेदक- | | |
| कता | ताघटक | ३१ | २१ |
| प्रतियोगितावच्छेद- | प्रतियोगितावच्छेद- | | |
| कतावच्छेदकता | कताघटक | ३३ | १७ |
| पृथ्वीत्या | पृथ्वीत्वा | ३४ | २३ |
| संयोगेन | संयोगेनसाध्यतायाम् | ३४ | २६ |
| तथा | तथा | ३५ | १४ |
| धूमत्वत्वशि | धूमत्वविशि | ४० | ९ |
| निरूपिता | निरूपित | ४३ | ७ |
| यत्पदेन | यत्पदेन | ४३ | १० |
| घटाधिकरणे | घटाधिकरण | ४४ | १ |
| अधिकरणता | अधिकरणतानिरूपि- | | |
| | तनिरूपकता | ४६ | ११ |
| वह्निधूमत्वादि | वह्नित्वधूमत्वादि | ५४ | १३ |
| सामानाधिकरणस्य | सामानाधिकरण्यस्य | ५५ | १३ |
| सजीता | सजाती | ५७ | ९ |
| तायां | तायाः | ६१ | ११ |
| सार्वदाषाणां | सर्वदोषाणां | ६२ | १५ |
| शब्दत्व | शब्दत्वे | ७५ | ७ |
| अत्र | अत्र | ७६ | २९ |
| वृत्तिकत्व | वृत्तिकत्वविशिष्ट | ८२ | ६ |
| अप्रसिद्धताया | अप्रसिद्धतया | ८३ | १३ |
| तत्ववच्छेदेन | तत्त्ववच्छेदेन | ८९ | २१ |
| प्रमाविशेध्यतावान् | प्रमाविशेष्यतावान् | ९१ | २३ |
| समानाधिकरणया | समानाधिकरणत्वया | १०३ | २० |
| अभावा | अभाव | ०५ | १९ |
| सम्बन्धावच्छिन्नत्व | सम्बन्धावच्छिन्नत्व | | १६ |
| कालिनादिना | कालिकादिना | १०९ | २१ |
| एवं | एव | ११२ | २५ |
| नेश्वरदिति | नेश्वरादिति | ११९ | ३० |
| साध्यतावच्छेदक | साध्यतावच्छेदके | १३१ | १९ |
| संयुक्तांशे | संयुक्तांशे | १५७ | २० |
| संसर्गताच्छेदक- | संसर्गता | १६० | २५ |
| ताघटकसंसर्गता | | | |
| विशेषण | विशेषणा | १६४ | १३ |
| जतिरित्यादौ | जातेरित्यादौ | १६४ | २५ |
| चातित्वस्य | जातित्वस्य | १६५ | १५ |
| स्यर्थस्था | स्यर्थस्या | १६७ | १८ |
| विपयितया | विपयितयाऽभाव- | १७८ | १४ |
| | मादाया | | |
| तस्थां च | तस्यां च | १८० | १६ |

## टिप्पण्याम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| एवञ्च | एवं च | ३ | ३८ |
| नचायो | नचायो | २२ | २८ |
| अवच्छेदकरूपं | अवच्छेदकत्वरूपं | २४ | २६ |
| नोद्देश्यतवि | नोद्देश्यताव | २५ | ३० |
| परिचयार्थम् | परिचयार्थम् | २६ | ३३ |
| अवच्छेदकतावच्छेद- | अवच्छेदकतावच्छे- | | |
| कसा प्रतिमतेन | दकसाधारणीतिमतेन | २९ | ३५ |
| हेकस्थले | हेतुकस्थले | ५२ | ३९ |
| धातुन | धातुना | ५९ | २४ |
| धूमन्वयः | धूमेऽन्वयः | ६० | २२ |
| कम्बुग्रीवानि | कम्बुग्रीवादिनि | ६८ | ३५ |
| फलीतम् | फलितम् | ७३ | ३३ |
| मादाया | मादाय | ७७ | ३७ |

एतद्रीत्यैव संशोध्यं किं बहूक्त्या महामते ।
अवश्यं शिष्यतेऽशुद्धिः सूक्ष्मदृष्ट्यापि दर्शने ॥१॥

## न्याय ग्रन्थ

**कारिकावली** । विश्वनाथ न्यायपंचानन कृत 'सिद्धान्तमुक्तावली' तथा नारायण तीर्थकृत 'न्यायचन्द्रिका टी. । ढुण्ढिराज शास्त्रीकृत नोट्स (१९८१) २५-००

**न्यायबिन्दुः** । धर्मकृत । धर्मोत्तराचार्य कृत संस्कृत टीका । चन्द्रशेखर शास्त्री कृत हिन्दी टीका (१९८२) ३०-००

**न्यायवार्तिकतात्पर्यटीका** । वाचस्पति मिश्र कृत उद्योतकर के न्यायवार्तिक की टीका । सं० पण्डितराज राजेश्वर [illegible] यन्त्रस्थ

**न्यायकुसुमाञ्जलिः** । उदयनाचार्य कृत । वरदराज, [illegible] मिश्रोपाध्याय, मेघठक्कुर तथा रुचिदत्त कृत 'बोधिनी' 'प्रकाश', [illegible] प्रकाशिका' तथा 'मकरन्द' टीका एवं बच्चा झा कृत नोट्स [illegible] सं० पद्मप्रसाद भट्टाराई [illegible] ४००-००

**न्यायवार्तिकम्** । न्यायदर्शन वात्स्यायन भाष्य पर भारद्वाज उद्योतकर कृत समीक्षात्मक टीका । सं० विन्ध्येश्वरी प्रसाद द्विवेदी यन्त्रस्थ

**न्यायदर्शन** । गौतम कृत । वात्स्यायन भाष्य । पद्मप्रसाद शास्त्री और हरिराम शुक्ल द्वारा संपादित । ढुण्ढिराज शास्त्री कृत 'प्रकाशिका' हिन्दी टीका । सं० श्रीनारायण मिश्र । तृतीय संस्करण (१९८३) ४५-००

**माथुरी पंचलक्षणी** । [illegible] पंचलक्षण हरिराम शुक्ल कृत टीका तथा हरिहर शास्त्री संकलित माथुरी पंचलक्षणी कोडपत्र (१९८०) १५-००

**मा[illegible] व्याप्ति[illegible] सिंहव्याघ्रलक्षण[illegible]** । मथुरानाथ तर्कवागीश कृत । [illegible] दत्त मिश्र कृत 'गंगातरङ्गिणी' [illegible] टिप्पणी (१९८४) २५-००

**न्यायमंजरी** । अनन्त भट्टकृत । सूर्यनारायण शुक्लकृत नोट्स आदि (१९८३) ९५-००

**शब्दशक्तिप्रकाशिका** । जगदीश तर्कालंकार कृत । कृष्णकान्त विद्यावागीश कृत 'कृष्णकान्ती' टीका तथा रामभद्र सिद्धान्तवागीश [illegible] टीकाद्वय । ढुण्ढिराज शास्त्रीकृत टिप्पणी ३५-००

**विषयतावादः** । गदाधर भट्टाचार्य कृत । सं० ढुण्ढिराज शास्त्री १-००

**माथुरी तर्कप्रकरणम्** । गंगेशोपाध्याय कृत । मथुरानाथ तर्कवागीश कृत 'तत्त्वरहस्य' । [illegible] भट्टाचार्य कृत [illegible] (१९५५) ४-००

[illegible] **अवयवप्रक[illegible]** । गदाधर भट्टाचा[illegible] ज्वाला प्रसाद गौड़ कृत 'विलासिनी' टीका (१९६४) ३०-००

[illegible] **अवच्छेदकत्व[illegible]** जगदीश [illegible] कृत । दत्तात्रेय शास्त्री ओगले । [illegible] (१९६६) २५-००

**न्यायसिद्धान्तमुक्तावली** । विश्वनाथ [illegible] वल्लभाचार्य कृत 'किरणावली' टीका [illegible] तथा स्वत वैकुण्ठ शास्त्री । तृ० सं० [illegible] ३५-००

[illegible] चौखम्बा [illegible] -२२१००१